ङंगज्ञानोपायंदर्शयति प्रायशइति प्रायशोबाहुल्येनरूपस्यभेदः रूपभेदः तेन यथा रमा इंदिरा पिनाकोजगवं पिनाकस्य पुंस्त्वं अजगवक्लीबं धनुरित्यस्यपूर्वोज
॰ साहचर्यात् नपुंस्त्वं तद्विशेषविधेः क्वचित् तद्विशेषः लिंगबोधकशब्दः तस्योपादानात् विधेः यथा भेरीस्त्री दुंदुभिः पुमान् तेनभेरीतिइत्यंतोन रोचिःशो
रुभेक्लीबे क्वचिद्विशेषणेन यथा कपालोनत्परोहनुः हनो पुंस्त्वं ३ अन्नकोशे अनुक्तानांभिन्नलिंगानांभेदकथनाय द्वंद्वः एकशेषश्चनकृतः अतएवदेवतादे
नामराइतिनकृतं एतदुदाहरणं देवता दैवतानि तत्रदेवतास्त्रियांदेवता नितापुंसि एतेषां अमरपदेन साकं द्वंद्वेसति अमरपदगतमेवलिंगंस्यात् एकशेषेपि

प्रायशोरूपभेदेनसाहचर्याच्चकुत्रचित्॥ स्त्रीपुंनपुंसकंज्ञेयंतद्विशेषविधेःक्वचित् ३
भेदाख्यानायनद्वंद्वोनैकशेषोनसंकरः॥ कृतोऽत्रभिन्नलिंगानामनुक्तानांक्रमादृते ४

रूपबोधोनस्यात् अभिन्नलिंगानांतुतौकृतौ त्रिदिवत्रिदशालयाइति पादारश्म्यग्नितुर्यांशाइत्यत्रपादशब्दे एकशेषः स्थलांतरेउक्तानांभिन्नलिंगानां-
तौकृतौ यथा विद्याधरास्परोयक्षेतिमातापितरौ तथा संकरोपिनकृतः संकरोनामभिन्नभिन्नलिंगानांमिश्रता यथा स्तवइतिपुल्लिंगंप्रपठ्यस्तोत्रंक्लीबं
ठितं अग्रेचस्तुत्यादिस्त्रीलिंगम् नतुस्तुतिस्तोत्रमित्यादि एवंजनुर्जननेत्यादिकंज्ञेयं तादृशानाक्रमंविनापाठोनकृतइतिदिक् ४ ६ ६

लिंगत्रयबोधनार्थत्रिष्विति पदं दत्तं नटत्रिषु अधिकलिंगस्याभावात् न्यायसिद्धमिदं मिथुनस्त्रीपुंसौ तन्नद्वयोरिति यथा अशनिर्द्वयोः ह्लिशब्देप्युपलक्षणं अतएवाह्नि शेनयत्तत्वेसर्वं द्वयहीनेकुंकुदरेइति सगच्छते यत्निषिद्धलिंगतत् शेषलिंगकं ज्ञेयं यथा वज्रमस्त्री स्यादिति न्यायसिद्धत्वेनतन्निशेषनिषेधेशेषाभ्यनुज्ञानात् तु अतएवस्य त्वनअथआदिर्यस्याथादि त्वनंच अथादि नामपदं लिंगपदं सर्वनामपदं अव्ययपदं च पूर्वान्वयि न भवति नगर्थेत्वमथवनी जवोथशीघ्रपुंसि त्वनर्द्दे शास्त्रनायनिषुद्व्येश्नि लिंगपदं नस्यतु भियेति शिष्टपदत्वात् पुंसि अथशब्दो अथोशब्दस्याप्युपलक्षणं अएव अनुक्तो शोप्यथोहस आदिसिद्धमिति ५ स्वः अव्ययं स्वरादित्वात् स्वर्यते स्तु यतेवा स्वृशब्दोपतापयोः स्वरति शब्दायत इति वा स्वरति अमास्याउपतापयति इति सिद्धान्तः अव्ययो स्त्रीशब्दभेदेनाविष्णोर्निर्व्ययेत्रिषु आदौ मंगलार्थं पाठः स्व

**त्रिलिंग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति ॥ निषिद्धलिंगं शेषार्थं त्वन्ताथादि न पूर्वभाक् ५ स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालया: ॥ सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ६**

र्गः सुष्ठु अर्ज्यते स्वर्गः अर्ज अर्जने कर्मणि घञ् ऋज्यते स्विन्निति वा ॥ नाकः न कं सुखं अकं दुःखं तत् न विद्यते यस्मिन् नाकः प्रकृतिभावान्नलोपेन नाकस्त्रिदिवे वरे ॥ त्रिदिवं त्रयः ब्रह्मविष्णुशिवा दीव्यते अत्रेति त्रिदिवं हलश्चेति घञ् स्वर्गेपि त्रिदिवं तथापि मेदिनी ॥ त्रिदशालयः त्रिदशानां देवानामालयः द्वन्द्वसमासः ॥ सुरलोकः सुराणां लोकः ॥ द्योशब्दस्य द्यौः द्योतते स्यामिति द्यो गोशब्दवत् गोतोणित् इति वृद्धिः द्यावौ द्यावः द्याव द्यावौ द्या द्यावा द्योभ्या द्योभिरिति द्यौरव्ययमेकं ॥ द्यौदिव औत् दिवौ दिवः द्वे स्त्रियां ॥ त्रिविष्टपं क्लीबे द्यौः स्त्री स्वर्गे च गमने दिव क्लीबे नयोः स्मृत मेदिनी शक्रभवनं खं दिवं भरति त्रिरूपः शेषात् त्रिविष्टपं विशति सुकृतिनो यस्मिन्निति विष्टपं विशेः कपन् तृतीयं विष्टपं त्रिविष्टपं अयं पुंस्यपि तथा चामरमाला पिष्टपोपि ष्टपोप्यस्त्री फलनन्तनपुंसकमिति इति नव स्वर्गनामानि ६

अमराः नम्रियंते मृङ् प्राणत्यागे पचाद्यच् अमरस्त्रिदशेप्यस्ति संहारे कुलिशे द्रुमे स्त्री गुडूच्यमरावत्योः स्थूणादूर्वाजरायुषु ॥ निर्जराः जरायाः निष्क्रांताः निर्जरः
त् पुमान् देवे जरात्यक्ते च वाच्यवत् निर्जरा तु गुडूच्यां च तालपर्ण्यामपि स्त्रियाम् ॥ देवाः दिव्यंतीति देवाः पचाद्यच् देवः सुरे घने राज्ञि देवमाख्यानमिंद्रिये देवी
कृताभिषेकायां तेजनी स्पृक्कयोरपीति रु० ॥ त्रिदशाः तृतीया यौवनाख्या दशा सदा येषां त्रीन् तापान् दशंति वा दंश दशने ॥ विबुधाः विशिष्टो बुधो येषां ते विशेषेण-
बुध्यंते वा बुध अवगमने इगुपधेति कः ॥ सुराः सुरंति षुर प्रसवैश्वर्ययोः दीप्तौ च यद्वा सुरा अस्ति येषां ते यद्वा शोभनं राजंते राजृ दीप्तौ अन्येभ्योपि इति डः सुरा च-
कषमद्ययो पुल्लिंगस्त्रिदिवेशोस्यात् ॥ सुपर्वाणः सुष्टु पर्व अमावास्यादि चरितमंगुल्यादि पर्व उत्सवो येषां वा सुपर्वा नाशरे वंशे पर्व धूमसुरेपि च ॥ सुमनसः शो-

**अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः ॥ सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ७ आदितेया दिविषदो लेखा अदितिनंदनाः ॥ आ-**
**दित्या ऋभवोस्वप्ना अमर्त्या अमृतांधसः ८**

भनं मनो येषां ते सुमनाः पुष्पमालत्योः स्त्रियां नाधीरदेवयोः ॥ त्रिदिवेशाः त्रिदिवस्य ईशाः ॥ दिवौकसः दिवमोको
येषां ते दिवशब्दो अदंतः ॥ मदिरः सैरिभः शक्रभवनं खं दिवं नभ इति त्रिकांडशेषात् द्यौः ओको येषां ते इति विग्रहे दिवौकसोपि स्याद्दिवोका दिवौकाश्च देवे चापीह प
क्षिणी इति रंतिदेवात् दिवोकाश्च दिवौकाश्च पुंसि देवे च चातके ७ आदितेयाः अदित्याः अपत्यानि स्त्रीभ्यो ढक् ॥ दिविषदः दिवि सीदंति वर्तंते षद्लृ विशरणगत्यवसानेषु
सुपामादिषु चेति सत्वं द्युसदोपि तदुक्तं माघे मनः सुयेन द्युसदान्यधीयते ॥ लेखाः लेख्यंते चित्रादौ लिख अक्षरविन्यासे अकर्तरीति घञ् ग्रीवाहस्तपादेषु ति
स्रो रेखाः संत्येषामिति वा लेखो लेख्या सुरे लेखा लिपिराजिकयोर्मता ॥ अदितिनंदनाः अदितेः नंदनाः ॥ आदित्याः अदितेरपत्यानि ण्यप्रत्ययः आदित्यो भास्क

रेदेो ऊभय ऊशब्दवाच्य स्वर्ग अदितिर्वा स्वरादित्वादव्यय तत्रभवति॥ अस्वप्ना अविद्यमान स्वप्नोयेषां॥ अमर्त्या म्रियन्तेत्रेतिमर्त्य स्वार्थेयत् भूर्लोक नमर्त्या अमर्त्या ॥ अमृतअंधोन्नंयेषांते सान शब्द ८ बर्हिर्मुखा बर्हिरग्निर्मुखंयेषांते ॥ ऋतुभुज ऋतून्ऋतुभुवा भुजते क्विप्प्रत्ययात॥ गीर्वाणा गीर्वाणाइत्यपि गिरवचने स्तनप्रियत्वात् वनुयाचने कर्मण्यण् गीरेव निग्रहानुग्रहसमर्थोवाणोऽस्त्रंयेषांते॥ दानवारय दानवानामरय ॥ वृंदारका प्रशस्तवृंदंयेषां शृंगवृंदाभ्यामारकन्॥ दैवतानि पुंसिवादैवता देवता स्त्रियां इतिदेवानांनामानिषड्विंशति ९ आदित्यादयः प्रत्येकंगणदेवताःसमुदायचारिण्योदेवता आदित्याद्वादशप्रोक्ताविश्वेदेवादशस्मृता वसवश्चाष्टसंख्याता षट्त्रिंशत्तुषितामताः १ आभास्वराश्चतुःषष्टिर्वाता पंचाशदूनका महाराजिकनामा

बर्हिर्मुखा ऋतुभुजोगीर्वाणादानवारय ॥ वृंदारकादैवतानिपुंसिवादेवतास्त्रियां ९
आदित्यविश्ववसवस्तुषिताभास्वरानिला ॥ महाराजिकसाध्याश्चरुद्राश्चगणदेवता १०

नोद्विशतेविंशतिस्तथा २ साध्याद्वादशविख्यातारुद्राएकादशस्मृता विश्वेसर्वनामसंज्ञोयं विश्वः विश्वौ विश्वे विशतिकर्मस्कइति विश्वे विशप्रवेशने औणादिकःक्वन्॥ वसव वसंतीतिवसव वसनिवासेउप्रत्ययः॥ तुषिता तुष्यंति तुषतुष्टौ कितच्॥ आभास्वरा आसमंताद्भासनशीला भासृदीप्तौ स्थेशभासेतिवरच् अनिल अनत्यनेन अनप्राणधारणे इलच् अनिलोवसुवातयो ॥ महाराजिका महतीराजि पंक्तिर्येषांते यद्वा महाराजोदेवतायेषां महाराजेतिठञ्॥ साध्या-साध्नुवंतिसाधसंसिद्धौ ण्यत् साध्यास्तियेषांमत्वर्थेच् साध्योयोगान्तरेस्कुरे गणदेवविशेषेनसाधनीयेचवाच्यवत्॥ रुद्राःयेदैत्यान्सुरान् रुदिर् अश्रुविमोचने सेदीर्घश्च १०

विद्याधराः विद्यायागुटिकांजनादिविषयिण्याधराः धारकाः पचाद्यच् ॥ अप्सरसः अद्भ्यः सरंति सृगतौ असुन् ॥ यक्षः यक्ष्यते पूज्यते यक्षपूजायां कर्मणिघञ् यक्षोगुह्यकमात्रेचगुह्यकाधीश्वरेपिवा ॥ रक्षांसि रक्षंत्येभ्योरक्षांसि रक्षपालने असुन् ॥ गंधर्वाः गंधंसौरभमर्वंतीतिगंधर्वाः अर्वगतौ कर्मण्यण् शकंध्वादिः ॥ किन्नराः कुत्सिताःनराः ॥ पिशाचः पिशितमश्नाति पृषोदरादिः अशभोजने ॥ गुह्यकः गुहंति निधिंरक्षंति गुहूसंवरणे निधिंरक्षंतिये यक्षास्ते स्युर्गुह्यकसंज्ञकाइति यद्वा गुह्यंकुत्सितंकायति कैशब्दे आतइतिकः यद्वा गुह्यंगोपनीयंकंसुखंयेषामितिवा ॥ सिद्धः सिद्धिरस्यास्तीति मत्वर्थेच् ॥ भूतः भवति इष्टप्राप्नोति भूप्राप्तौ अमी विद्याधरादयः दशदेवयोनयः देवायोनिर्येषांतेदेवयोनयः देवांशका इत्यर्थः ११ असुराः अस्यंति क्षिपंतिदेवान् असुराः असुक्षेपणे असेरुरन् आसुरा इत्यपिपाठः प्रज्ञाद्यण् अ-

विद्याधराप्सरोयक्षरक्षोगंधर्वकिन्नराः ॥ पिशाचोगुह्यकःसिद्धो भूतोमीदेवयोनयः ११ असुरादैत्यदैतेयदनुजेंद्रारिदानवाः ॥ शुक्रशिष्यादितिसुताःपूर्वदेवाःसुरद्विषः १२ सर्वज्ञःसुगतोबुद्धो धर्मराजस्तथागतः ॥ समंतभद्रो भगवान्मारजिल्लोकजिज्जिनः १३

सुधुरपंतेवा ॥ दैत्याः दितेरपत्यानि ण्यः ॥ दैतेयाः पूर्ववत् ॥ दनुजाः दनोर्दनौवाजाताः ॥ इंद्रारयः इंद्रस्य अरयः ॥ दानवाः दनोरपत्यानि अण् ॥ शुक्रशिष्याः शुक्रस्य शिष्याः ॥ दितिसुताः दितेःसुताः ॥ पूर्वदेवाः पूर्वेचतेदेवाश्च यद्वापूर्वेदेवाः अन्यायाद्भ्रष्टाः पूर्वेदेवायेभ्योवा ॥ सुरद्विषः सुरान् द्विषंति द्विषअप्रीतौ सत्सूद्विषेति क्विप् इत्यसुरनामदशकं १२ सर्वज्ञः सर्वंजानातीतिज्ञाअवबोधनेकप्रत्ययः ॥ सुगतः शोभनंगतंज्ञानमस्य ॥ बुद्धः प्रशस्ताबुद्धिरस्य यद्वाबुध्यते मतिबुधीतिक्तः ॥ धर्मराजः धर्मेणराजते धर्मस्यराजेतिवा टच् ॥ तथागतः तथासत्यंगतंज्ञानंयस्य ॥ समंतभद्रः समंतंभद्रमस्यसः ॥ भगवान् भगंमहात्म्यमस्यास्ति ॥ मारजित् मारंकामंजयतीतिक्विप्तुक् ॥ लोकजित् लोकंजयतीति ॥ जिनः जयतीतिजिनः जिजयेनक्प्रत्ययः १३

पडभिज्ञ षट्अभिन ज्ञायमानानियस्यस षट्दिव्यचक्षुःश्रोत्रपरिचित्तज्ञान पूर्वनिवासानुस्मृति आत्मज्ञान वियद्गमन कायव्यूहादिसिद्धयेति यद्वा षट्‌कदानशी-
लक्षान्तिवीर्यध्यानप्रज्ञास्‌अभिज्ञाआद्यज्ञानमस्येति॥दशबल दशबलानियस्ययदाहुःदानशीलक्षमावीर्यध्यानप्रज्ञाबलानिच उपायःप्रणिधिर्ज्ञानदशबुद्धबला
नित॥अद्वयवादी अद्वयअद्वैत वदतीतस्य आवश्यके णिनिः॥विनायकः विनयतिअनुशास्तिनीञ् प्रापणे ण्वुल्‌वृद्धि आय्॥मुनींद्रःमुनिषुइन्द्र॥श्रीघन श्रियाघ-
नःपूर्णःकर्मादिषुपाठात्मणत्व॥शास्ता शास्तीति शासेस्तृन्तृच्‌वा॥मुनि मन्यते अष्टादशबुद्धस्य १४ शाक्यमुनिकः शाकवृक्षप्रतिच्छन्नवासोयस्मात्त्वचक्रि
रे तस्मादिक्ष्वाकुवंशास्तेशाक्याइति प्रथितस्मृताः शाके भवाःशाक्या दिगादित्वाद्यत् तद्वंशावतीर्णोमुनि शाक्यश्चासौमुनिश्च शाक्यसिंह शाक्यःसिंहइवउपमितमि

षडभिज्ञोदशबलोद्वयवादीविनायकः॥मुनींद्र श्रीघनःशास्ता मुनि शाक्यमुनिस्तुय १४ शाक्यसिंह सर्वार्थसिद्ध शौद्धोदनिश्चस॥
गौतमश्चार्कबंधुश्चमायादेवीसुतश्चस १५ब्रह्मात्मभू सुरज्येष्ठ परमेष्ठीपितामह॥ तिसमासः॥सर्वार्थसिद्ध सर्वार्थेषुसिद्ध निष्पन्न स
र्वार्थःसिद्धोस्येतिवा सिद्धार्थोपिपर्यायःसिद्धार्थोबुद्धसर्षपावितिशाश्वतः॥शौद्धोदनिःशुद्धोदनस्यापत्य अतइञ्॥गौतमः गौतमस्यअयंशिष्य तस्येदमित्यण्
॥अर्कबंधुः अर्कस्यबंधुः सूर्यवंशजत्वात्॥मायादेवीसुतः मायानाम्नीदेवीचतस्याःसुतः मायाशब्दस्य भाषितपुंस्कत्वा माता न प्रवर्त्त इति तुल्याधिकरणेपदस्य
शाक्यमुनेनामसप्तकं १५ ब्रह्मा बृंहति वर्धयति प्रजाइतिब्रह्मा बृहिवृद्धौ बृहतिवर्धनेवा मनिन् प्रत्ययेनस्यादादेशः॥आत्मभूः भगवत विष्णो सकाशात् आत्म
नास्वयमेववा भवतिक्विप्॥सुरज्येष्ठ सुरेषुज्येष्ठ॥परमेष्ठी परमेव्योमनि चिदाकाशेब्रह्मपदेवातिष्ठति किदितिइनि परमेस्थ तत्पुरुषेकृतिबहुलमित्यलुक्॥
पितामह लोकपितॄणामरीच्यादीनामपिपितामहः पितृव्याड्डामहच्॥

वासुदेवः वसुदेवस्यापत्यं ऋष्यंधकेत्यण् यद्वा वसतीति वासुः वासुश्चासौ देवश्च सर्वत्रासौ समस्तंच वसत्यत्रेति वेयतः ततोसौ वासुदेवेति विद्वद्भिः परिगीयतइति विष्णुपुराणात् यद्वा वसुदेवे शुद्धांतः करणे दीव्यते प्रकाशते इति शेषे इत्यण् ॥ त्रिविक्रमः त्रिषु लोकेषु गुणेषु वा विक्रमो यस्य त्रयो वा विक्रमाः पादन्यासाः यस्य २० देवकीनंदनः देवक्याः नंदनः ॥ शौरिः शूरस्यापत्यं वंशजत्वात् गणे पाठादण् बाध्वित्वाद् इञ् सौरिरपि ॥ श्रीपतिः श्रियः पतिः ॥ पुरुषोत्तमः पुरुषेषु उत्तमः पुरुषेभ्यो वा उत्तमः उत्तमश्चासौ पुरुषश्चेति तत्वं ॥ वनमाली आपादपर्यंतमाला वनमालेति सा मतेति कलिंगः सास्यास्तीति मत्वर्थे णिनिः वनं मलितुं शीलमस्येति वा मलधारणे णिनिः ॥ बलिध्वंसी बलिमसुरं ध्वंसितुं शीलमस्य बलिना पूजादिना अविद्यां ध्वंसितुं शीलमस्येति वा ॥ कंसारातिः कंसस्यारातिः ॥ अधोक्षजः अधः कृतं अक्षजं ऐंद्रियकं ज्ञानं येन

**वासुदेवस्त्रिविक्रमः २० देवकीनंदनः शौरिः श्रीपतिः पुरुषोत्तमः ॥ वनमाली बलिध्वंसी कंसारातिरधोक्षजः २१ विश्वंभरः कैटभजिद्विधुः**
**श्रीवत्सलांछनः ॥ पुराणपुरुषो यज्ञपुरुषो नरकांतकः २२ जलशायी विश्वरूपो मुकुंदो मुरमर्दनः ॥ वसुदेवोऽस्य जनकः स एवानकदुंदुभिः २३**

यद्वा अधोक्षाणां जितेंद्रियाणां जायते प्रत्यक्षो भवति अधोक्षजं ज्ञानमस्येति २१ विश्वंभरः विश्वं बिभर्ति संज्ञायां भृतृ इति खच् विश्वंभरो ऽच्युते शक्रे पुंसि विश्वंभरा क्षिति कैटभजित् कैटभमजैषीत् सत्सू इति क्विप् ॥ विधुः विध्यत्यसुरान् कुप्रत्यये संप्रसारणं ॥ श्रीवत्सलांछनः श्रीयुक्तो वत्सः श्रीवत्सः आवर्तविशेषः लांछनं यस्य शौरिः श्रीवत्सो दैत्यारिर्विष्वक्सेनजनार्दनाः इति शब्दार्णवात् ॥ पुराणपुरुषः कर्मधारयः ॥ यज्ञपुरुषः यज्ञफलदः पुरुषः ॥ नरकांतकः तन्निवारकः २२ जलशायी ॥ विश्वरूपः विश्वरूपर्यति ॥ मुकुंदः ॥ मुरमर्दनः इति विष्णोर्नामानि ॥ अस्य कृष्णस्य जनकः पिता वसुदेवः वसुषु दीव्यति इति वसुदेवः पचाद्यच् दिवु क्रीडादौ स एव वसुदेव एव आनकदुंदुभिः
आनकैर्दुंदुभिश्चोपलक्षितः वसुदेवजन्मनि देवैरानकदुंदुभिवादनात् द्वे कृष्णपितुः २३

बलभद्र बलभद्रश्रेष्ठमस्य बलेन भद्र इति वा बलभद्रा त्रायमाणा कुमार्यो पुंसि संज्ञायां ॥ प्रलंबघ्न प्रलंबहननवान् मूलविभुजादित्वात्क ॥ बलदेव बलेन दीव्य-
ति पचाद्यच् ॥ अच्युताग्रजः अच्युतस्य अग्रज ॥ रेवतीरमण रेवत्याः रमण नंद्यादित्वात् ॥ राम रमते रमते योगिनोऽस्मिन्निति राम: घञ् वा ॥ कामपाल कामान्पा-
लयति पालरक्षणे कर्मण्यण् ॥ हलायुधः हल आयुधयस्य २४ नीलांबरः नीलअंबरयस्य ॥ रोहिणेय रोहिण्या अपत्यं ढक्प्रत्ययः ॥ ताळांक ताल अंकः ध्व
जोयस्य ॥ मुसली मुशलमस्तियस्य मुसखंडने कलच् ॥ हली हलमस्त्यस्य ॥ संकर्षण संकर्षति सम्यक्कृषीतेवा कर्तरिल्यु कर्मणिल्युट् वा ॥ सीरपाणिः सीरः
पाणावस्य ॥ कालिंदीभेदन कालिंद्याः भेदनः नंद्यादि ॥ बल बलमस्यास्ति अर्शआद्यच् इति बलरामस्य सप्तदश नामानि २५ मदनः मदयतीति मदी हर्षग्लेपनयोः

बलभद्र प्रलंबघ्नो बलदेवोऽच्युताग्रजः ॥ रेवतीरमणो राम कामपालो हलायुधः २४ नीलांबरो रौहिणेयस्तालांको मुसली हली ॥ संकर्षण
सीरपाणि कालिंदीभेदनो बल २५ मदनो मन्मथो मार प्रद्युम्नो मीनकेतन ॥ कंदर्पो दर्पको ऽनंग कामः पंचशर स्मर २६

ल्युप्रत्ययः ॥ मन्
मथः मथ्नातीति मथः मथ विलोडने पचाद्यच् मनस मथः मन्मथः मन्मथः कामचिंतायां कपित्थकुसुमायुधे ॥ मार म्रियतेऽनेन करणे घञ् ॥ प्रद्युम्नः प्रकृष्ट द्युम्न
बलयस्य ॥ मीनकेतनः मीन मकरः केतनध्वजोयस्य ॥ कंदर्प कमित्यव्ययकुत्सायां कुत्सितो दर्पोऽस्य कंदर्पः यद्वा कं सुखं दर्पयति ॥ दर्पक ण्वुलन दर्पयति पि
जनः ॥ अनंग नास्ति अंगमस्य यद्वा नागज्ञान यस्मादितिवा अनंगो मदने नगमाकाशमनसोरपि ॥ कामः काम्यतेऽनेन ॥ पंचशर पंचशरा यस्य पंचशरा के उ
न्मादनस्तापनश्च शोषणस्तंभनस्तथा संमोहनश्च कामस्य पंचबाणा प्रकीर्तिता ॥ स्मर स्मरयति उत्कंठयति स्मृ आध्याने णिच् नाद्यच् मित्वात् ह्रस्वः स्मर्यते ने
नेति वा २६

हिरण्यगर्भः हिरण्यं हिरण्मयं अंडं तस्य गर्भइव तदंडमभवद्धैमंसहस्रांशुसमप्रभमितिमनूक्तेः यद्वा हिरण्यंगर्भेयस्य॥ लोकेशः लोकानामीशः॥ स्वयंभूः स्वयमेव
भवतीति भुवः संज्ञांतरयोरिति क्विप्॥ चतुराननः चत्वारि आननानि यस्य १६ धाता दधाति डुधाञ् धारण पोषणयोः ण्वुल् तृचाविति तृच्॥ अब्जयोनिः अब्जंयोनिर्यस्य
॥ द्रुहिणः द्रुह्यति दुष्टेभ्यः द्रुहिजिघांसायां बाहुलकादिनच् द्रुघणोपि ब्रह्मात्मभूः स्याद्द्रुहिणः द्रुघणश्च पितामहइति भागुरेः॥ द्रुघणः द्रुः संसारवृक्षः हन्यते ऽने
नेत्यर्थः द्रुउपपदेहंतेरप् प्रकृतेर्घनादेशः पूर्वपदादितिणत्वं॥ विरिंचिः विरचयतीति विरंचिः रचयप्रयत्ने पृषोदरादिः विरिंचोपिपाठः विरिंचोद्रुघणः शिंजोविरिंचिर्द्रुहिणो
मतइतिशब्दार्णवात्॥ कमलासनः कमलंआसनंयस्य॥ स्रष्टा सृजतीति सृजविसर्गे तृच् अमागमः॥ प्रजापतिः प्रजानांपतिः प्रजापतिर्ना दक्षादौ महीपाले विधा-

हिरण्यगर्भोलोकेशः स्वयंभूश्चतुराननः १६ धाताब्जयोनिर्द्रुहिणो विरिंचिः कमलासनः॥ स्रष्टाप्रजापतिर्वेधाविधाताविश्वसृड्विधिः १७ वि
ष्णुर्नारायणः कृष्णोवैकुंठोविष्टरश्रवाः॥ तरि॥ वेधा विधात्रोवेधचेति असिप्रत्ययेवेधादेशेसाधुः विदधाति॥ विधाता विशेषेणविदधाति दधातेस्तृच्॥ विश्वसृट् वि
श्वंसृजति क्विप्॥ विधिः विधत्तेइति उपसर्गेघोः किः विंशतिर्ब्रह्मणः १७ विष्णुः विवेष्टि विष्लृव्याप्तौ विषेः किच्चेतिनुः॥ नारायणः नरायणोपि नराणांसमूहो नारं तस्यस-
मूहइत्यण् तदयनंयस्य नराः अयनंयस्येति विग्रहेनरायणोपि अथनारायणो विष्णुरूर्ध्वकर्मानरायणइति शब्दार्णवः वसुर्नरायणपुनर्वसू विश्वरूपाइति त्रिकांडशे-
षात् नरस्यापत्यंवा नराज्जातानारा: शैषिकोण् आपः तत्वानिवा अयनं नारमयतेज्ञानानिवा अयतिप्रवर्तयतिवा अयगतौल्युट्॥ कृष्णः कृष्णोवर्णोस्यास्तीति मत्वर्थेच्
कर्षतिअरीनितिवा बाहुलकान्नक्॥ वैकुंठः विकुंठाया अपत्यंवा विगताकुंठानाशोस्येतिवा विकुंठंज्ञानंस्थानंवा यद्वा विकुंठानांजीवानां अयंवैकुंठः तस्येदमित्यण् नि

१ यताज्ञानदेवा॥विष्टरश्रवा॥विष्टरेश्रूयते असुन् विष्टरः वृक्ष पलाशी विष्टरः स्थिर इति त्रिकाण्डशेष वृक्षश्चात्राश्वत्थः यद्वा विष्टरोदर्भमुष्टिरिवश्रवसीकर्णौ यस्येतिवा॥
दामोदरः दामउदरेयस्येति॥हृषीकेश हृषीकाणामिंद्रियाणामीश॥केशव कश्चईशश्चकेशौ पुत्रपौत्रौक्तः केशाद्वोन्यतरस्या यस्य केशौवानीति वागतौ आ
तइति क शम्भोः पितामहोब्रह्मापिताशङ्कराद्यधीश्वर इतिपायोक्ते॥माधव मायाः लक्ष्म्याः धवः यद्वा मधोरपत्य अण् नद्वशालात्॥स्वभूः स्वतः भवती-
ति क्विप् १८ दैत्यारि दैत्यानाअरि॥पुंडरीकाक्ष पुंडरीकमिव अक्षिणी यस्यस समासान षच्॥गोविंदः गाः भुव स्वर्गं धेनुवा वेदवा अविदत् वराहरूपे
णोद्धरात्गामविदत् कामधेनोश्चऐश्वर्यप्रामे इंद्रेणस्वर्गस्यनिवेदनात् मत्स्यादिरूपेणवेदहरणात्॥गरुडध्वज गरुडः ध्वजः चिन्हमस्येति॥पीतांबर पीत अंबर

दामोदरोहृषीकेश केशवोमाधव स्वभूः १८ दैत्यारि पुंडरीकाक्षोगोविंदोगरुडध्वजः॥पीतांबरोऽच्युत शार्ङ्गीविष्वक्सेनोजनार्दन
१९उपेंद्रइंद्रावरजश्चक्रपाणिश्चतुर्भुजः॥पद्मनाभोमधुरिपु यस्य॥अच्युत नास्तिच्युतस्खलनस्वपदाद्यस्य च्युङ् गतौ॥शार्ङ्गीशृंगस्यविकारःशार्ङ्ग

धनुः यस्यास्ति अनइनि॥विष्वक्सेनः विषुनानाअञ्चति विषूची सेनायस्य विष्वक् विश्वक् स्मृतौविश्वेविषुवविशक्वतथा इतिद्विरूपकोशात् विष्वक्सेनाफविन्या
स्याद्विष्वक्सेनोजनार्दने॥जनार्दनः जननजनः जन जन्मतत् अर्दतिजनार्दनः नद्यादि जनाः समुद्रस्थदैत्यभेदाः तेषाअर्दनइतिवा १९उपेंद्र इंद्रमुपगत अनुज
त्वात्॥इंद्रावरजः इंद्रस्यअवरजात ञ्जनेर्डः॥चक्रपाणि चक्रपाणौयस्य प्रहरणार्थेइतिसप्तम्या परनिपात॥चतुर्भुजः चत्वार भुजा यस्य यद्वा भुंक्ते भक्षक्तिवासु
जः इगुपधेतिक चतुर्णाधर्मार्थकाममोक्षाणा भुज॥पद्मनाभः पद्मनाभौयस्य योगविभागादच्॥मधुरिपु मधोरसुरस्यरिपु॥

शंवरारिः शंवरस्यअरिः क्लीबंतुशंवरेनीवौ बौद्धव्रतविशेषयोः विशेषेपुंसिदैत्यस्यमत्स्यहरिणस्यचेतिरभसः शंबरंसलिलेपुंसिमृगदैत्यविशेषयोरितिमेदिनी ॥ मनसि-
जः शृंगाररूपेणमनसिजायतेस्म जनेर्डः ॥ कुसुमेषुः कुसुमानिइषवोयस्य ॥ अनन्यजः नास्त्यन्योयस्मात् अनन्यः विष्णुः तस्माज्जातः मनसोन्यस्मान्नजायतेवा-
जनेर्डः ॥ पुष्पधन्वा पुष्पंधनुरस्य वासंज्ञायांइत्यनङ् ॥ रतिपतिः रतेःपतिः ॥ मकरध्वजः मकरः ध्वजोऽस्य ॥ आत्मभूः आत्मना भवति क्विप् २७ ब्रह्मसूः ब्रह्मतपः ब्र
ह्माणं सूवतिचालयति षूप्रेरणे अत्रापिक्विप् ॥ विश्वकेतुः झषकेतुर्वा ऋष्यकेतुर्वा ऋश्यकेतुरपि विश्वस्मिन्केतुर्यस्य पताकायांचिह्नेकेतुर्ग्रहोत्पातारलक्ष्मस्वि
तिरभसः तदुक्तंशिवपुराणे खड्गायुधोनिरुद्धः स्यात्तथावैऋष्यकेतनामिति मदनस्यनामान्येकोनविंशतिः अरविंदमशोकंचचूतंचनवमल्लिकां नीलोत्पलंचपंचैते

शंवरारिर्मनसिजः कुसुमेषुरनन्यजः ॥ पुष्पधन्वारतिपतिर्मकरध्वज आत्मभूः २७ ब्रह्मसूर्विश्वकेतुः स्यादनिरुद्धउषापतिः ॥ लक्ष्मीः प
द्मालयापद्माकमलाश्रीर्हरिप्रिया २८ इंदिरालोकमातामाक्षीरोदतनयारमा ॥

पंचबाणस्यसायकाः ॥ अनिरुद्धः उषापतिः स्यात् ब्रह्मसूर्झषकेतुः स्या
द्दृष्यकसेनात्मजात्मजः इतिचतुष्टयमनिरुद्धस्येत्यन्ये ॥ लक्ष्मीः लक्षयति पश्यति नीतिज्ञं लक्ष दर्शनांकयोः लक्षेर्मुट्चेतिईप्रत्ययः तस्यमुट् लक्ष्मीः संपत्तिशोभ-
योः ऋद्ध्यौषधौचपद्मायांस्त्रियामौषधेपिचेति ॥ पद्मालया पद्ममालयोस्याः ॥ पद्मा पद्ममस्त्यस्याः मत्वर्थेच् ॥ कमला कंमलयति मलधारणे कमलं सलिलेता-
म्रे जलजे व्योमभेषजे मृगभेदेतुकमलः कमलाश्रीवरस्त्रियां ॥ श्रीः श्रयति हरिं श्रयंत्येनामितिवा तदुक्तंव्याडिना लक्ष्मीसरस्वती धात्री सर्वसंपद्विभूतिशोभासु
उपकरणवेषरचना विधासुच श्रीरितिप्रथिता हरिप्रिया हरेः प्रिया २८ इंदिरा ॥ लोकमाता ॥ मा ॥ क्षीरोदतनया ॥ रमा इत्येकादशनामानि लक्ष्म्याः ॥

टो लक्ष्मीपतेः शङ्खः पाञ्चजन्यः पञ्चजने दैत्यभेदे भवः पाञ्चजन्यः नादुपसंख्यानमिति यत्॥ विष्णोश्च सुदर्शनः सुष्ठु दर्शनं यस्य सुखेन दृश्यत इति वा कर्मणि युच् पुंस्त्वेऽपि न-
दुक्तं सुदर्शनो हरेश्चक्रे गौरवशेऽद्रुमे पुमान् तद्वयोः शत्रुगमने माज्ञोषधिभिदोः पुमान् सुदर्शनोऽस्त्रियां चक्र इति नाम अभिधानात् क्लीबेऽपि वर्तते एकं नाम॥ अ-
स्य गदा कौमोदकी कोः पृथिव्या मोदकः कुमोदकः विष्णुः तदुक्तं दुर्गेण विष्णुः कुमोदकः शौरिः तस्येयं कौमोदकी तस्येदमित्यण् कौमोदकीत्यपि कुमोदकाज्-
ज्जाता कौमोदकी गदो नाम नरि विष्णोश्च आमयेनायुधे गदा एकं॥ अस्य विष्णोः खड्गः नन्दको नाम नन्दयति देवान् टुनदि णिजन्तात् ण्वुल् नन्दको हरिखड्गे च हर्ष-
के कुलपालके एकं॥ अस्य मणिः कौस्तुभः कुं भुवं स्तुभ्नाति व्याप्नोति कुस्तुभः इगुपधेति कः समुद्रः तस्मिन् भवः कौस्तुभः तत्र भव इत्यण् यद्वा कुं पृथ्वीं स्तोभते कुस्तुभः

शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनः॥ कौमोदकी गदा खड्गो नन्दकः कौस्तुभो मणिः॥२९ गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः॥
नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः ३० शम्भुरीशः पशुपतिः

भः विष्णुस्तस्यायं तस्येदमित्यण् इत्येकं २९ गरुत्मान् गरुतः पक्षाः सन्त्यस्य
॥ गरुडः गरुद्भिर्डयते डीङ् विहायसा गतौ पृषोदरादिः॥ तार्क्ष्यः तार्क्ष्यस्य कश्यपस्यापत्यं तस्यापत्यमित्यधिकारे ऋष्यण्॥ वैनतेयः विनताया अपत्यं स्त्रीभ्यो ढ-
क्॥ खगेश्वरः खगानामीश्वरः॥ नागान्तकः नागानामन्तकः॥ विष्णुरथः विष्णोः रथः यद्वा विष्णौ रयः रयः पौरुष देहयोरिति त्रिकाण्डशेषः॥ सुपर्णः सुवर्णमय-
त्वात् शोभने पर्णे पक्षावस्य॥ पन्नगाशनः पन्नगानश्नाति पन्नगा अशनं यस्य वा नव गरुडस्य नामानि ३० शम्भुः शं सुखं भवतीति शम्भुः भवतेर्मितद्र्वादित्वान्डुः॥
ईशः ईष्टे सौ ईशः ईश ऐश्वर्ये इगुपधेति कः॥ पशुपतिः पशूनां जीवानां पतिः तिर्यग्जातिः पशुः प्रोक्तः सर्वप्राणिनि पुंस्ययं प्रमथानां पतिर्वा पशुर्मृगादौ छगले प्रमथे च पुमा-
नयमिति रभसः॥

शिवः शिवमस्यास्ति अर्शआद्यच् शिवयतीतिवा शिवोमोक्षेमहादेवेकीलकग्रहयोगयोः बालकेगुग्गुलेवेदेपुंडरीकद्रुमेपिचरूखेक्षेमेजलेक्लीबं ॥ शूली शूलम- स्यास्ति ॥ महेश्वरः महांश्चासावीश्वरश्च ॥ ईश्वरः ईशितुंशीलमस्य स्थेशवरच् ॥ शर्वः शृणाति शृहिंसायां वप्रत्ययः सर्वइत्यपि सर्वस्तुशर्वोभगवान्शंभुः कालंजरः शिवइतिनामविधानात् ॥ ईशानः ईष्टेतच्छील्ये ताच्छील्येचानश् ॥ शंकरः शंकरोति शमिधातोरित्यच् ॥ चंद्रशेखरः चंद्रःशेखरेयस्य ३१ भूतेशः भूतानामीशः ॥ खं- डपरशुः खंडयतीतिखंडः परशुर्यस्य खंडपर्शुरपि खंडपर्शुः पर्शुरामेशंकरेचूर्णलेपिनि इतिविश्वात् ॥ गिरीशः गिरेरीशः ॥ गिरिशः गिरिराश्रयत्वेन अस्यास्ति- मत्वर्थेशः गिरौशेतेवाडप्रत्ययः ॥ मृडः मृडयति मृडसुखने इगुपधेतिकः मृडनातिवा ॥ मृत्युंजयः मृत्युंजयति संज्ञायांखच् मुम् ॥ कृत्तिवासाः कृत्तिश्चर्म वासोयस्य

**शिवःशूलीमहेश्वरः ॥ ईश्वरःशर्वईशानःशंकरश्चंद्रशेखरः ३१ भूतेशःखंडपरशुर्गिरीशोगिरिशोमृडः ॥ मृत्युंजयःकृत्तिवासाःपिनाकीप्रमथा धिपः ३२ उग्रःकपर्दीश्रीकंठःशितिकंठःकपालभृत् ॥ वामदेवोमहादेवोविरूपाक्षस्त्रिलोचनः ३३**

॥ पिनाकी पिनाकोऽस्यास्ति ॥ प्रमथाधिपः प्र- मथानामधिपः ३२ उग्रः उच्यति कुधासंबध्यते उग्रः उचसमवाये रन्प्रत्ययः गादेशश्च ॥ कपर्दी कपर्दोस्यास्तीति ॥ श्रीकंठः श्रीः शोभाकंठेयस्य ॥ शितिकंठः शितिः का- लः कंठोऽस्य ॥ कपालभृत् कपालं बिभर्ति क्विप् ॥ वामदेवः वामयति दुष्टानांमदं वामः वामश्चासौदेवश्च वमधातोर्णिजंतादच् लोकेविपरीतत्वात्सुंदरत्वाद्वा वामः वा- मः देवः क्रीडायेतिवा वामेषुश्रेष्ठेषुदेवोप्रकाशोयस्येतिवा ॥ महादेवः महांश्चासौदेवश्च महान्देवोनृत्यादिक्रीडायस्येतिवा ॥ विरूपाक्षः विविधानि रविचंद्राग्नि- रूपाणि अक्षीणियस्य यद्वा विरूपेषु अक्षिरूपादृष्टिर्यस्य यद्वा विविधरूपाणि विविधरूपेषुवा अक्षीणि इंद्रियाणियस्य समासांतेषत्विसाधुः ॥ त्रिलोचनः त्रीणि लोचनान्यस्य यद्वा त्रिषुकालेषु लोकेषुगुणेषु वेदेषुच लोचनं ज्ञानमस्येति त्रयोवेदावर्णावा लोचनान्यस्मिन् ३३

कृशानुरेता कृशानौरेतोयस्य ॥ सर्वज्ञः सर्वंजानातिकमत्ययः ॥ धूर्जटिः धूर्भारभूताजटिर्यस्य जटझूटसंघाते सर्वधातुभ्यइनीत् जटिर्जटेनिर्दिष्टकृशानोशान्तधूःगंगा जटिर्यस्येतिवा ॥ नीललोहितः नीलश्चासौलोहितश्च कंठेजटासुच ॥ हरः हरतीनिपचाद्यच् हीरोपिहीरः कपर्दीशपिरः इतिसंसारावर्तोर्व ॥ स्मरहरः स्मरहरतिह रतेरत्यच् ॥ गर्भः गर्जति भृजी भर्जने भ्रज्यनेकामादयोयेनेतिवा हलश्चेतिघञ् ॥ त्र्यंबकः त्रीणिअंबकानि नेत्राणियस्य त्रिषुलोकेषुअंबकं यस्येतिवा अंबकंनय नरविशशिनिहृस्वायुधः त्रयाणांलोकानामंबकं पितेतिवा त्रीन्वेदान्अंबनेशब्दायतेवा अंबिशब्देकर्मण्यण् स्वार्थेकत त्रिषुलोकेषुकालेषुवा अंबः शब्दोवेद लक्षणोयस्येतिवा यद्वात्रयः अकारउकारमकाराः अंबाः शब्दवाचकात्यस्येतिवा ॥ त्रिस्रः अंबाःयो भूम्यापोयस्येतिवा ॥ त्रिपुरांतकः त्रयाणांधातूनांसुवर्णरजत

कृशानुरेता सर्वज्ञोधूर्जटिर्नीललोहितः ॥ हरःस्मरहरो भर्गस्त्र्यंबकस्त्रिपुरांतकः २४ गंगाधरोऽधकरिपु क्रतुध्वंसीवृषध्वजः ॥ व्योमके शोभवोभीमः स्थाणूरुद्रउमापतिः ॥ "अहिर्बुध्न्योऽष्टमूर्तिश्चगजारिश्चमहानटः" २५ लोहानांपुराणि तेषामंतकः यद्वा त्रयाणां पुराणांसमा-

हारः तस्यअंतकः २४ गंगाधरः धरतीतिधरः गंगायाः धरः शेषत्वविवक्षायांपचाद्यच् ॥ अंधकरिपुः अंधकस्यदैत्यस्यरिपुः ॥ क्रतुध्वंसी क्रतुंध्वंसयतिरूपीति णिनि ॥ वृषध्वजः वृषः ध्वजः चिन्हमस्य ॥ व्योमकेशः व्योम्निकेशा यस्य ॥ भवः भवति भवनेवासर्वं भूप्राप्तौ पचाद्यच् भवत्यस्मादिग्घमितिवा अप् अपादाने ॥ भीमः बिभेत्यस्मादितिभीमः भीमादयोपादाने इतिसाधु भीमोभ्रुवेनसेघोरेशा भीमध्वमर्षांइवरत्स्फक्लान् ॥ स्थाणुः तिष्ठति ॥ रुद्रः रोदयतिरोदति सु कृत्वेतिरक् णिचोलुकिगुणोन ॥ उमापतिः उमायाःपतिः इत्यष्टत्रिंशत्शिवनामानि २५

कपर्दः केनसुखेनजलेनवा परंपूर्तिंददाति संपदादित्वाड्डावे क्विपिराल्लोपः कस्यजलस्यपरासूरणेनदापतीतिवा दैप् शोधने स्रूपीति कप्रत्ययेनसाधुः अस्यशंभोः जटाजूटः जटानां
जूटःबंधःजटाबंधस्यैकं॥ अस्य धनुः पिनाकः पिनाकादयश्चेतिसाधुः॥ अजगवं अजं छागंगच्छति यज्ञत्वेन प्रविशतिवा अजगः विष्णुः अस्तिशरत्वेन गाडयजगादि तिवः
आजगवमपि स्वार्थेण् धनुस्त्वजगवंस्युग्यमजकावमजोजक मिति शब्दार्णवः स्थाणोर्धनुराजगवमित्यमरमालाच अजकवमित्यपि अजः विष्णुः कोब्रह्मातोअ
वति शकंध्वादि. अजकौ विष्णुब्रह्माणौ शिवधनुषः द्वेनामनी॥ अस्यपारिषदाः गणाः प्रमथाः स्युः परिषदि साधवः परिषदइति योगविभागादण् प्रमथाः प्रमथ्नं
तिदुष्टान् मथविलोडने पचाद्यच् प्रमथ्यंते मंत्रादिनाइतिवा पार्षद्याइत्यपि शिवानुचराणांद्वे ब्राह्मीत्याद्यास्तु मातरः मन्यंतेपूज्यंते लोकैःमातृत्वादितिमातरःऔणा

**कपर्दोऽस्यजटाजूटः पिनाकोऽजगवंधनुः॥ प्रमथाःस्युः पारिषदाब्राह्मीत्याद्यास्तुमातरः ३६ विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा॥**

दिकः मांति शिवपरिवारत्वेसमाविशंतितिवा॥ ब्राह्मीब्रह्मणइयं तस्येदमित्यण् तदुक्तं ब्राह्मीमाहेश्वरीचैंद्री वाराही वैष्णवी तथा कौमारीत्यपि चामुंडाचर्चिकेत्यष्टमातरःभा
गुरिराह ब्राह्म्याद्यामातरः स्मृताइति ब्रह्माणीत्यपिपाठः ब्रह्माणं अणतिकीर्तयति अणशब्दे कर्मण्यण् ङीप् ब्रह्माण्याद्याः स्मृताः सप्तदेवतामातरोबुद्धेरितिहलायु-
धः ब्राह्म्यादिशक्तिदेवतानामेकैक ३६ विभूतिः विशेषेणभूतिः॥ भूतिः भवनं क्तिन्प्रत्ययः ऐश्वर्यं ईश्वरस्यभावः ष्यञि साधुः त्रीणि ऐश्वर्यनामानि॥ अणिमादिकं अ
ष्टधा अणिमादिकमुच्यते अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ईशिता वशिता चैव तथा कामावशायिता अणिमा अणोर्भावः॥ लघिमा लघोर्भावः इमनि-
च्॥ प्राप्तिः॥ अंगुल्यग्रेण चंद्रादेः॥ प्राकाम्यं प्रकामस्यभावः मनोरथसिद्धिः॥ महिमा महतोभावः॥ इशिता ईशिनः भावः केइनौतल्॥ वशिता वशोऽस्यास्तीति वशी
वशिनः भावः तद्धितस्तल्॥ कामावशायिता कामान्वशाने कामावशायिनः भावः इत्यष्टसिद्धयः॥

उमा ओ मर्त्रेशस्यमालक्ष्मी उमेतिमात्रानपसोनिषिद्धत्वात्वा॥ कात्यायनी कतस्य अपत्य गर्गादियञन्तान्ष्फेर्डीप्॥गौरी गौरोवर्ण अस्तियस्या॥एवकाली उ
गाका पायनी दुर्गाकालीहैमवती स्वरी काला कालजरी गौरीनिवान्तस्पति॥हैमवती हिमवतोपत्य अणन्तान्ङीप् हेमवत्स भया स्वर्णसीर्यो श्मेनव्नोमयो॥ईश्वरी
ईए ईश ऐश्वर्येवरति टित्वात्ङीप् ईश्वरान्यपि वरचिसाप् ईश्वर शङ्करे धीरेनत्पत्न्यामीश्वरीश्वरा इतिवोपालित ३७शिवा शिवयतीति शिवोवास्या अस्तिमर्तृत्वेन
शिवभद्रशिवःशम्भ शिवागौरी शिवाभयेनिशाश्वतःपुयोगेतु शिवी भवानी भवस्यस्त्री॥रुद्राणि रुद्रस्यस्त्री॥शार्वाणि शार्वस्यस्त्री इभइन्द्रवरुणेनिसाधव॥सर्वम
गला सर्वेषामगला सर्वाणिमगलानि यस्याः वा मगला सिनदूर्वायामुमायापुसिभू मिजे नपुसकतुकल्याणेपुसिस्सर्वार्थ दक्षिणे॥अपर्णा नपर्णा नियस्याः

उमाकात्यायनीगौरीकालीहैमवतीश्वरी ३७ शिवाभवानीरुद्राणीशर्वाणीसर्वमगला॥ अपर्णापार्वतीदुर्गामृडानीचडिकाम्बिका ३८“आ
र्यादाक्षायणीचैवगिरिजामेनकात्मजा”॥ विनायकोविघ्नराजद्वैमातुरगणाधिपाः॥

तपस्यत्तापर्णानामपित्यागात्॥पार्वती पर्वतस्यापत्यस्त्री अ
णन्तान्ङीप्॥दुर्गा दुःखेनगम्यते ज्ञायतेस्याः सुदुरोधिकरणे इतिड यद्वा दुःखेन दुष्टैर्वा गीयते स्तूयते गैशब्दे आतश्चोपसर्ग इत्यङ् दुर्गंको दुर्गमेस्याद्दुर्गास्तुनीलिकोमयोरि
तिहेमचद्र॥मृडानी मृडस्यशिवस्यस्त्री इन्द्रवरुणेति साधु॥चडिका चडति चडिकोपेक्षुर्॥अम्बिका अबैव अम्बिका स्वार्थेकः अम्बिकापार्वतीमात्रोर्धृतराष्ट्रस्यमातरी इत्युमा
या नामानि ससदश ३८ विनायकः विनयति ण्वुल् विशिष्टोनायकोविनायक इतिवा यद्वा विगतो नायको यस्य तदुक्तकोशान्तरे विनायकः हेरवे तार्क्ष्ये विघ्ने जिनेगुरौ॥ विघ्नराज
विघ्नानां राजा इतिविघ्नराजः समासान्तष्टच् द्वैमातुर द्वयोर्मात्रो अपत्य मातुरुत्सस्येतिसाधु दुर्गाचासुराभ्याम् पालितत्वात् तदुक्त द्वैमातुरजरासधवारणाननयोः पुमानिति
गणाधिप गणानामप्रमथानामधिपः॥

एकदंत· एकः दंतो ऽस्य ॥ हेरंबः हे संग्रामे रंबते ह· शंकरे हरौ हंसे रणरोमांच वाजिषु इति नानार्थरत्नमाला स्वामी तु हेउ षसि रंबते रबि शब्दे पचाद्यच् ॥ लंबोदरः लंबमुदरं यस्य सः ॥ गजाननः गजस्य आननमिव आननं यस्य यद्वा गज आननं यस्य गजशब्दो गजमुखपरः इत्यष्टौ गणपतेः ३९ कार्तिकेय· कृत्तिकानामपत्यं स्त्रीभ्यो ढक् ॥ महासेन· महती सेना अस्य ॥ शरजन्मा शरेषु जन्मास्य ॥ षडाननः षट् आननान्यस्य ॥ पार्वतीनंदनः पार्वत्याः नंदनः ॥ स्कंदः स्कंदति स्कंदेरच् ॥ सेनानीः सेनां नयति सत्सूद्विषेति क्विप् सेनानी स्यात्पुमान्कार्तिकेये सेनापतौ पुमान् ॥ अग्निभूः अग्नेर्भवति क्विप् ॥ गुह· गूहति सेनां रक्षयति गूह संवरणे इगुपेतिकः गुहः षाण्मातुरे गुहा सिंहपुच्छ्यांच गर्तेच पर्वतादेश्च शंकर इत्युक्तत्वात् ४० बाहुलेयः बहुलानां कृत्तिकानामपत्यं ॥ तारकजित् तारकं जयति क्विप्तुक् ॥ विशाखः विशाखति शाखृ श्लाखृ व्या-

अप्येकदंतहेरंबलंबोदरगजाननाः ३९ कार्तिकेयो महासेनः शरजन्मा षडाननः ॥ पार्वतीनंदनः स्कंदः सेनानीरग्निभूर्गुहः ४० बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः ॥ षाण्मातुरः शक्तिधरः कुमारः क्रौंचदारणः ४१

प्तौ पचाद्यच् विशाखायां जात इति वा संधिवेलेत्यण् तस्य श्रविष्ठेति लुक् ॥ शिखिवाहन· शिखी मयूरः वाहनं यस्य ॥ षाण्मातुरः षण्णां मातृणामपत्यं द्वैमातुरवत् ॥ शक्तिधरः शक्तेः धरः ॥ कुमारः कुमारयति क्रीडति कुमार क्रीडायां पचाद्यच् कुत्सितो मारो ऽस्येति वा यद्वा कुमारयति दुष्टान् यत्तु ब्रह्मचारित्वात् कुमार इत्युक्तं तथापि तस्य भार्या आसीत् तदुक्तं वायुपुराणे शतक्रतो· रूपवती देवसेनेति या स्मृता सा महेंद्रेण रत्यर्थं भार्यात्वेनोपपादिता उदीर्णसेनापतये महासेनाय स्कन्दत इति ॥ क्रौंचदारण· क्रौंचस्य पर्वतस्य दारण· दृ विदारणे नंद्यादित्वात् ल्युः कैलासे धनदावासे क्रौंचः क्रौंचोभिधीयते अतः क्रौंचदारणोपि सप्तदश कार्तिकेयस्य नामानि ४१

इंद्र इंदति इदिपरमैश्वर्ये ऋज्रेंद्रेत्यादिनारन् इंद्रः शक्रादित्यभेदयोगभेदानराभ्मरू इंद्रः फणिज्जकेरुपीस्यात्।।मरुत्वान् मरुत सत्यस्यमतुपिद्मयादितिवल।।मघवा मघवानित्यपि वृ आदेशा मत्यते पूज्यते महपूजाया कनिन्।।विडौजाः विडति विडभेदने इगुपेतिक विडभेदक मोजोयस्य सानःशब्दः।।पाकशासनः शासयतिशासन ण्यतात्ल्यु पाकस्यदैत्यभेदस्यशासन ।।वृद्धश्रवा वृद्धेभ्यःशृणोति श्रुश्रवणे असुन् वृद्धेश्रवसी अस्येतिवा यद्वा वृद्धेषुपंडितेषु श्रवोयशो यस्य।।सुनासीरः सुष्ठुनासीर सेनामुख यद्वासुष्ठुनासीरा अग्रेसराः यस्य णासृशब्दे बाहुलकादीरन् शुनासीरोपि शुनःवायु शीरःसूर्यः तौस्तःयस्य अर्शआद्यचि अन्येषामपीतिदीर्घः।।पुरुहूत पुरुभिर्बहुभिर्हूतआह्वानयत्तेयस्य यद्वा पुरूणिहूतानिनामानियस्य।।पुरंदर पुर अरीणांदारयति गतयमपुरंदरोचे

इंद्रोमरुत्वान्मघवाविडौजा पाकशासन ।।वृद्धश्रवा सुनासीरःपुरुहूत पुरंदर ४२ जिष्णुर्लेखर्षभ शक्र शतमन्युर्दिवस्पति ।।सु- त्रामागोत्रभिद्वज्रीवासवोवृत्रहावृषा ४३

ति ४२ जिष्णु जनयशील जिजये अभिभवे ग्स्नाजीतिसाधु जिष्णुर्नाबासवेऽर्जुने।। लेखर्षभ - लेखेषुदेवेषु ऋषभः श्रेष्ठ ।।शक्रः शक्नोति शक्लृशक्तौ स्फायितञ्चिवंचिशकीत्यादिनारक् शक्र पुमान्देवराजे कुटजार्जुन भूरुहे इत्युक्तत्वात्।।शतमन्यु शतमन्यवोयज्ञा यस्य यद्वा शतेषुदैत्येषु मन्यु क्रोधोयस्य।। दिवस्पति दिव स्वर्गस्यपति ।।ज्ञापकादलुकिकस्कादित्वात्स ।। सुत्रामा सुत्रामेत्यपि सुष्ठुत्रायते त्रैङ् पालने मनिन् ।।गोत्रभित् गोत्रान् पर्वतान्भिनत्ति क्विप्तुक् ।। वज्री वज्रोऽस्यास्तीति।। वासव वसूनि रत्नानि सत्यस्य मत्वर्थेण् वसोरपत्यमितिवा दैत्यानावासयतीतिवा वागतिगंधनयो आनइतिक ।।वृत्रहा वृत्रंहतवान् सूनेक्विप्।।वृषा वर्षति वृषुसेचने कनिन् ४३

वास्तोष्पतिः वास्तोः गृहक्षेत्रस्य पतिरधिष्ठाता वास्तोष्पतिगृहमधेनिनिपातनादलुक् कस्कादित्वात्षत्वं ॥ सुरपतिः सुराणांपतिः ॥ बलारातिः बलस्यासुरस्य-
अरातिः शत्रुः ॥ शचीपतिः शच्याः पतिः ॥ जंभभेदी जंभमसुरं भत्तुंशीलमस्य ॥ हरिहयः हरिर्हयोयस्य सकेशबालरोमाणिसुवर्णाभानियस्यतु हरिः सवर्णतोश्च-
सुपीनकौशेयसप्रभः इतिशालिहोत्रः ॥ स्वाराट् स्वःस्वर्गेराजते सोरीनिलोपेदीर्घः स्वेषुदेवेषुचधनेषुच आ राजते ॥ नमुचिसूदनः नमुचेर्दैत्यस्यसूदनः ४४ संक्रंद-
नः संक्रंदयति क्रंदि आल्हानेरोदनेच नंद्यादिः ॥ दुश्च्यवनः दुःखेनदुष्टंदुष्टेषुवाच्यवनमस्य यद्वादुःसहः च्यवनोमुनिरस्य ॥ तुराषाट् तोतोर्निलुरः इगुपेतिकः तुरत्वरणे
तुरंवेगवंतं साहयति अभिभवति ण्यंतात्सहेः क्विप् अन्येषामपीतिदीर्घः यद्वा तुरः त्वरितः सन् परबलानि सहतइति अत्रपक्षेनहिवृतीतिदीर्घः ॥ मेघवाहनः मेघाः वाह

वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ॥ जंभभेदी हरिहयः स्वाराण्नमुचिसूदनः ४४ संक्रंदनोदुश्च्यवनस्तुराषाण्मेघवाहनः ॥ आ-
खंडलः सहस्राक्ष ऋभुक्षास्तस्यतुप्रिया ४५ पुलोमजाशचींद्राणी नगरीत्वमरावती ॥

नमस्य ॥ आखंडलः आखंडयति खडिभेदने वृषादित्वा-
त्कलच् ॥ सहस्राक्षः सहस्रमक्षीणियस्यसः समासांतः षच् ॥ ऋभुक्षाः ऋभवः क्षीयंत्यत्र क्षितिनिवासगत्योः ऋभुक्षः स्वर्गवज्रयोरितिविश्वः ऋभुक्षोस्या-
स्तीतिऋभुक्षाः अनइनिः इतीद्रनामानिपंचत्रिंशत् ४५ तस्यतुप्रिया पुलोमजा पुलोम्नः मुनेर्जाता पौलोम्यपि तस्यापत्यमित्यण् जातित्वान्ङीष् ॥ शचीशाचनि श-
चव्यक्तायांवाचि सर्वधातुभ्यइतीन् कृदिकेतिङीष् ॥ इंद्राणी इंद्रमणति आनयतियद्वा इंद्रस्यस्त्री पुंयोगेङीष् आनुक् स्यादिंद्राणीशतावरी चारुधारामहेंद्राणी
शक्राणीजयवादिनी इति रभसः इतित्रीणींद्रपत्न्याः ॥ नगरीतु अमरावती अमराः संत्यस्यामतोबहुनइतिदीर्घः एकंनगर्याः ॥

हयः उच्चैः श्रवा उच्चैः श्रवसी यस्य उच्चैः शृणोतीतिवा श्रुधातोरसून् उच्चैः महान् श्रवो यशो यस्येतिवा एकं इंद्राश्वस्य॥ सूत सारथि मातलि मतलातियद्वा मातलस्य अपत्य एकं॥ वन नंदन नंदयति इंद्रोद्याने नंदनस्तु तनयेहर्षकारिणीनिहैमः अनइन् आदिवृद्धि एकं ४६ अस्य प्रासादः वैजयंतः स्यात् वैजयंत्या पताका सत्यस्य मतवर्थेइन् वैजयंतो महेंद्रस्य ध्वजप्रासादयो पुमान् वैजयंती पताकायाजयंती पादपेस्त्रियाम् इंद्रगृहस्यैकनाम॥ जयंतः जयतीति झच् झोंतः इतिसाधु॥ पाकशासनिः पाकशासनस्यापत्य अतइञ् इंद्रपुत्रस्यद्वेनामनी॥ ऐरावतः इराउदकानिसंत्यस्मिन् इरावान् समुद्रः तस्मिन् भव मतुबंतात् भवार्थेअण् ऐरावत॥ अभ्रमातंग अभ्रमेघस्तदाश्रयो मातंगः शाकपार्थिवादि यद्वा अभ्रे आकाशे मेघेवा विद्यमानो मातंग इतिवा॥ ऐरावणः इरया उदकेन वणति वणशब्दे इरावण

हयउच्चैःश्रवाःसूतोमातलिर्नंदनवनं ४६ स्यात्प्रासादोवैजयंतोजयंतः पाकशासनिः॥ ऐरावतोभ्रमातंगैरावणाभ्रमुवल्लभा ४७ ह्रा-
दिनी वज्रमस्त्रीस्यात्कुलिशंभिदुरंपविः॥ शतकोटिःस्वरुःशंबो इरासुरासैववनमुदकं यस्मिन् वा इरावणो ग्रावत्तत्र भवइत्यण् ऐरावणः॥ अभ्रमुवल्लभः अभ्रमो वल्लभः चत्वारि इंद्रहस्तिनोनामानि ४७ ह्रादिनी ह्रादनेवस्य ह्राद अव्यक्ते शब्दे आवश्यके णिनिः ङीप् ह्रादः अस्ति अस्याइतिवास्त्रीलिंगे॥ वज्र वजति वजगतौ रन्प्रत्ययः पुनपुंसकयो अस्त्रियावज्र कुलिशोऽइति संसारार्णवः॥ कुलिश कुलोहस्तेशोते अन्येभ्योपीति डः कुलिहस्तो भुजादल इतित्रिकांडशेषः शो तनूकरणे यद्वा कुलि नरपतन् लिशति छिशअल्पीभावे इगुपेतिकः कुलिशोनस्त्रियामोक्तोदंभोलौनाऽसपातरे॥ भिदुर भिनत्ति कुरच्॥ पविः पुनाति अच्इः॥ शतकोटि शतकोट्योधारा अस्य॥ स्वरुः स्वरति स्वृशब्दोपतापयो उप्रत्ययेगुण यद्वा सुष्ठु अरूषिधारायस्य॥ शंब शं सुखमस्यास्ति कंशंभ्यामितिब यद्वा शाम्यत्यरी
(न्)।

दंभोलिः दंभुरोधने दंभसिरोदने अलि॰ समर्थः अलेरसुन् यद्वा दभ्नो निरवेद्यति दंभ दाने ॥ अशनि स्त्रीपुंसयोः अश्नाति अश्यतेनेनेति वा अश्नातेरनिः दश वज्रस्य नामानि ४८ वज्राशनिरित्यपि नाम वज्राशनिं विदुर्वज्रं इति त्रिकाण्डशेष॰ अथ वज्राशनि द्वयोरिति नामनिधानाच्च ॥ व्योमयानं व्योम्नि यात्यनेन करणे ल्युट् व्योमयानि वा कर्तरि स ॥ विमानः विशिष्टं मानयत्यनेन करणे घ॰ यद्वा विशेषेण मात्यस्मिन् अधिकरणे ल्युट् विगतं मानं उपमा अस्येति वा विमानशब्दः पुंसि क्लीबे च विमानो देवयाने च सप्तभूमि गृहेपि च घोटके यानमात्रेन पुंनपुंसकयोर्मतः द्वे देवरथस्य ॥ नारदाद्याः आदिशब्देन देवल पर्वतादयः नरस्य अपत्यं नारं पानीयं ददाति आतइ इति कः नारं पानीयं पितृभ्यः सदा भवान् ददाति तेन ते नाम नारदेति भविष्यतीति आगम॰ नारं नरसमूहं द्यति कलहेन वा द्यते॰ कः यद्वा नुः इदं नारं अज्ञानं द्यति दूरीकरो

दंभोलिरशनिर्द्वयोः ४८ व्योमयानं विमानोऽस्त्री नारदाद्याः सुरर्षयः ॥ स्यात्सुधर्मा देवसभा पीयूषममृतं सुधा ४९ मंदाकिनी वियद्गंगा स्वर्णदी सुरदीर्घिका ॥

ति ज्ञानोपदेशेन दो अवखण्डने ॥ सुरर्षयः सुराश्च ते ब्रह्मपुत्रत्वादृषयश्च सुराणां ऋषय इति वा एकं नाम ॥ सुधर्मा देवसभा स्यात् सुधर्मा शोभनः धर्मो यस्यामिति नांतपक्षे धर्मादनिच् ॥ देवसभा सह भांत्यस्यां इति सभा सभाराजेति साधुः देवानां सभा अवस्थानगृहं इति द्वे देवसभायाः ॥ पीयूषं पीयते पीयइति सौत्रो धातुः ऊषन्प्रत्ययः बाहुलकात्पक्षे गुणः स्यात्पेयूषं च पीयूषं नवक्षीरेऽमृतेपि च इति हारावलिः पीयूषं सप्तदिवसावधि क्षीरे तथामृते ॥ अमृतं न म्रियंतेऽनेन अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते अयाचिते च मोक्षे च ना धन्वंतरि देवयो॰ ॥ सुधा सुखेन धीयते धेट् पाने आतश्चोपसर्गे इति कर्मण्यङ्॰ त्रीणि अमृतनामानि ४९ मंदाकिनी मंदान् अकितुं शीलमस्याः अक अग कुटिलायां गतौ सुप्यजातौ णिनिः ॥ वियद्गंगा वियति वियते वा गंगा ॥ स्वर्णदी स्वः स्वर्गस्य नदी सज्ञायां पूर्वपदादिति णत्वं ॥ सुरदीर्घिका सुराणां दीर्घिकेव नत्वा रिदेवगंगा॰

मेरुः मिनोति ज्योतींषि उच्चत्वात् डुमिञ् प्रक्षेपणे मिपीभ्यांरुः ॥ सुमेरुः अन्यमेरुनिरासार्थं सुइति ॥ हेमाद्रिः हेम्नोऽद्रिः ॥ रत्नसानुः रत्नानि सानावस्य ॥ सुरालयः सु-
राणामालयः पंचमेरोः ५० मंदारः मदते मोदयति मंदिस्तुतिमोदमदस्वप्नकांतिगतिषु आरन् प्रत्ययः मंदा आरा धारा यस्य सरलत्वादितिवा ॥ पारिजातकः
पारिणो जातः समुद्राज्जन्यत्वेनास्यास्ति तत्वतः स्वार्थेकन् ॥ संतानः सम्यक् तनोति पुष्पाणि ज्वलितिसूत्रेणणोन रूपसस्थानात् ण ॥ कल्पवृक्षः कल्पः संक-
ल्पितोऽर्थस्तस्य वृक्षः जन्यजनकभावसंबंधे षष्ठी ॥ हरिचंदनं चंदयति चदि आल्हादने ण्यानात्व्युः नद्यादित्वात् हरेश्चंदनं हरिचंदनमस्त्रीस्यात्त्रिदशाना-
महीरुहे नपुंसकं तु गोशीर्षे ज्योत्स्नाकुंकुमयोरपीत्युक्तत्वात् पंचैते देवतरवः तत्र हरिचंदनं क्लीबे पुंसि च ५१ सनत्कुमारः सनन्नित्यः कुमारः यद्वा हंसगो-

मेरुः सुमेरुर्हेमाद्रीरत्नसानुः सुरालयः ५० पंचैते देवतरवो मंदारः पारिजातकः ॥ संतानः कल्पवृक्षश्च पुंसि वा हरिचंदनं ५१ सनत्कुमारो
वैधात्रः स्वर्वैद्यावश्विनीसुतौ ॥ नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ ५२

द्रुहिणः सनत् इति ब्रह्मपर्यायेरमस तस्य कुमारो पत्यमतो वैधात्रः वि-
धुरपत्यं अण् सनत्कुमारोऽपि वैद्यसंहिता प्रणेतृत्वात् स्वर्वैद्य पर्यायसंनिधौ कथनं हंसनकादेः ॥ स्वर्वैद्यौ स्वः स्वर्गस्य वैद्यौ अश्विनीसुतौ अश्विन्याः सुतौ ॥ नास-
त्यौ नसत्यययोस्तावसत्यौ न असत्यौ नासत्यौ नभ्राण्नपादितिनञ् प्रकृतिभावः ॥ अश्विनौ प्रशस्ता अश्वाः संतिययोः यद्वा अश्विन्यांजातौ अश्वौ स्त्रि-
नकल्पेययोस्तौ ॥ दस्रौ दस्यतः क्षिपतः रोगान् दसु उपक्षये स्फायितंचीतिरक् ॥ आश्विनेयौ अश्विन्या अपत्ये स्त्रीभ्योढक् तावुभावितिनिहूत्वविशिष्टत्वादेकवच-
भाव इति गुरुचरणाः अयं च भाष्यविरोधात् देव्यां तस्यां प्रजायेतां नासत्यौ दस्र एव चेति मार्कंडेयात् नासत्याविति चैकवचनकस्योभयोः प्रयोगो गौणः त्रिष्वप्यानी-
तिमतम् षटश्विनौ ५२

१०

उर्वशीमुखाः उर्वशी प्रमुखा उरून्महतः अश्नुते व्याप्नोति वशीकरोतीति जारभरेतिवत्साधुः॥ अप्सरसः अद्भ्यः संसरंति अत्र अप्सरसः शब्दः एकस्यामपि व्यक्तौ सरतेर सून् अप्सराइति भाष्यादेकवचनमपि॥ स्त्रियांबहुषितिस्वर्वेश्या इतिप्रोच्यंते स्वः स्वर्गस्य वेश्याः तदुक्तं घृताचीमेनकारंभाउर्वशीचतिलोत्तमा सुकेशीमंजुघोषाद्याः कथ्यंतेऽप्सरसोबुधैः अप्सराइत्यपिप्रयोगदर्शनात्प्रायोबहुत्वं॥ हाहाः हाइतिशोकव्यंजकशब्दंजहाति ओहाक्त्यागेविच्॥ हूहूः हूइतिव्हयतिक्विपिसंप्रसारणेहलइतिदीर्घः एवंआद्याः एवमाद्योयेषां॥ त्रिदिवौकसां गंधर्वाः गंधंसौरभमर्वंति अर्वगतौ आद्यशब्दात्तुंबुरुविश्वावसुचित्ररथप्रभृतयः हाहाशब्दस्यरूपं तु हाहाः हाहौ हाहाः हाहां हाहौ हाहान् हाहासांतोपि गंधर्वोवीति हाहसोरितिसंसाराव र्तात् गंधर्वोहाहसिप्रोक्त इतिरत्नकोशात्च हाहाइत्यादिह्रस्वः हुहुरस्तुभ

स्त्रियांबहुष्वप्सरसः सर्वेश्याउर्वशीमुखाः॥ हाहाहूहूश्चैवमाद्यागंधर्वास्त्रिदिवौकसाम् ५३ अग्निर्वैश्वानरोवन्हिर्वीतिहोत्रोधनंजयः॥ कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्॥ ५४॥

यन्ह्स्वश्च गीतमाधुर्यसंपन्नौ विख्यातौचहहाहुहू इतिव्यासोक्तेः एकैकं ५३ अग्निः अंगति अगिगतौ अंगेर्नलोपश्चेतिसाधुः॥ वैश्वानरः विश्वेनराअस्य विश्वानरस्यापत्यंवा नरेसंज्ञइतिदीर्घः ऋष्यण्॥ वन्हिः वहतिहव्यं वहतर्निः॥ वीतिहोत्रः वीतिभक्ष्यंपुरोडाशादिहूयतेऽस्मिन् हूदानादनयोः वीतिक्तिन् कर्मणिअग्रेत्रन् वीतिरश्वोहोत्रं वहनमस्येतिवा॥ धनंजयः धनंजयतिरसत्सुम्॥ कृपीटयोनि कृपीटस्यजलस्ययोनिः कृपीटमुदरेजले इतिरत्नकोशात् कृपीटंयोनिरस्येतिवा॥ ज्वलनः ज्वलति जुचंइतियुच्॥ जातवेदाः जातंवेदोधनंयस्मात् जातवेदोविद्यतेवा विदसत्तायां जातंवेत्तिवेदयतेवा विदचेतनादावसून्॥ तनूनपात् तनूः शरीरंनपातयति इत्याद्यूह्यं ५४

२ बर्हि वृंहति बर्हिस्तुहो रस्य नलोप पुल्लिंगोयं बर्हि रूक्तोवृहद्भानुरित्सपरभांत्या शुक्रोवैश्वानरोबर्हि बर्हिःशुष्यान नूनपात् इतिबाह्वार्णवात् बर्हिशुष्योतिसज्ञसमज्ञा मेनिक्रचित् नत्रसमरूपस्येबर्हि कुश शुष्मवलमस्येतिविग्रहः बर्हिःसान बर्हिरिदन शुष्मेतिगोनः शुष्यत्सनेनेतिशुष्मा रुषशोषणेमनिन्॥ कृष्णवर्त्मा कृष्णोधू मावर्त्मास्यमार्ग ॥शोचिष्केशा शोचिषज्वाला केशाइवास्य॥उषर्बुध उषः सन्ध्यायांबुध्यते प्रकाशनेउषः प्रभातेसन्ध्यायामितिविश्व ॥आश्रयाश आश्रयमा धारमश्नाति कर्मण्यण् आशयाशइतिपाठान्तर तत्र आशेरते ऽत्रेत्याशयः तमश्नाति भाग्वदण्॥वृहद्भानु वृहन्तोभानवोऽस्येति॥कृशानु कृश्यति कृशानकृरणे आनुक्॥पावकः पुनाति पुञ्पवने ण्वुल् ॥अनल अनित्यनेन इषादित्वात्कलच् अनलोवसुभेदेऽपि ५५ रोहिताश्वः रोहिताअश्वायस्य तदुक्तं शालिहोत्रे वरुणस्वसिता

बर्हि शुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुध ॥आश्रयाशो वृहद्भानु कृशानुः पावकोऽनलः ५५ रोहिताश्वो वायुसखः शिखावानाशुशुक्षणि ॥हिरण्यरेता हुतभुक् दहनो हव्यवाहनः ५६ सप्तार्चिर्दमुनाः शुक्र

नश्वान् कुबेरकुमुदोपमान् हुताशन किंशुकाभान्वायुर्बभ्रूश्च यथावर्णोदितिरोहितोमृगे ऽश्वोवाहनमस्येतिवा आदिरपि॥ वायुसख वायोःसखा समासान्तेटच् अदनः वायुःसखा स्येतिवा अन्नपक्षे अनडि सखाइति॥ शिखावान् शिखा सन्त्यस्यमतुप्॥ आ शुशुक्षणिः आशुशीघ्रं आशुब्रीहौवा शुक्षणोति क्षणहिंसायामिति शुइति पूजार्थमव्यय॥ हिरण्यरेता हिरण्यरेतोऽस्य हिरण्यरेताःपुंसिस्याद्दिवाकरहविर्भुजोरि त्युक्तं॥हुतभुक् हुतंभुङ्क्ते क्विप्जानःशब्दः॥दहनः दहति नन्द्यादि ॥हव्यवाहन हव्यंवाहयति ण्यन्तात्वहेर्ल्यु ५६ सप्तार्चि सप्तार्चिषोयस्य काली कराली मनोजवा सलोहिता सधूम्रवर्णा स्फुलिङ्गिनी विश्वदासाख्याः सप्तवह्नेर्जिह्वा ॥दमुनाः दाम्यति दमुउपशमे दमेरुनसच् दमुनाः दमुनसौ दमुनसइत्यादि धूल्य दीर्घम- ध्योऽपि दमुना ॥शुक्र शोभयति शुक्ररेतोस्यास्त्रीत्वा ऋज्रेन्द्रेतिनिपातितः अरोपाद्यच् द्वितीयपक्षे॥

चित्रभानुः चित्रा भानवोऽस्य ॥ विभावसुः विभाप्रभातस्रुधनंयस्य ॥ शुचिः शुचिः पवित्रंकरोति शुचयति तत्करोतीतिण्यंतादचरः यद्वा शोचति ॥ अप्पित्तं अपांपि त्तमिव दाहकत्वात् चतुस्त्रिंशदग्नेः ॥ और्वः उर्वस्यमुनेरपत्यं ऋष्यण् ॥ वाडवः वडवायांभवः तत्रभवः ॥ वडवानलः वडवायाः अनलः आधाराधेयभावएवसंबं धत्वेनषष्ठ्यर्थः त्रीणि वाडवाग्नेः ५७ वन्हेः ज्वालकीलौ द्वयोः स्त्रीपुंसयोः स्तः ज्वलति ज्वलितिइतिणः कीलति कीलबंधे इगुपेतिकः ॥ अर्चिः स्त्रीनपुंसकयोः नपुं स्यर्चिरितिवक्ष्यमाणत्वात् अर्च्यते अर्चपूजायां अर्चिः सांतः इदंतोपि ॥ हेतिशिखेस्त्रियां हिनोति हंतिवा हिगतौ ऊतीत्यादिनासाधुः पंचज्वालायाः ॥ स्फुलिं गः स्फुरति अनुकरणं तेनलिंगति अच् ॥ अग्निकणः द्वे अग्नेः कणिकायां त्रिषु ॥ संतापः संतापयति तपसंतापे ॥ संज्वरः ज्वरयतीति उभाभ्यामपि अच् समौ

चित्रभानुर्विभावसुः ॥ शुचिरप्पित्तमौर्वस्तुवाडवोवडवानलः ५७ वन्हेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखास्त्रियां ॥ त्रिषुस्फुलिंगोऽग्निकणः संतापः संज्वरः समौ ५८ धर्मराजः पितृपतिः समवर्तीपरेतराट् ॥ कृतांतोयमुनाभ्राताशमनोयमराड्यमः ५९ कालोदंडधरः श्राद्धदेवोवैवस्वतोऽंतकः ॥

समानार्थौ ५८ धर्मराजः धर्मस्यराजा टच् ॥ पितृपतिः पितॄणांपतिः ॥ समवर्ती समंवर्तयितुंशीलमस्यणिनिः ॥ परेतराट् परेतेषुमृतेषुराजते सत्सूद्विति क्विप् ॥ कृतांतः कृतोंऽतोविनाशोयेन ॥ यमुनाभ्राता यमुनायाः भ्राता ॥ शमनः शमयति ॥ यमराट् यमेनसंयमेनराजते क्वि प् ॥ यमः यमयति तदुक्तंविश्वे यमोदंडधरे ध्वांक्षेसंयमेयमजेपिचेति ५९ कालः कलयत्यायुः कलसंख्याने कलेः अदंतेषुपाठात् मत्ताद्यण्युक्तः ॥ दंडधरः दंड स्यधरः ॥ श्राद्धदेवः श्राद्धस्यदेवः अंशभाक्त्वात् पितृपतित्वाद्वा ॥ वैवस्वतः विवस्वतोऽपत्य ॥ अंतकः अंतंकरोतीतिण्यंतात्ण्वुल् इतियमस्यचतुर्दशनामानि ॥

राक्षस रक्षत्यस्मात् रक्षपालने असुन् स्वार्थेअण्॥कौणप कुणपशवभक्षयितुशीलमस्य ण कर्तव्य कोणपानि पारक्षणे इत्याद्युक्त्य कौणपः॥क्रव्याल् क्रव्यमांसअत्ति
विट् क्रव्याद् कर्मण्यण् कुलंपकमुके पृषोदरादि॥अस्रप अस्रंरक्तं पिबति आतइतिकः अश्रप नश्रपयतिक्रव्यादत्वादश्रप ॥आशर आशृणाति हिनस्तीत्या
शरः शृहिंसायां पचाद्यच् आशिरइतिपाठेतु आशिरोहुनुष शकु क्रव्यादोश्रपआशार इतिससाराचर्त्रं ६० रात्रिचर रात्रौचरति॥रात्रिंचर चरेष्टः रात्रेः कृतिवि
भाषेति मुम्विकल्प ॥कर्बुर वर्णेन कर्बति कर्बहिंसायां कुरच् कर्बुरइतिपाठामरेतु नदाह नैर्ऋतः कर्बरः क्रव्यात्कर्बुरोयातुरक्षसी इतिशब्दार्णवः कुणाति कृहिंसा
यां घस्य्॥निकषात्मज निकषाया आत्मजः॥यातुधानः यातूनि रक्षांसिदधाति पुण्यानि युचल्युड्वा स्वजातिपोषकत्वात् यातूनि धीयते स्मिन्निति वा ल्युट्

राक्षसः कौणप क्रव्याक्रव्यादोस्रपआशरः ६० रात्रिचरोरात्रिचरः कर्बुरो निकषात्मजः॥यातुधान पुण्यजनो नैर्ऋतो यातुरक्षसी ६१
प्रचेतावरुण पाशीयादसांपतिरप्पति ॥श्वसनः स्पर्शनो वायुर्मातरि श्वासदागति ६२

जातुधानइत्यपि तभेत्य जातुकदाचिज्ञानसन्निधान
मस्येति॥पुण्यजन पुण्यश्चासौजनश्च॥नैर्ऋतः निर्ऋतेरपत्य॥यातु॥र क्ष यातुरक्षसी नपुंसके पचदश राक्षसस्य ६० प्रचेता प्रचेतयति चिती धातोरसुन् प्रकृ
ष्टचेतोऽस्येति वा प्रचेता पाशनिपुणे पुंसिद्रूपो चवाच्यवत् इत्युक्तं॥वरुण व्रियते वृणोति वा वृञ्वरणे उनन् वरुणस्तरुभेदेप्सु प्रतीचीपतिसूर्ययो रित्यु॰॥ वरुणो
पि॥पाशी पाशोस्यास्ति मत्वर्थे अच् तदुक्तं विश्वे पाशी पाशधरे यतावति॥यादसांपति षष्ठ्या अलुक्॥अप्पति अपांपति पचवरुणस्य॥श्वसनः श्वसित्यनेन श्वसप्राण
नेकरणे ल्युट्॥स्पर्शनः स्पृशति स्पृशस्पर्शने बहुलमन्यत्रापीति युच्॥तदुक्तं विश्वे स्पर्शनो मारुते स्पर्शदानयो स्पर्शनमतमिति॥वायु वाति वागतिगंधनयोः उण्प्र
त्यये युक्॥मातरिश्वा मातरिश्वनरिक्षेश्वयति सञ्चरति श्वन्नुक्षन्निति निपातना त्सप्तम्या अलुक् श्वसने कनिन् इत्याद्युक्त्य सदागतिः सदागतिरस्य ६२

पृषदश्वः पृषन्मृगभेदोऽश्वोवाहनमस्य यद्वा पृषता मंदुकणानामश्वइवेति गंधवहः वहति पचाद्यच् गंधस्यवहः गंधवाहः कर्मण्यण् ॥ अनिलः अनित्यनेन इलच् ॥ आशुग आशुगच्छति डप्रत्ययः ॥ समीरः सम्यगीर्तेगच्छति ईरयति प्रेरयतिवा पर्यंताद्वा अच् ईरगतौ ॥ मारुतः म्रियंतेऽनेन मृग्रोरुतिः स्वार्थेण् ॥ मरुत् मरुतशब्दोपिबोध्यः तदुक्तं विक्रमादित्यकोशे मरुतः स्पर्शनः प्राणः समीरो मारुतो मरुदिति मारुतः श्वसनः प्राणः समीरो मरुतो जगदिति संसारावर्ताच्च अतएवजगत्प्राणो पृथगपि तदुक्तं रुद्रकोशे जगत्स्यादिष्टपे क्लीबं वायौ ना जंगमेत्रिषु इति जगती भुवनेख्याता छंदोभेदेजलेपिचेतिविश्वश्च ॥ जगत्प्राणः जगतां प्राणः एकत्वात् ॥ समीरणः ण्यतान्ल्युः ६३ नभस्वान् नभोस्यास्त्याश्रयत्वे नास्ति मतुपि भत्वं ॥ वातः वाति वातिरपि तदुक्तं साहसांके वायुर्मरुत्वान् श्वसनः पवनोमरुतोनिलः न

पृषदश्वोगंधवहोगंधवाहानिलाशुगाः ॥ समीरमारुतमरुज्जगत्प्राणसमीरणाः ॥ ६३ ॥ नभस्वद्वात पवनपवमानप्रभंजनाः ॥ प्रकंपनोमहावातो झंझावातःसवृष्टिकः ६४ प्राणोपानःसमानश्चोदानव्यानौ च वायवः ॥ शरीरस्थाइमेरंह

भस्वान् क्षिपणुर्वातिशफाषितोनघटोवहइति पवनः पुनाति बहुल मन्यत्रापीतियुच् ॥ पवमानः पवतेपूङ्ञोः शानन् आनेमुक् ॥ प्रभंजनः प्रकृष्टंभनक्ति भंजआमर्दने युच् विशनिर्वातस्य ॥ प्रकंपनः नंद्यादिः ॥ महावातः कृपमहावायोः ॥ सएवसवृष्टिकः झंझावातइत्युच्यते ६४ प्राणः अपानः समानः उदानः व्यानः इमेशरीरस्थावायवः स्युः तत्र हृदिप्राणो गुदेपानः समानोनाभिमंडले उदानः कंठदेशोस्याद्व्यानः सर्वशरीरगः अन्नप्रवेशनं मूत्राद्युत्सर्गोऽन्नविपाचनं भाषणादिनिमेषादितद्व्यापाराः क्रमादमीत्यक्तत्वात् प्राणोत्स्त्रीमारुते वाले काव्येजीवेऽनिले बिले पुल्लिंगेपूरितेवाच्यलिंगे पुं भूम्नि चासषु एकैकं ॥ रंहः रमतेऽनेन रमतेस्सून् हुगागमश्च रंहत्यनेनवा रहिगतौ असुन् ॥

'को तर तरत्यनेन तृप्लवनतरणयोः असुन् ॥ रयः रीणात्यनेन रीगतिरेषणयोः एरच् रयत्यनेनवा रयगतौ ॥ स्यद स्यदते ऽनेन स्यदोजवे ६५ जवः जुधातोरप् रहआदयः
सवेगगतिवचना पंचवेगस्य ॥ शीघ्र शिघ्यति व्याप्नोति शिघ्र आघ्राणे शघादयश्चेतिरंगतौ निपातः ॥ त्वरित त्वरतेस्म ञित्वरा संभ्रमे गत्येतिक्त कर्तरि ॥ लघु लघते लघिग
तौकुप्रत्ययेनलोप ॥ क्षिप्र क्षिपति क्षिपप्रेरणे रक् ॥ अर रुगतौ अच् नदुक्त राध्यते अरमगेरयामस्यशीघ्रशीघ्रगयोरपि ॥ द्रुत द्रुवतिस्म द्रुगतौ गत्येतिक्त ॥ सत्वर सहत्व
रयावर्तते ॥ चपल चोपति चुपमंदायांगतौ कलप्रत्ययेउकारस्यअत् ॥ तूर्ण ॥ अविलंबित विलंबतेस्म लंबि अवस्रंसने अकर्मकत्वात्कर्तरिक्त नञ्समास ॥ आशु अश्नुते
अश्व्याप्तौ उण् प्रत्यय एवमेकादशत्वरितस्य ॥ नत्रशीघ्रादयस्तु धर्मवचना एव अएवशीघ्रपचतीतिप्रयोगो नतुजवपचतीति वस्तुतस्तु वेगारब्धागुणपरारहः अ

त्वरसातुरम स्यद ६५ जवोथशीघ्रत्वरितलघुक्षिपमरद्रुत ॥ सत्वरचपळतूर्णमविळंबितमाशुच ६६ सततेनारताश्रांतसंतताविरतानि
शं ॥ नित्यानवरताजस्रमप्यथातिशयोभर ६७ अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरं ॥ नय शीघ्रादयस्तु कात्वाल्पत्वपरा इति ६६ सतत सन
त्यनेस्म तनुविस्तारे लोप समोवाहितततयो क्त ॥ अनारत आङ्पूर्वेरमिविरामेअविद्यमान आरतयस्मिन् ॥ अश्रांत श्रमेः क्त नञासमासः ॥ संतत अनिश नास्तिनि
शायस्मिन् ॥ नित्यस्त्यप्ने ॥ अनवरत नास्त्यवरतयत्र ॥ अजस्र नजस्यतिजसुमोक्षणे रप्रत्ययः ॥ सततमजस्त्र शब्दावव्ययावपिनित्यपर्यायौस्तः सततक्रियानैरन्-
व्यवधान ॥ अतिशयस्तु पीनःपुन्य इति भेदः इतिनवक ॥ अतिशय अतिशेते पचाद्यच् ॥ भर भरति भृञ् भरणे पचाद्यच् ६७ अतिवेलं अतिक्रांत वेला मर्यादाम्
नायर्थे द्वितीययेतिसमासः ॥ भृश भृशते भृश भ्रंशु अध पतने इगुपेतिक ॥ अत्यर्थ भृशअर्थोनिवृत्तिविषयोयातमतिक्रांतमत्यर्थ ॥ अतिमात्र मात्रास्तोक
नामतिक्रांत ॥ उद्गाढ उद्गाहतेस्म गाहूविलोडने क्त ॥ निर्भर निःशेषणभरोऽत्र ॥

तीव्रं तीवति तीवस्थौल्ये बाहुलकात् रक्॥ एकांतं एकोंतोनिश्चयो ऽत्रेति॥ नितांतं नितान्म्यतिस्म तमुकांक्षायांक्तः॥ गाढ बाढं दृढं इमेक्तांताः शीघ्रादि शीघ्रंत्वरित-
मित्यारभ्य दृढशब्दपर्यंतं क्लीबे नपुंसक लिंगे यदुक्तंतत्तु असत्वे द्रव्यवृत्तित्वाभावे एवज्ञेयं यथा शीघ्रं कृतवान् शीघ्रंजुहोति भृशंमूर्खः भृशंपाति ६८ एषांशीघ्रादीनां
मध्येयत्सत्वगामिद्रव्यवृत्ति तत्त्रिषु तस्यद्रव्यस्य यल्लिंगं तदेवास्येत्यर्थः यथा शीघ्राजरा शीघ्रो मृत्युः शीघ्रंगमनं अतिशय भरयोरसत्ववचनत्वेपिपुंस्त्वमेव पु
ल्लिंगनिर्देशात् तदुक्तं रभसे गाढैकांत नितांतानि पुमानतिशयो भरइति क्वचिद्द्विगामी तिपाठस्तस्य विशेष्यगामीत्यर्थः॥ कुबेरः कुत्सितंबेरं शरीरंयस्य कुष्ठित्वा-
त् कुत्सायां किंतिशब्दोयंशरीरं बेरमुच्यते कुबेरः कुशरीरत्वान्नाम्नातेनैवसोंकित इति वायुपुराणं यद्वा कुंबति कुंबिच्छादने कुंबेर्नलोपश्चेत्येरक्॥ त्र्यंबकस-

तीव्रैकांत नितांतानि गाढबाढदृढानिच ६८ क्लीबे शीघ्राद्यसत्वेस्यात्त्रिष्वेषांसत्वगामियत्॥ कुबेरस्त्र्यंबकसखो यक्षराड्गुह्यकेश्व-
रः ६९ मनुष्यधर्मा धनदोराजराजो धनाधिपः॥ किन्नरेशोवैश्रवणः पौलस्त्योनरवाहनः ७० यक्षैकपिंगैलविल

खः त्र्यंबकस्यसखा स
मासांतः टच्॥ यक्षराट् यक्षेषुराजेति क्विप्॥ गुह्यकेश्वर .गुह्यंकायंति गुह्यकानामीश्वरः ६९ मनुष्यधर्मा मनुष्यस्येवधर्मो ऽचारः श्मश्रुलोमत्वादिरस्य धर्मादनिच्
॥ धनदः धनंदयते देङ्पालने आतइतिकः॥ राजराजः राज्ञांयक्षाणां राजा राजेतिडच् यक्षेचंद्रेचराजास्यादितित्रिकांडशेषः॥ धनाधिपः धनानामधिपः॥ किं-
न्नरेशः किन्नराणामीशः॥ वैश्रवणः विश्रवसो ऽपत्यं शिवादिगणेस्यविश्रवण रवणादेशौ निपातितौ॥ पौलस्त्यः पुलस्तेर्गोत्रापत्यंपुमान्॥ गर्गादियञ्॥ नरवाहनः नरो
वाहनमस्य ७० यक्षः ईंलक्ष्मीं अक्ष्णोति व्याप्नोति अक्षूव्याप्तौ कर्मण्यण् यक्षते यक्षपूजायां जयतिशिवं इज्यतेलोकेनवा कर्मणिघञ्॥ एकपिंगः एकंपिंगमस्य॥
ऐडविडः इडविडो ऽपत्यं डलयोरेकत्वस्मरणादैलविलोपि इडविलाया अपत्यमिति वाविग्रहः इडविडा अस्तिमातृत्वेनास्येतिवा॥

श्रीदः श्रियंददाति इत्यातिवा आतश्चोपसर्गे इति कः ॥ पुण्यजनेश्वरः पुण्यजनानामीश्वरः ससदृशः कुबेरस्य ॥ अस्येतिप्रत्येकसंबध्यते अस्यकुबेरस्य उद्यानं चैत्ररथं स्या
त् उद्यांतियस्मिन् अधिकरणेल्युट् चित्ररथेननिर्वृत्तं तस्येदमित्यण् एकं ॥ अस्यपुत्रोनलकूबरः स्यात् नलः कूबरोयुगंधरोयस्य त्रिकांडशेषेतुपुत्रौतुनलकूब
र विलकर्के तत्तुनासत्याविवतिवत् औपचारिकबोध्य नलकूबरमणिग्रीवयोस्तत्पुत्रयोः पुराणप्रसिद्धत्वात् नलकूबरमणिग्रीवाविति स्याना तौ श्रियान्विता
विति भागवत एकं ७१ अस्यस्थानं कैलासः केजलेलासो लसनमस्य कैलासः स्फटिकः तस्यायंकैलासः तस्येदमित्यण् यद्वा केलीनां समूहे कैलं तेनआस्यते
त्र आसउपवेशने हलश्चेतिघञ् ॥ अस्यपूर्नगरं अलका अलति भूषयति अलभूषणादिषु ष्वुन् क्षिपकादित्वादित्वं ॥ अस्यविमानंपुष्पकं पुष्यति पुष्पति

श्रीदःपुण्यजनेश्वरः ॥ अस्योद्यानंचैत्ररथंपुत्रस्तुनलकूबरः ७१ कैलासःस्थानमलकापूर्विमानंतुपुष्पकं ॥ स्यात्किन्नरःकिंपु
रुषस्तुरंगवदनोमयुः ७२ निधिर्नाशेवधिर्भेदाःपद्मशंखादयोनिधेः ॥ ॥ इतिस्वर्गवर्गः ॥

कसने पुष्पमिव इत्यर्थे कन् इत्येकैकं ॥ किन्न
रः किंकुत्सितो नरः एवंकिंपुरुषः ॥ तुरंगवदनः तुरंगस्येववदनमस्य कस्यचित्नरमुखाश्वकायत्वात् कस्यचिदश्वमुखनरशरीरत्वात् ॥ मयुः मिनोति डु
मिञ्प्रक्षेपणे उभत्वयेमीनाम्नीत्यालन चत्वारिकिन्नरनामानि ७२ निधिः निनरा धीयते धाञः किः नितरांदधाति पोषयत्यनेन निधीयतेनाधिधारणे सप
दादि: आगमानित्यत्वान्नलुक् ॥ शेवधिः शेकल्याणे मोहे चावधिः तत्पुरुषे इत्यलुक् इत्यलुक् सामान्यनिधेः नामनी प्रसि ॥ पद्मः पद्मालक्ष्मीरस्मिन्नस्ति
मत्वर्थेच् ॥ शंख तदुक्तं शब्दार्णवे पद्मोस्त्रियां महापद्म शंखो मकरकच्छपौ मुकुंदकुंदनीलाश्च खर्वश्चनिधयो नवेति इत्यादयो निधेर्भेदाः एकैकं इतिस्वर्गवर्ग

द्यो द्योतनेइतिद्यौः द्यौः स्त्रः दिवुशब्दः॥ अभ्रं आपो अभ्रंति अस्मात् अपादाने घञ् यद्वा अभ्रति स्थैर्यं गच्छति अभ्रवभ्रमभ्रचरगत्यार्थाः अच् यद्वा न भ्राजते भ्रजृदी-
प्तौड्ः॥ व्योम व्ययति व्यञ्संवरणे नामन्सीमन्निति साधुः॥ पुष्करं पुष्यति पुषपुष्टौ पुष किन्इतिकरन्॥ अंबरं अंबः शब्दः तं राति आनइतिकः॥ नभः नत्यते मेघैः णः
हबंधने असन् भादेशः तदुक्तं विश्वे नभोव्योम्नि नभामेघे श्रावणे च पतद्गृहे घ्राणे मृणालसूत्रे च वर्षासु च नभास्मृत इति॥ अंतरिक्षं द्यावापृथिव्योरंतरीक्षते ईक्ष
दर्शने ह्रस्वः कर्मणि घञ् अंतरीक्षमपि ह्रस्वो न क्रियते॥ गगनं गच्छंत्यनेनास्मिन् युचू गादेशः॥ अनंतं नास्त्यंतोस्य॥ सुरवर्त्म सुराणां वर्त्म खं खन्यते खनुअवदा-
रणे ड्ः खर्वं त्यस्मिन्निति वा खर्वगतौ १ वियत् विविश्वत एति व्याप्नोति इणः शतृ वियच्छति यमेः क्विप् न विरमति वा॥ विष्णुपदं विष्णोः पदं आस्पदं स्वरूपं वा आसमंता-

द्योदिवौद्वे स्त्रियामभ्रं व्योमपुष्करमंबरं॥ नभोंतरिक्षं गगनमनंतं सुरवर्त्मखं १ वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी॥ विहायसोपि नाकोपि द्युरपि स्यात्तदव्ययं २ "तारापथोंतरिक्षं च मेघाध्वा च महाबिलं" इति व्योमवर्गः दिवस्त्रः ककुभः काष्ठा

त्काशंते सूर्यादयोऽत्र काशृदीप्तौ
अधिकरणे घञ्॥ विहायः विशेषेण हाययति गमयति विमानादीन् हयगतौ पर्यंतादसुन् किजहातिभ्रवंवा विदुर्विहायसं व्योम पक्षिणश्च विहायस इति शाश्व-
तः विहायाः शकुनौ पुंसि गगने पुन्नपुंसक मित्युक्तत्वाच्च॥ विहायसः॥ नाकः॥ द्युः इत्येकोनविंशतिराकाशस्य तत्र द्यो दिवौ स्त्रीलिंगे आकाशविहायसी क्लीबपुंसोः
विहायसनाको पुंसि द्युरव्ययं अलिंगमित्यर्थः शेषं क्लीबं इति व्योमवर्गः॥ ॥ दिशः दिशत्यवकाशं दिशअतिसर्जने ऋत्विगिति क्विन्॥ ककुभः ककते ककलौल्ये बाहुलका-
दुभ यद्वा कुं वायुं स्कुभ्नाति विस्तारयति स्कुंभ इति सौत्राद्धातोः क्विप् अत्र पक्षे पृषोदरादित्वात्सलोपः केनादित्येन जलेन वा कुत्सितानि भानि नक्षत्राण्यत्रेति टाप्पक्षे इदं
काष्ठः काशते क्थन्

को

आशाः आसमतादश्नुते व्याप्नोति अच् ॥ हरितः हरंतिनयंत्यनयाइतिः पचकं दिशा ॥ नाः पूर्वदक्षिणपश्चिमा क्रमेणप्राच्यवाची प्रतीच्य स्युः यथा पूर्वादिक् प्राचीप्र थम्येमशब्दोप्र प्राञ्चति प्राप्नोतिसूर्य अञ्चुगतिपूजनयोः ऋत्विगितिक्विन् ॥ दक्षिणादिगवाची अन्होमध्य अञ्चत्यस्या अपाचीइत्यपि स्यात्प्रिगते अपांचतिसूर्य ॥ प श्चिमादिक्प्रतीची प्रतिपश्चाद्दिनांतेचतिसूर्य एकैक ॥ याउत्तरादिक् साउदीची उद् ऊर्ध्वतरत्यत्र तृप्लुवनतरणयो अधिकरणेअप् इत्याप्नूत्य एक ॥ दिग्स दिग्भवे दि शिभवतत्रस्यात् दिगादिभ्योयत्प्रत्यय वत्त्रिषुवाच्यलिंग यथा दिश्योहस्ती प्रत्योक्जतत्त्वन एवस्त्रियाक्लीबेच १ इन्द्रादयोऽष्टौक्रमात्पूर्वादीनां दिशांपतय एकैक

आशाश्चहरितश्चता ॥ प्राच्यवाचीप्रतीच्य स्ता पूर्वदक्षिणपश्चिमा ॥ उत्तरादिगुदीचीस्याद्दिश्यंतुत्रिषुदिग्भवे १ "अवाग्भवमवाचीनमु दीचीनमुदग्भव ॥ प्रत्यग्भवप्रतीचीनप्राचीनप्राग्भवंत्रिषु १" इन्द्रोवह्निः पितृपतिर्नैर्ऋतोवरुणोमरुत् ॥ कुबेरईश पतय पूर्वादीनांदि शांक्रमात् २ ऐरावतःपुंडरीकोवामनःकुमुदोऽजनः ॥ पुष्पदंतःसार्वभौम स्कप्रतीकश्चदिग्गजा ३ करिण्यो ऽभ्रमुकपिला पिंगलानुप- माःक्रमात् ॥ २ ऐरावतादयोऽष्टौ क्रमाद्दिग्गजा यथा ऐरावत ब्युत्पादित ॥ पुंडरीक पुंडरीकवर्णयोगात् मत्वर्थेच ॥ वामनः खर्वत्वात् ॥ कुमुद कुमुदरक्तोत्पलतत्तुल्य वर्णत्वात् पूर्वैर्ज्ञकुमुद कैरवेरक्तपद्मेऽस्त्रीकुम्भिर्यौषधाविकक्रत्वात् कौमोदतेवा मुदहर्षे इगुपेनिक ॥ अजनः अजनवर्णत्वात् अच् पुष्पदंत पुष्पमिवदंतायस्य ॥ सार्वभौम सर्वस्याभूमौविदित नत्रविदितइत्यण् ॥ सुप्रतीक शोभना प्रतीका अवयवाः यस्य स्कप्रतीकोदिग्गीशोभेशोभनाक्यपेत्रिषुइत्क० एकैक ३ अभ्रमु न- भ्राम्यति अभ्र आकाशएवभातिइतिवा भामाने औणादिक कु ॥ कपिला कपिलवर्णत्वात् ॥ पिंगला पिंगलवर्णत्वात् उभयत्रमत्वर्थे ॥ अनुपमा नास्त्युपमायस्य

ताम्रकर्णी ताम्रौकर्णौयस्याः नासिकेतिङीष् ॥ शुभ्रदंती शुभ्रौदंतौयस्याः उक्त एवङीष् ॥ अंगना अंगति अभिगतोसुच् ॥ अंजनावती अंजनमस्त्यस्याः मतौ ब-
ह्लचइतिदीर्घः क्रमेणऐरावतादीनांहस्तिनीनामेकैकं ४ दिशोर्मध्येदिग्द्वयमध्यभागे अपदिशं क्लीबाव्ययं क्लीबंचततु अव्ययंच ॥ विदिक् दिग्भ्यांविनिर्गता स्त्रि-
यां तदुक्तम परमालायां यान्यासामंतरालानिप्रदिशांविदिशश्चताइति ५ अभ्यंतरं अभिगतमंतरं ॥ अंतरालं अंतरलाति आतइतिकः आङ्अश्लेषोवा द्वे अंतरावका-
शस्य ॥ चक्रवालं चक्राकारेणवलते वलसंवरणे अन्येषामितिदीर्घः इत्याद्यूह्यं ॥ मंडलं मंडयति मडिभूषायां कलच् मंडंभूषांलातीतिवा आतानुपे तिकः द्वे मंड-
लाकारेणपरिणतसमूहस्य ॥ अभ्रं अपांबिभर्ति मूलतिकः अभ्रतिवा अभ्रगतौ अच् नभ्रश्यंत्यापोस्माद्वा डः अभ्रं मेघेचगगने धातु भेदेच कांचन इत्युक्त

ताम्रकर्णीशुभ्रदंतीचांगनाचांजनावती ४ क्लीबाव्ययंत्वपदिशंदिशोर्मध्येविदिक्स्त्रियाम् ५ अभ्यंतरंत्वंतरालंचक्रवालंतुमंडलम् ॥
अभ्रंमेघोवारिवाहस्तनयित्नुर्बलाहकः ६ धाराधरोजलधरस्तडित्वान्वारिदोंबुभृत् । घनजीमूतमुदिरजलमुग्धूमयोनयः ७

त्वात् ॥ मेघः मेहति मिहसेचने पचाद्यच् कुत्वं ॥ वारिवाहः वारि वहति कर्मण्यण् ॥ स्तनयित्नुः स्तनयति स्तनगदी देवशब्दे इत्नुचिणेरय् ॥ बलाहकः पृषोदरादिः बलाका-
भिर्हीयते गम्यते ओहाङ्गतौ कर्मणि क्वुन् पृषोदरादिः इत्याद्यूह्यं ६ धाराधरः धाराणाजलस्यच धरः धाराधरोसिमेघयोरित्युक्तत्वात् ॥ जलधरः अच् ॥ ताडित्वान् तडितःसंत्य-
स्मिन् मतुप् मत्वात्तदः ॥ वारिदः वारिददातिकः ॥ अंबुभृत् अंबुबिभर्ति क्विप्तुक् ॥ घनः हन्यतेवायुना अप्कुत्वंच घनःस्यात्कास्यतालादिवाद्यमध्यमनृत्ययोरित्युक्तत्वात् ॥
जीमूतः जीवनंजलमूतंबद्धमनेन मूङ्बंधने पृषोदरादिः जियावयोहान्यामूतोबद्ध इतिवा ॥ जलमुक् जलंमुंचति मुच्लृमोक्षणे क्विप् ॥ धूमयोनिः धूमोयोनिरस्य इति
पंचदशमेघस्य ७

कादंबिनी कदंबस्य निकुरंबः कदंबोऽस्त्यस्याः ॥ मेघमाला द्वे मेघवृंदस्य ॥ मेघभवे अभ्रियं अभ्रे भवं अभ्रियं तथा अभ्रिया आपः अभ्रियं धारासंपातं अभ्रियं सुदकं
घप्रत्ययः एकं ॥ स्तनितं स्तनगदद्देवशब्दे ॥ गर्जितं गर्जशब्दे ॥ रसितं रसशब्दे रसितादि च इत्येकेन साधवः आदिना ध्वनितह्रादरसादयः त्रयं मेघनिर्घोषे स्यात् ८ श
पा शम्यरवे पिबति कः ॥ शतन्हदा शतन्हदा अपि अगाधजलाशयाः सन्त्यस्याः इति वा ॥ ह्रादिनी ह्रादने ह्रादो स्त्रियस्याः इति वा ह्रादिनी वज्रं तडिनो रिस्फूर्ज
त्वात् ॥ ऐरावती इरा आपः सन्त्यस्य इरावान् मेघः तस्येयं तस्येदमित्यण् नदतान्ङीप् ॥ क्षणप्रभा क्षणप्रभास्याः तडित् ताडयति तड आघाते ताडेर्णिलुक् चे
तिसाधुः डलयोरभेदात् तलिदपि ॥ सौदामनी सुदाम्ना अद्रिणा एकदिक् अण् सुदाम्नि मेघे भवा सौदामिनीत्यपि पाठः सुदामा तु पुमान् वारिधरपर्वतभेदयोरि

कादंबिनी मेघमाला त्रिषु मेघभवेऽभ्रियम् ॥ स्तनितं गर्जितं मेघनिर्घोषे रसितादि च ८ शंपा शतह्रदा ह्रादिन्यैरावत्यः क्षणप्रभा ॥ त-
डित्सौदामनी विद्युच्चंचला चपला अपि ९ स्फूर्जथुर्वज्रनिर्घोषो मेघज्योतिरिरंमदः ॥ इंद्रायुधं शक्रधनु

स्तुरुत्वात् ॥ विद्युत् विशेषेण द्योतते द्यु
नदीप्सौ क्विप् ॥ चंचला चंचु गतौ घञ् चंचडातिकः चंचलात्तु तडित्सस्यौ भ्रचलभूपंडेन च इत्युक्तत्वात् ॥ चपला चोपनि तु पमदायागतौ चपलाकमला विद्युत्तु अवलीपिप्पि
लीषु च नपुंसकं तु शीघ्रे स्याद्वाच्यवत्तु रत्नेपच इत्युक्तत्वात् दशविद्युतः ९ स्फूर्जथु स्फूर्जनं तु ओस्फूर्जो वज्रनिर्घोषे अथुच् ॥ वज्रनिर्घोषः अशनिशब्दः वज्रनिष्पेष
इत्यपि पाठे निष्पेषशब्दः तद्गुत्परः पिष्लृ संचूर्णने संघट्टनमात्रपर इत्यन्ये द्वे वज्रध्वने ॥ मेघज्योतिः मेघअन्योन्यसंघट्टनेन मेघाग्नि सत्यरक्षादौ ज्योतिः पततीति
त्यर्थः ॥ इरंमदः इरया जलेन माद्यति दीप्यते वा उग्रंपश्येरंमदेति साधुः अविधनत्वात् द्वे मेघज्योतिषः वीजइति भक्तिलूस्य ॥ इंद्रायुधं इंद्रस्यायुधं ॥ शक्रधनुः शक्रस्य ध
नुः ॥

ऋजुरोहितं ऋजुचतद्रोहितंच रोहः संजातोऽस्य इतच् ऋजु अवक्रं तदुक्तं विश्वे रोहितं रुधिरे प्रोक्तं ऋजुशक्रशरासने रोहितो मीनमृगयोर्भेदे रोहितकद्रुमइति इति त्रीणि मेघप्रतिफलितारविरश्मयो धनुराकारेण भ्रांतितस्य धनुषः १० वृष्टिः वर्षणं वृषुसेचने क्तिन् ॥ वर्षं द्वयं मेघवर्षणस्य ॥ तद्विघाते वृष्टिविघाते अवग्राहः अवेग्रहेतिघञ् पक्षे अप् ॥ अवग्रहः एतद्द्वयंस्यात् ॥ धारासंपातः धाराणांसंपातः संभूयपतनं घञ् ॥ आसारः सरते भावे घञ् तदुक्तं विश्वे आसारः स्यात्प्रसरणे धारावर्षेसकृद्बलइति हैमहावृष्टेः शीकरइत्येकं अंबुकणानां शीकृसचने अरन् दंत्यादिरप्ययं ११ वर्षोपलः ॥ करका कृणोति कृञ् हिंसायां संज्ञायांवुन् पुंस्य

स्यादेवमृजुरोहितं १० वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ ॥ धारासंपात आसारः शीकरोंबुकणाः स्मृताः ११ वर्षोपलस्तु करका मेघच्छन्नेऽह्नि दुर्दिनम् ॥ अंतर्धा व्यवधा पुंसि त्वंतर्धिरपवारणं १२ अपिधानतिरोधानपिधानाच्छादनानि च ॥ हिमांशुश्चंद्रमाश्चंद्र इंदुः कुमुदबांधवः १३

पि तदुक्तं वर्षोपलस्तु करका करकोपिच दृश्यते द्वे यत्प्रथमवृष्टौ मेघादिकं कठिनं सदुपलवत्पतति तस्य ॥ मेघच्छन्नेऽह्नि दुर्दिनं रात्रेरप्युपलक्षणं ॥ दुर्दिनं जलदध्वांतमितिरत्नकोशः एकं ॥ अंतर्धा ॥ व्यवधा उभयत्राप्यङ् ॥ अंतर्द्धिः अपवारणंस्यात् पुंसि १२ अपिधानं ॥ तिरोधानं ॥ पिधानं ॥ आच्छादनं अष्टकमाच्छादनस्य इमेसर्वेल्युडंता धवः ॥ हिमांशुः हिमा अंशवोयस्य ॥ चंद्रमाः चंद्रं कर्पूरं साददृश्येन माति तुलयति माधातोरसुन् सचडित् चंद्रमाल्हादं मिमीते निर्मिमीते इतिवा केवलादसुन् कालंमिमीते माश्चारो चंद्रस्य चंद्रमाइतिच ॥ चंद्रः चंदयति चदि आल्हादे रक् हिमांशुश्चंद्रमाश्चंद्रः शशी चंद्रो हिमद्युतिरिति शब्दार्णवः ॥ इंदुः उनत्ति उंदी क्लेदने ॥ कुमुदबांधवः कुमुदानां बांधवः १३

श्री विधुः विशेषेयधयत्सेनसुरा धेट्पाने बाहुलकात्कुः तदुक्तं विश्वे विधु शशांके कर्पूरे हृषीकेशे च राक्षसे इति॥ सुधांशुः सुधायुक्ता अंशवोऽस्य॥ शुभ्रांशुः शुभ्रा अंशवोऽस्य॥ ओषधीशः ओषधीनामीशः॥ निशापतिः निशाया पतिः॥ अब्जः अब्धौ जातः डः॥ जैवातृकः जीवयति अनर्थावितण्यर्थं आतृकन् तदुक्तं रभसे जैवातृकः पुमान्सोमे कृषकायुष्मतोस्त्रिष्विति॥ सोमः अमृतं सूते सन् सूयते जायते इति सुत्सक्त सूयते यज्ञाङ्गस्यान्नं वा करोति सूते अमृतं वा सोम इति वा षञ् अभिषवे सूपेरणे वेति सोमापि नामन् सीमन् सोमन् इत्यादि॥ ग्लौः ग्लायति ग्लै हर्षक्षये डौ॥ मृगाङ्कः मृगाङ्कोऽस्य॥ कलानिधिः कलानि धीयते तत्र डुधाञ् किः १४ द्विजराजः द्विजानां राजा राजेति टच् तदुक्तं विश्वे द्विजराज शशधरे सौपर्णे ननमोगिनीति॥ शशधरः शशस्य धरः॥ नक्षत्रेशः नक्षत्राणामीशः॥ क्षपाकरः क्षपाकरो

विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः॥ अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः १४ द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः॥ कला तु षोडशो भागो बिम्बोऽस्त्री मण्डलं त्रिषु १५ भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके॥

ति विंशतिचन्द्रस्य चन्द्रमण्डलस्य षोडशभागः कलासंज्ञः कलयति कलरस्थाने पचाद्यच् कल्यते वा एकः॥ बिम्ब बिम्बेति शोभनेवीगत्यादौ तदुक्तं हैमे बिम्बं तु प्रति बिम्बे स्यान्मण्डले बिम्बिकाफलइति॥ मण्डलं मण्डयति मडी भूषायां तदुक्तं विश्वे स्यान्मण्डलं द्वादशराजकेन देशेनाबिचेन कदम्बकेन कुष्ठभेदेष्वुपसूर्यकेऽपि भुजगभेदे शुनि मण्डलस्यादिति द्वेर क्त्विद्रमण्डलस्य १५ भित्तादिचतुष्कं शकलस्य तत्र भित्तं भिद्यतेस्म॥ शकलं शकोति शक्यते वा शकृधकौ कलच् तदुक्तं विश्वे शकलं त्वचि खण्डे च रागवस्तुनि वल्कले इति॥ खण्डः खण्ड्यते कर्मणि घञ् खडि भेदने एते त्रयः क्लीबपुंसोः वर्तन्ते॥ अर्धः पुंस्येव यथा कवलस्यार्धः खण्ड वाच्यलिङ्गोऽपि यथा अर्धशाटी अर्धः पटः अर्धं गारं अर्धमित्येकः समेऽंशभागे नपुंसकमेव कृधुलक्षे करणे घञ्॥

चंद्रिका चंद्रोऽस्त्यस्याः ठन् अतइनिठनौ ॥ कौमुदी कुमुदानामियं अण् ॥ ज्योत्स्ना ज्योतिरस्त्यस्यां निपात्यते तदुक्तं विश्वे ज्योत्स्नातन्वांतरेऽपिस्यात् ज्योत्स्ना युक्तनि-
शिस्मृतेति त्रयंचंद्रप्रभायां ॥ प्रसादः भावे घञ् प्रसीदतिस्म गत्यर्थेनिक्तः ॥ प्रसन्नता प्रसन्नस्य भावः पदद्वयंनैर्मल्यस्य १६ कलंकः कंब्राह्मणंकलयति हीनतांगम
यति ज्ञापयतिवा लकिगतौ अण् ॥ अंकः अंक्यतेनेन अकिलक्षणे घञ् ॥ लांच्छनं लान्छयतेनेन तदुक्तं हैमे लान्छनलक्ष्मचिन्हयोरिति ॥ चिन्हं चाहयति चाल्यतेऽने
नवा चहपरिकल्कने क्त् चिन्हंलक्ष्मपताकयोरितिहैमः ॥ लक्ष्म लक्षणं लक्षयति लक्षदर्शनांकनयोः मनिन् षट्कंचिन्हस्य ॥ सुषमेत्येकं परमायाः शोभायाः परमा शो
भा शोभतेनया अकर्तरिनिकर्मणिघञ् ॥ कांतिः क्तिन् ॥ द्युतिः द्योततेनया द्युतदीप्तौ इन् ॥ छविः छ्यति छित्तिअसारमितिवा छोछेदने छिदिरद्वैधीकरणे चत्वारि शोभाया

चंद्रिकाकौमुदीज्योत्स्नाप्रसादस्तुप्रसन्नता १६ कलंकांकौलांच्छनंचचिन्हंलक्ष्मचलक्षणं ॥ सुषमापरमाशोभाशोभाकांतिर्द्युतिश्छविः
१७ अवश्यायस्तुनीहारस्तुषारस्तुहिनंहिमं ॥ प्रालेयंमहिकाचाथहिमानीहिमसंहतिः १८ शीतंगुणेतद्वदर्थाः सुषीमः शिशिरोजडः
॥ तुषारः शीतलः शीतोहिमः सप्तान्यलिंगकाः १९ चस्य १७ अवश्यायः अवश्यायते शैत्यमापाद्यते श्यैङ् गतौ णः ॥ नीहारः निह्रियतेन्दृ ह्रूहरणे घञ्
॥ तुषारः तोषयति आरन् ॥ तुहिनं तोहति तुहिरदुहिर अर्जनेचेपितुल्योन्हस्वश्चेतिइनन् ॥ हिमं हंति हिनोतिवर्धते हिगतौवृद्धौ ॥ प्रालेयं प्रलीयतेऽत्रेति ॥ महिका मह्यते-
महपूजायां मिहिकेतिपाठे मिहसेचने सप्तहिमस्य ॥ हिमानी ङीष् आनुक् ॥ हिमसंहतिः हिमहतो हिमस्य एवंउक्तलिंगाः अवश्यायादयः १८ शीतशब्दः नपुंसक
लिंगकः गुणेस्पर्शविशेषे एव भवति नतुगुणिनि ॥ सुषीम सुषिमइत्यपि ॥ शिशिरः ॥ जड ॥ तुषारः ॥ शीतलः ॥ शीतः ॥ हिमः एतेसप्ततद्वदर्थाः तद्वान् शीतगुणतानर्थो
येषांतेचान्यलिंगकाः विशेष्यलिंगाः तुषारहिमशब्दौनिरूढलक्षणयागुणिन्यपितलेंते इत्युभयत्रपठितौ १९

ध्रुवः ध्रुवति स्थिरो भवति ध्रुगतिस्थैर्ययोः अच् ङित्वाद्गुणाभावः ध्रुवः शाखेहरेविष्णौ वटे चोत्तानपादजे वस्तुयोगभिदोः पुंसि ध्रुवस्केजस्त्वतर्कयोरित्युक्तत्वात् ॥ औत्तानपादिः उत्तानपादस्यापत्यं अतइञ् द्वे ध्रुवस्य ॥ अगस्त्य अगं विंध्यं स्त्यायति आतोनुपेति कः अगस्तिरपि अगमस्यतीति तदुक्तं शब्दार्णवे अथागस्त्यः कुम्भयोनिरगस्तिः कलशीसुत इति ॥ कुम्भसम्भवः कुम्भात् सम्भवोऽस्य ॥ मैत्रावरुणिः मित्रावरुणयोरपत्यं मैत्रावरुणिः इञ् अण् औ र्वशेयागस्त्य मैत्रावरुणास्त्वाग्निमारुतारिति नामनिधानात् त्रीणि अगस्त्यस्य ॥ अस्यैव सधर्मिणी पत्नी लोपामुद्रा स्यात् न मुद्राति आतइतिकेन लोपे अमुद्रा लोपे धर्मलोपे अमुद्रा हर्षं न लभत इत्यर्थः समानो धर्मोऽस्त्यस्याः इति स्यादेशः एकं २० नक्षत्र ऋषति ऋषीगतौ समस्तयेपस्य कः ॥ ऋक्षं भं भातिड तदुक्तं एकाक्षरे भं नक्षत्रे ग्रहे लोक्ये स्त्री पुंसि स्याद्भृगुनन्दने भ्रमरो

ध्रुव औत्तानपादिः स्यादगस्त्यः कुम्भसम्भवः ॥ मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी २० नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम् ॥ दाक्षायण्योऽश्विनीत्यादितारा अश्वयुगश्विनी २१ राधा विशाखा पुष्येतु

भं मद्भीतिनरइति ॥ तारा तरत्यनया भिरादिः नक्षत्रनेत्रमध्येच तारा स्यात्तार इत्यपीति ण्याडिः नक्षत्रे चाक्षिमध्ये च तारका तारकापि चेति विश्वः ॥ उडु स्त्रीनपुंसकयोः अपिशब्दात्तारका पि तयोडु उड उडव इत्यादि धेनुवत् यद्वा उङ्कोऽधंडयने उनाद्यन्तादीयतेया उमत्यय तदुक्तं हैमे उसङ्गुडुरुपोक्तो च शिववाची हलन्त्यय उमन्ते ॥ इति षट् नक्षत्रमात्रस्य ॥ अश्विनीत्यादितारा सप्तविंशतिवा रका दाक्षायण्य उच्यन्ते दक्षस्यापत्यानि डरीच्चामिति फिञ् एकं ॥ अश्वयुक् अश्वयुनक्ति क्विप् ॥ अश्विनी अश्व अश्वरूपमस्त्यस्या इति द्वे अश्विन्याः २१ राधा राध्नोति कार्यमनया राध संसिद्धौ गुरोश्च हल इत्यावृद्धः ॥ विशाखा विशाखति शाखृव्याप्तौ अच् विशाखो याचके स्कन्दे विशाखा भेकदित्युके इतिहेमः द्वे ॥ पुष्य पुष्यन्ति कार्याणि पुष्यसि इति क्यप् ॥

सिद्ध्य· मासनक्षत्रयोर्भेदे सिद्ध्यत्यस्मिन्॥ तिष्यः तुष्यंत्यस्मिन् तुषतुष्टौ सूर्यतिष्येति साधुः त्रयंपुष्ये॥ श्रविष्ठा श्रवणंश्रवः प्रसिद्धः श्रवोऽस्त्यस्याः मतुप् इष्ठन्
॥ धनिष्ठा एवमतिशयेन धनवती साश्रविष्ठयासमेत्यन्वयः द्वे धनिष्ठायाः॥ प्रोष्ठपदा· प्रोष्ठोगौः तस्येव पादायासां॥ भाद्रपदाः पूर्वद्वेउत्तरेद्वे च एवचतुःसंख्याकत्वात्ब
हुत्वं स्त्रियः स्त्रीलिंगा स्युः२२ मृगशीर्षं आकृत्यामृगस्यशीर्षमिव॥ मृगशिरः मृगः शिरोऽस्य रूपभेदात्क्लीबत्वं॥ आग्रहायणी आग्रेहायनमस्याः मार्गशीर्षमा-
रभ्यवर्षप्रवृत्ते स्वार्थेण् आग्रहायणी पौर्णमासी तद्योगान्नक्षत्रमपितथा त्रयंमृगशीर्षस्य॥ तच्छिरोदेशेया पंचतारका निवसंति ताः इल्वलाः इलस्वप्नक्षे
पणेच वलच् इन्वका इतिपाठेतु इन्वंति प्रीणयंति इन्विव्याप्तौप्रीणनेच एकं २३ बृहस्पतिः बृहतांपतिः तत्बृहतोरिति साधुः सुराणामाचार्यः॥ गीष्पतिः

सिद्ध्यतिष्यौ श्रविष्ठया॥ समाधनिष्ठाः स्युः प्रोष्ठपदा भाद्रपदाः स्त्रियां २२ मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी॥ इल्व
लास्तच्छिरोदेशे तारका निवसंति याः २३ बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः॥ जीव आंगिरसो वाचस्पतिश्चित्रशिखंडि-
जः २४

कस्कादिः गिरांपतिः॥ धिषणः प्रशस्ता धिषणाऽस्य अर्शआद्यच् यद्वा धृष्णोति ञिधृषा प्रागल्भ्ये अत्रपक्षेक्युः धिषादेशः॥ गुरुः गृणात्युप
दिशति गृशब्दे कृग्रोरुच्चेतिकुः उश्चादेशः तदुक्तं हैमे गुरुर्महत्यां गिरसे पित्रादौ धर्मदेशके अलघौदुर्जटेचापीति॥ जीवः जीवयति अच् मृतसंजीवन मंत्रज्ञ
त्वात् तदुक्तं हैमे जीवः स्यात्त्रिदशाचार्येद्रुमभेदे शरीरिणीति॥ आंगिरसः अपत्यार्थे अण्॥ वाचस्पतिः पतिशब्देपरेसत्वविधानादलुक्॥ चित्रशिखंडिजः
तदुक्तंहारावल्यां ऋषयः सप्तधीमद्भिः स्मृताश्चित्रशिखंडिनइति तदंतर्गतादंगिरसो त्वाच्चित्रशिखंडिजो जातः तवबृहस्पतेः २४

शक्रः शोचति शक्रःशोके रक् माहेश्वरशक्रद्वारानिर्गतत्वात् ॥ दैत्यगुरुः ॥ काव्य कोतुमवश्यमास्यात्तुमर्हः ओरावश्यके इतिण्यत् कवेरपत्यं कुर्वादिभ्योण्य इति वा ॥ उशनाः वशेः कनसि ॥ भार्गव भृगोरपत्यं ऋष्यण् ॥ कविः कुवते अचरः षट्कः शुक्रस्य ॥ अगारक अगाति ईयर्ति पीनत्वात् कर्मण्यण् अगारः इव स्वार्थे कन् अगति वा अगिगनो ॥ कुज को पृथिव्याः जातः ॥ भौमः भूमेरपत्यं अपत्यर्थे अण् भौमो मगलं दैत्ययोरिति निर्देशः ॥ लोहिताग लोहितानि अगानि यस्य ॥ महीसुतः मत्स्या सुतः पंच मगलस्य २५ रौहिणेयः रोहिण्या अपत्ये ढक् रोहिणेयो भवेद्धस्तेरेवतीरमणे बुध इति विश्व ॥ बुधः बुध्यते इगुपेति कः ॥ सौम्य सोमस्य वशस्त्वादि त्र्यं बुधस्य ॥ सौरिः सूरस्यार्कस्यापत्यं इञ् सौरोपि इदमर्थेण् ॥ शनैश्चर शनैश्चरति चाद्यच् पंगुत्वात् शनि सौरि शनैश्चरा इति रभसात्त्वनिरपि शनैश्चरे मदर्शनि ॥

शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कवि ॥ अगारक कुजो भौमो लोहिताङ्गो महीसुत २५ रौहिणेयो बुधः सौम्य समौ सौरिशनैश्चरौ ॥ तमस्तु राहुः स्वर्भानु सैंहिकेयो विधुंतुद २६ सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखंडिनः ॥

वाचस्पतिः ट्टे ॥ तमः ध्वसुतन् तास्यति नया सिगुणतिमिरसैंहिकेया इति त्रिकाण्डशेषः अदन्तश्चिद्गोपि पचादि स्वर्भानुस्तु तमो राहुरिति पुंस्काण्डे रत्नकोशामरमालयोर्दर्शनात् ॥ राहुः रहति गृहीत्वा त्यजति चन्द्रार्कौ रहत्यागे भ्वादिः ॥ स्वर्भानुः स्वर्य भा शोभा विपरीत लक्षणया भाति ॥ सैंहिकेय सिंहिकाया अपत्यं स्त्रीभ्यो ढक् ॥ विधुंतुदः विधुं तुदति ॥ तुद व्यथने विध्वरुषो कदः पंच राहोः ॥ मरीच्यत्रिमुखाः सप्तर्षयश्चित्रशिखंडिसंज्ञाः चित्रः शिखण्ड चूडाविशेषोस्त्येषामिति व्युत्पत्त्या प्रत्येक सप्तापि चित्रशिखंडिनः एक मुखशब्दात् पुलह पुलस्त्यादयः सप्तर्षयः ज्ञेयाः सप्तवचने दिक्संख्ये इति समासः तेन मरीचिरंगिरा अत्रि पुलस्त्यः पुलहः क्रतुः वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखंडिनः ॥

राशीनामुदयो लग्नमित्युच्यते अश्नुवते व्याप्नुवंति अशू व्याप्तौ इन् प्रत्यये रुट् लगति क्षुब्धेति सूत्रे लग्नेति निपात्यते फले लग्नं राश्युदये क्लीबं सक्तलज्जितयोस्त्रि-
ष्विति उक्तत्वात् एकं ॥ ते तु मेषवृषादयः स्युः मेषो वृषोऽथ मिथुनं कर्कटः सिंहकन्यके तुला च वृश्चिको धन्व मकरः कुंभमीनको २७ सूरः सुवति प्रेरयति कर्मणि लो-
कं षू प्रेरणे क्रन् शूरोपि तत्र शवति शवगतौ क्रनि दीर्घश्च तदुक्तं विश्वे शूरश्चारुभटे सूर्ये इति शूरयती तिवा शूरविक्रांतौ अच् ॥ सूर्यः सरति सृगतौ सुवति प्रेरय-
ति कर्मणि लोकानिति वा षू प्रेरणे राजसूयेति निपातः सूर्योऽर्कपर्णे तपने स्त्री तु नार्योषधीभिदो रित्युक्तं ॥ अर्यमा इयर्ति श्वन्नुक्षन्पूषन्निति निपातितः ॥ आदित्यः
अदितेरपत्यं दित्यदित्येति ण्यः द्वादशात्मा द्वादशात्मानो मूर्तयो यस्य ॥ दिवाकरः दिवा दिनं करोति दिवाविभेति टः एवं भास्करादिषु ॥ ब्रध्नः निमिरं बध्नाति बंध बंध

राशीनामुदयो लग्नं ते तु मेषवृषादयः २७ सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः ॥ भास्कराहस्करब्रध्नप्रभाकरविभाकराः २८ भा
स्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः ॥ विकर्तनार्कमार्तण्डमिहिरारुणपूषणः २९

ने नक् ब्रधादेशः ॥ प्रभाकरः । विभाकरः २८ भास्वान् भासः
संत्यस्य मतुप् ॥ विवस्वान् विविधं वस्ते आच्छादयति वस आच्छादने क्विप् विवो रश्मिः अस्यास्तीति मतुपि तसौ इति भत्वात् न रुत्वं ॥ सप्ताश्वः सप्ताश्वा यस्य ॥ हरिद
श्वः हरितोऽश्वा यस्य हरि लक्षणं इंद्रनामसूक्तं ॥ उष्णरश्मिः उष्णा रश्मयो यस्य ॥ विकर्तनः विशेषेण कर्तनं यस्य विश्वकर्मणा यंत्रोल्लीढत्वात् विकर्तयति भक्त
रोगानिति वा कृती छेदने पर्यतात् ल्युट् ॥ अर्कः अर्च्यते अर्च पूजायां कर्मणि घञ् कुत्वं यद्वा अर्क्यते अर्क स्तवने ॥ मार्तंडः मृतंडे भवः शकंध्वादिः मार्तंडः क्रोडसूर्य-
योः ॥ मिहिरः मेहति मिह सेचने किरच् मिहिरः सूर्यवृद्धयोः मिहिर इत्यपि ॥ अरुणः ऋच्छति उनन् ॥ पूषा पुष्णाति पुष्यति वा पुष पुष्टौ पुष वृद्धौ वा श्वन्निति निपातितः
२९

द्युमणिः दिवोमणिरिव दिवउत्॥ तरणिः तरत्यनेन संसारं तरतेरनिः तदुक्तं रभसे तरणिर्घर्मयोः पुंसि कुमारीनौकयोः स्त्रियामिति॥ मित्रः मेद्यति स्निह्यति त्रिभिरस्ते हते भवः॥ चित्रभानुः चित्रा भानवोस्य चित्रभानुः पुमान् वैश्वानरे चाहस्करेपि नेत्यमरः॥ विरोचनः विरोचते रुचदीप्तौ अनुदात्तेतश्च हलादेरिति युच् विरोचनः प्रह्लादस्य तनये वैश्विन्द्रयोरित्युक्तत्वात्॥ विभावसुः विभैव वसु यस्य तदुक्तं विभावसुः पुमान् सूर्ये हारभेदे च पावकेरिति॥ ग्रहपतिः ग्रहाणां पतिः॥ त्विषांपतिः अलुक् सत्वविधानात् ज्ञापकात्॥ अहर्पतिः अन्हः पतिः अहरादीनां पत्यादिषु वा रेफः ३०॥ भानुः भाति॥ हंसः हन्ति हन्ते सः॥ सहस्रांशुः सहस्रमंशवो यस्य॥ तपनः तपतेर्ल्युट् त

द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः॥ विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ३०॥ भानुर्हंसः सहस्रांशुस्तपनः सविता रविः॥ "कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः॥ प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः॥ इनो भगो धामनिधिश्चांशुमाल्यब्जिनीपतिः॥" माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्वकाः ३१

पनो रुम्फरेपि स्यान्नस्करे निरयान्तरे तापयतीति वा ण्यन्तान्ल्युट् तापनोपि तपनस्तापनो रविरिति संसारावर्तात्॥ सविता सूते वा षू प्रेरणे तृच्॥ रविः रूयते स्तूयते रवते वा रु शब्दे रुङ् गतौ वा अच् इः समत्रिंशत्सूर्यस्य॥ माठरः मठति पचाद्यच् स एव माठः मठमदनिवासयोः मठस्यापत्यमिति वा शिवाद्यण् आदिवृद्धिः मठत्यनेन मठः तराति सादाने आतश्चोपसर्गे कः ष्यणि वृद्धिः मठरस्यापत्यमिति वा॥ पिङ्गलः पिङ्गलो वर्णोस्यास्ति अर्श आद्यच् पिङ्गवर्णत्वादिति वा कर्मत्वय॥ दण्डः दण्डोस्यास्ति दण्डयतीति वा मत्वर्थे च् कृतत्वात् तु पचाद्यच् इति चण्डांशोः॥ पारिपार्श्वकाः पार्श्वे इति पारिपार्श्वं पारिपार्श्वे वर्तते विभक्त्यर्थे ऽव्ययीभावात् ठक् उक्तं सौरतन्त्रे शक्रोस्य वामपार्श्वे तु दण्डाख्यो दण्डनायकः वह्निरुक्तो दक्षिणे पार्श्वे पिङ्गलो वामभागतः यमोऽपि दक्षिणे पार्श्वे भवेन्माठरसंज्ञयेति एकैकं ३१

सूर्यसूतः सूर्यस्यसूतः॥ अरुणः अरुणोवर्णोस्यास्ति मत्वर्थेअच्॥ अनूरुः अविद्यमानावूरूयस्य॥ काश्यपिः कश्यपस्यापत्यं बाह्वादित्वादिञ्॥ गरुडाग्रजः गरुड
स्याग्रजः पंचसूर्यसारथेः॥ परिवेषः परितोविष्यतेऽनेन विषुव्याप्तौ घञ् परिवेषःस्यात्परिधौपरिवेषणइतिमूर्धन्यांतेरुद्रः परिवेशोपि विशप्रवेशने वेष्टनेपरिवे
शःस्याद्भानोसविधुमंडले इतितालव्यांतेरभसः॥ परिधिः परिधीयतेऽनेन उपसेतिकिः॥ उपसूर्यकं उपगतंसूर्यं उपसूर्यं प्रादिसमासे स्वार्थेकः॥ मंडलं मंडते मडि
भूषायां कलच् मंडलंपरिवेशश्चपरिधिश्चोपसूर्यकमिति भागुरिः परिवेषसाहचर्यात्परिधिःपुंसि चत्वारिचंद्रसूर्ययोरुत्पातादिजातमंडलस्य ३२ किरणः
कीर्यते कृविक्षेपेक्यः॥ उस्रः वसंतिरसाअस्मिन् वसनिवासे रक्प्रत्यये संप्रसारणं॥ मयूखः माङः ऊखप्रत्ययेमयादेशः॥ अंशुः अंशयति अंशविभाजने चुरा

**सूर्यसूतोरुणोऽनूरुः काश्यपिर्गरुडाग्रजः॥ परिवेषस्तुपरिधिरुपसूर्यकमंडले ३२ किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयः॥**
**भानुःकरोमरीचिःस्त्रीपुंसयोर्दीधितिःस्त्रियां ३३**

देर्मृगेतिसूत्रेणकुः यतउक्तंविश्वे अंशुर्लेशेरवेरश्माविति॥ अंशुः सूत्रादिसूक्ष्मांशेकिरणेचं
डदीधितौ॥ गभस्तिः गम्यतइतिगः डप्रत्ययेटिलोपः ज्ञेयवर्गः तंबभस्तिदीपयति भस भत्सनदीप्त्योः क्तिच्॥ घृणिः जिघर्ति घृक्षरणदीप्त्योः घृसेचनेवा घृणि
पृश्नीतिनिप्रत्ययेगुणाभावः॥ धृष्णिः धृष्णोति ञिधृषाप्रागल्भ्ये वृष्णिरितिपाठे वृषुसेचने पृश्निरितिपाठेतु स्पृशति पृथुसेचनेवा एभ्योनित्यप्रत्ययेगुणा-
भावः॥ भानुः भाति॥ करः कीर्यते कृविक्षेपे कर्मणिअप्॥ मरीचिः म्रियतेनमोऽस्मिन् मृङ्प्राणत्यागे इचिप्रत्ययः मरीचिःस्त्रीपुंसयोःद्वयोर्मरीचिःकिरणोभानु रुस्रः करःप
दमितिशब्दार्णवः मरीचिर्मुनिभेदेनागभस्तावनपुंसकमितिमेदिनीच॥ दीधितिः दीधीतेदीप्यते दीधीङ्दीप्तिदेवनयोः क्तिच् तितुत्रेतिनेट्निषेधः अग्रहादीनामिति
निषेधात् यीवर्णयोरितीकारलोपः दीधितिःस्त्रियामितिलिंगानुशासनात् काकाक्षिन्यायेनदीधितिरत्रस्त्रियामितिसंबध्यते उत्तरत्रापि एकादशकिरणानां ३३

को

प्रभा प्रभाति आतइतिकः॥ रुक् क्विप्॥ रुचिः रोचने रुचदीप्तौ इन् सचकित् रुचिर्दीप्तौच शोभायामभिष्वगाभिलाषयोरिति॥ त्विट् त्वेषति त्विषदीप्तौ क्विप्॥ भाभादीप्तौ इति ग्रहणात् ङः टाप्‌ भा॥ शुच्यलचूनोर्दीप्तौ स्त्रियां भा। करणे यतः नाविति नानार्थरत्नमाला भा विश्वपावन्‌ सौतच्छेदे भासृदीप्तौ क्विप्॥ छविः छ्यति छिनत्तिवा तमः॥ द्युतिः द्योतनेनया द्युतदीप्तौ इन् सचकित् इत्याद्युत्य दीप्तिः दयतेनया दिपीदीप्तौ क्तिन्॥ रोचिः रोचनेऽनेन रुचदीप्तौ इस्॥ शोचिः इसन्त्र दीप्यं मानिस्त्रिया स्युः रोचिः शोचिः सान्ते क्लीबे रोचिः रोचिषी रोचींषि एवंशोचिः॥ प्रकाशः॥ द्योतः उभयत्र भावे करणेवा घञ् इत्येकादशप्रभामात्रस्य॥ प्रकाशः द्योतः आतपः अत्रइतिप्रपसूर्यप्रभायाइत्येके ३४ कोष्णा ईषदुष्णा ईषदर्थेइतिकादेशः॥ कवोष्ण॥ मदोष्णा मदत्वनदुष्णाच॥ कदुष्णा चत्वारिईषदुष्णास्य तत्र कवोष्णाकदुष्णाइति

स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः॥ रोचिः शोचिरुभेक्लीबेप्रकाशोद्योतआतपः ३४ कोष्णाकवोष्णामदोष्णाकदुष्णा
त्रिषुतद्वति॥ तिग्मतीक्ष्णखरंतद्वन्मृगतृष्णामरीचिका ३५ इतिदिग्वर्गः कालोदिष्टोप्यनेहापि

कवकत् आदेशाः साधू तद्वति धर्मि
णि त्रिषुवाच्यलिंगमित्यर्थः इदंधर्मपाठेरूपभेदात्क्लीबत्वे॥ तिग्म तिजेर्मक्॥ तीक्ष्ण स्मकुडभयप्रकुल तदुत्कर प्रसे तीक्ष्ण सामुद्रलवणविषद्योहाक्षिपुष्कके क्ली
ब यवाग्रकेपुंसि तिग्मार्थत्यागिनोस्त्रिषु॥ खरमिन्द्रियाणि अभिभवति यदाने आतइतिकः। तद्वत्कोष्णाधर्मेक्लीब धर्मिणि त्रिषुणीणि अत्युष्णास्य॥ मृगतृष्णा
मृगाणांतृष्णास्त्यस्याः अर्शआद्यच्॥ मरीचिका मरीचिरिव इवेप्रतिकृतौ इति कन् द्वयमृगजलस्य॥ मरुदेशादौ सिकतासु प्रतिच्छुरिता सूर्यकिरणाः जलाकारेण भान्ते
रित्यर्थः ३५ इतिदिग्वर्गः कालः कल्पने कलसंख्यानेशब्दे च कर्मणि घञ् कलयतिसर्वमिति वाण्यन्तादच् कालोमृत्यौमहाकाले समयेयमकृष्णयोरितिकोशान्तरा
त्॥ दिष्टः दिशति दिशअतिसर्जने क्तिच् क्तो इतिक्तः। दिष्टं दैवेपुमान्काले इतिकोशान्तरात्॥ अनेहा नार्हतिनागच्छति नाहन्यतइतिवा यानः असत्प्रसपानत्वात्॥

गणग्र· गम्यंगोति रुणगतौ पचाद्यच् चत्वारि कालस्य ॥ अथ पक्षतिः पक्षात्तिरिति साधुः ॥ प्रतिपत् इमेद्वे प्रथम तिथेः स्तः तदाद्याः प्रतिपदाद्यास्तिथयः स्युः पक्षस्यमूलं तदुक्तकोशांतरे पक्षतिस्त्वभवेत्पक्षमूलेच प्रतिपत्तिथावपि प्रतिपद्यते उपक्रम्यते अनयामासादिः अवसानत्यगमने इथिन् पृषोदरादिः तिथिशब्दस्तुद्वयोः स्त्री पुंसयोः पक्षतिप्रतिपच्छब्दौतु स्त्रियामेव १ घस्त्रः घसत्यंधकारं घस्तृ अदने स्फायितंचीतिरक् घस्रस्तु दिवसेहिंस्रे इत्युक्तत्वात् ॥ दिनंदीयते क्षीणंभवति दीङ्क्षये दिनादि नक्रिबाहुलकान्हस्व ॥ अहः नजिजहातेरितिकनिन् ॥ दिवसः दीव्यंत्यत्र असच्प्रत्ययः ॥ वासरः वासयति वसेर्णतादरः तदुक्तं कोशांतरे वासरस्तु पुंगान्नागप्रभेदेदिनयोरपीति पंच दिवसस्य ॥ प्रत्यूष· प्रत्यूषति रुजतिकामुकान् ऊषरुजायां इगुपेतिकः प्रत्यूषोहर्मुखेवसौ इत्युक्तत्वात् प्रत्युषइत्यन्यत्र

समयोप्यथपक्षतिः ॥ प्रतिपद्वेइमेस्त्रीत्वेतदाद्यास्तिथयोद्वयोः १ घस्त्रोदिनाहनीवातुक्लीबेदिवसवासरौ ॥ प्रत्यूषोहर्मुखंकल्पमुषः

प्रत्यूषसी अपि २ प्रभातंचदिनांतेतु सायंसंध्यापितृप्रसूः ॥

उषः प्रत्यूषसिक्लीबंपितृप्रस्वांचयांषितीत्युक्तत्वात् ॥ अहर्मुखं अन्होमुखं रोक्तपिइति रः ॥ कल्यं कलयतिचेष्टां कलेर्यक् काल्यमप्यन्यत्र प्रज्ञाद्यणिसाधुः तदुक्तं कोशांतरे कल्यंप्रभातंक्लीबंस्यात्कल्योवाग्श्रुतिवर्जिते सज्जनीरोगदक्षेषुकल्याणवचनेपित उपायवचनेपिस्यात्रिषुमध्येतुयोषिति ॥ उषः ओषत्यंधकारं उषदाहे उषः किदित्यसिः ॥ प्रभातं षट् प्रभातस्य कल्यं तालव्यांतं भातुंप्रवृत्तं प्रभातं - भादिकर्मणिक्तः ॥ दिनांतः दिनस्यांतः स्यतिसमापय तिदिनं सायः स्यते शाछोतिणः सायः कांडेदिनांतेचेतिकोशांतरात् एकंदिनांतस्य ॥ संध्या संम्यक् ध्यायंत्यस्यां ध्यैचिंतायां आतश्चोपसर्गेसंध्यापितृप्रसूरद्यंतरयोर्युगसंधिष्वित्युक्तत्वात् अन्यत्रापिसंधीयतेनुसंधीयतेस्यां दधातेङ् तदुक्तंशब्दार्णवे संध्यापितृप्रसूसंधाइति ॥ पितृप्रसूः पितृन्प्रसूते क्विप् द्वेसंध्यायाः ॥

३ प्राण्हः अपराण्हः मध्यान्हादयः समासाना इतिअन्हादेशोणत्व ॥ त्रिसंध्य तिसृणांसंध्यानांसमाहारस्त्रिसंध्य पक्षेत्रिसंध्यी आवलोवेतिस्त्रीत्व एक ॥ ६ ॥ ५ तमध्यानि ॥ शर्वरी शृणातिचेष्टाः शृहिंसायां ष्वरविडीष् नदुक्तकोशान्तरे शर्वरीयामिनीस्त्रियोरिति शार्वरीइत्यपिपाठः शब्दार्णवेउक्त शर्वरी शार्वरीशर्यैति प्रज्ञादाणिसाधु ३ निशा नितरांश्यति तनूकरोतिव्यापारान् शोतनूकरणे ऽातश्चोपसर्गेइतिकः निशादारूहरिद्रायास्यात्त्रियामाहरिद्रयोरितिकोशान्तरात् ॥ निशीथिनी निशीथोऽस्त्यस्या मत्वर्थेइनि ॥ रात्रि रातिसुखंरदाते राशदिभ्यांत्रिप् अन्यत्रपाठेरात्री नदुक्तशब्दार्णवे रात्रीरात्रिस्तमस्विनीति ॥ त्रि- यामा त्रयोयामायस्याः पद्मचैत् धर्मादीन्यापयति निरवकाशीकरोति कामप्रधानत्वात् अतमीषितण्यर्थान् यानेर्मन् ॥ क्षणदा क्षणमुत्सवंनिव्यापारस्थितिंवा

प्राण्हापराण्हमध्यान्हास्त्रिसंध्यमथशर्वरी ३ निशानिशीथिनीरात्रिस्त्रियामाक्षणदाक्षपा ॥ विभावरीतमस्विन्योरजनीयामिनीतमी ४ तमिस्रातामसीरात्रिर्ज्योत्स्नीचंद्रिकयान्विता ॥ ददाति क्षणदोगणकेरात्रौ क्षणदाक्षणदंजलंइत्युक्तत्वात् ॥ क्षपा क्षपयतिचेष्टां क्षैक्षये ण्यतात् मितः अच् ॥ विभावरी विभातिनक्षत्रादिभिः कनिप् नदुक्तकोशान्तरे विभावरीनिशारात्र्यो कुट्टन्यावक्रयोषिति ॥ तमस्विनी तमोऽस्त्यस्या ॥ रजनी रज्यंत्यनुरक्ता भवंतिरागिणोऽस्यां क्षिपेः कित्वेतिचादनि अन्यत्ररजनीरपिरजनीनीलिनीरात्रिहरिद्राजतुकासुचेत्युक्तत्वात् ॥ यामिनी निरिताः यामायस्यां निदायोइति भीतिहेतुत्वात् मतमं नाम्यत्वस्यां नमुग्लानौ इन् ङीष् तमि पक्षेकृदिकारादितिङीषभावे पचाद्यचि तमापि हादरारात्रेः ५ यातामसी तमोयुक्तारात्रिः सातमिस्रास्यात् तमोबहुले अ- स्त्रियस्यांज्योत्स्नादित्वात् तामसीति विदुर्गायानामसो भुजगेखगेइत्यक्तं ॥ तमिस्रा ज्योत्स्नातमिस्त्रेतिसाधु तमिस्रं तिमिरे कोपे पुंसिस्त्रीतु तमस्ततौ कृष्णपक्ष निशायांचेत्यक्तं एके ॥ याचंद्रिकयान्वयप्रकाशेनान्विता युक्तारात्रिः साज्योत्स्नी ज्योत्स्ना अस्त्रियस्यां प्राग्वत् ज्योत्स्नाचंद्रमसः प्रभेत्युक्तं ॥

आगामि वर्तमाने अहनी युक्ते यस्यामिति बहुव्रीहिः पूर्वपरदिनाभ्यां युक्तायां रात्रौ पक्षिणी तदुक्तं कोशांतरे आगामि वर्तमानाहर्युक्त रात्रावपि स्त्रियामिति एकं नाम ५ बहुवो निशाः गणरात्रं स्यात् गणानां बह्वीनां रात्रीणां समाहारः एकं रात्रिसमुदायस्य ॥ प्रदोष दुष्यति दुष वैकृत्ये पचाद्यच् प्रारंभो दोषायाः प्रादिसमासः प्रारब्धा दोषा यस्मिन्निति दोषेत्यव्ययमप्यस्ति नक्तं दोषा च रजनावित्युक्तत्वात् ॥ रजनीमुखं रजन्या मुखमिव द्वे रात्रेः पूर्वभागस्य ॥ अर्धरात्रः निशीथः स्यात् निशेरतेऽस्मिन् शीङ् स्वप्ने निशीथगोपीथेति थक् निशीथस्तु पुमानर्द्धरात्रे स्यादर्द्धमात्रकः इत्युक्तत्वात् द्वे रात्रिमध्यसमयस्य ॥ यामः याति यामापणे मन् तदुक्तं कोशांतरे यामस्तु पुंसि प्रहरे संयमेपि प्रकीर्तित इति ॥ प्रहरः प्रह्रियते ढक्कादिरस्मिन् पुंसि संज्ञे लिघः द्वे अहोरात्राष्टमांशस्य ६ प्रतिपत्पंचदश्योर्यदंतरं स संधिः स्यात् तदुक्तं रुद्रे दर्शप्रतिप

आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी ५ गणरात्रं निशा बह्व्यः प्रदोषो रजनीमुखं ॥ अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ ६ सपर्वसंधिः प्रतिपत्पंचदश्योर्यदंतरं ॥ पक्षांतौ पंचदश्यौ द्वे पौर्णमासी तु पूर्णिमा ७ कलाहीने सानुमतिः पूर्णे राका निशाकरे ॥ दोः संधौ ग्रंथिप्रस्तावयोरपि पर्व क्लीबे विजानीयाद्विषुवत्प्रभृतिष्वपीति संधिप्रभितो यजेनेत्यादौ प्रसिद्धः स एव पर्वसंधिरित्येकं नाम ॥ द्वे अमापूर्णिमे पक्षांतौ पक्षस्यांतौ ॥ पंचदश्यौ पंचदशी अमापि ॥ पौर्णमासी तु पूर्णिमा स्यात् एकं नाम पूर्णः मासोऽस्यां स्वार्थे णिङीष् यद्वा मासश्चंद्रः पूर्णो मास नस्येयं पूर्णचंद्रस्य पूरणं तेन निर्वृत्ता पूर्णिमा भावप्रत्ययांतात्तेन निर्वृत्तमित्यर्थे इमप् द्वे शुक्लपक्षांत्यतिथावित्यर्थः ७ सा पूर्णिमा कलाहीने चंद्रे सति अनुमतिरित्युच्यते एकं अनुमन्यते अनुमतिः क्तिच् तदुक्तं अथानुमतिरूनेंदु पूर्णिमानुज्ञयोरपि सैव पूर्णिमैव पूर्णे निशाकरे सति राका रातिशुभं एकं तदुक्तं श्रुत्यां या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राकेति ॥

अमावास्या अमासहवसतास्याञ्चन्द्रार्कौ ॥ अमावस्या अमावस्यदिति साधू ॥ दर्शः दृश्यते शास्त्रेणेति पुंसीतिपः कृष्णपक्षान्त्यतिथेः चत्वारिनामानि ॥ अमाव
सी अमावासी अमामासी तदुक्तं शब्दार्णवे अप्यमावस्यमावासीचामामेस्यप्यमामसीति नामैकदेशेनामग्रहणे अमापि ८ सा अमावास्या दृष्टेन्दुश्चेत् सिनी
वाली स्यात् दृष्टइन्दुर्यस्यां सिनीचन्द्रकलासा अस्तियस्यां मत्वर्थे इनिः सिनीवल्लिति कर्मण्यण् ङीप् एक ॥ उदयेअमायोगात् नष्टेन्दुकला अमा कुहूः नष्टा इन्दुकलायस्य
कुहयति कुह विस्मापने कूप्रत्ययः तदुक्तं कोशान्तरे कुहूः स्त्री कोकिलालापेनष्टेन्दुकलदर्शयोरिति एकं तदुक्तं श्रुत्या यापूर्वामावास्या सिनीवाली योत्तरा सा कुहूरि-
ति अयमर्थः चतुर्दश्याअन्तिमप्रहरः अमावास्याया अष्टौप्रहराश्चेति नवप्रहरात्मकश्चन्द्रक्षयकाल शास्त्रप्रसिद्धः तत्राद्यप्रहरद्वयेचन्द्रस्य सूक्ष्मता अन्तिमप्रहर

अमावास्या त्वमावस्या दर्शः सूर्येन्दुसङ्गमः ॥ ८ ॥ सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः ॥ उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च ९ सोप
प्लवोपरक्तौ द्वावग्न्युत्पात उपाहितः ॥ एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ १०

द्वये चन्द्रक्षयः अतोऽमावास्याया आद्यप्रहरः सिनीवाली सञ्ज्ञः अ
न्त्यप्रहरद्वयं कुहूसञ्ज्ञं मध्यमप्रहरपञ्चकं दर्शसञ्ज्ञमिति ग्रहुग्रहेऽर्कइन्दौ पूष्णि च तस्य ग्रासस्य उपरागः तदुक्तं कोशान्तरे उपरागस्तु पुंसिस्याद्राहुग्रासेऽर्कचन्द्रयोः दुर्नये
ग्रहकल्लोले व्यसनेपिनिगद्यते ग्रहोनिग्रहनिर्बन्धग्रहणेषु रणोद्यमे सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोरिति द्वेप्रहदर्शने ॥ सोपप्लव सहोपप्लवेन बहुव्रीहेः
सहस्य सः ॥ उपरक्तः उपरज्यतेस्म मूतेक्तः इति द्वे राहुग्रस्तस्येन्दोः सूर्यस्य वा ॥ अग्न्युत्पात ॥ उपाहित अग्नेरुत्पात उपआसन्नमाहितफलं यस्य इति द्वे वह्नि
कृतोपसर्गस्य धूमकेत्वाख्यस्योत्पातस्य च एकयोक्त्याः पृथक्त्वेनेन पुष्पवन्तौ विद्युक्तौ सूर्याचन्द्रमसौ ज्ञेयौ एकयोक्त्येतिवचनात्पुष्पवन्त इति पुष्पवानिति
वा सूर्य चन्द्रोवानकव्य यथारोदसी इत्येकयोक्त्या द्यावापृथिव्योरुच्यते पुष्पवन्तशब्दो मतुवन्तोऽकारान्तश्च अदन्तपक्षे बाहुलकात् झच् अवत इति पुष्पशब्देन शकुन्यादित्वा

त् पररूपं १० अष्टादशनिमेषाः अष्टादश अक्षिस्पंदकालाः यदाभवंतितदा एकाकाष्ठास्यात् काशते काष्ठादारुहरिद्रायां कालमानप्रकर्षयोः स्याद्दिशि-
स्थानमात्रे च काष्ठमाख्यातमिंद्रियइतिविश्वः ॥ त्रिंशत्काष्ठाः यदाभवंतितदा एकाकला कलयति कलसंख्याने ॥ ताः कलाः त्रिंशद्यदाभवंति तदा एकः
क्षण. क्षणोति क्षणुहिंसायां क्षणः सर्वोत्सवेपिस्यात्तथामानेप्यनेहसः ॥ तेक्षणाः द्वादशयदाभवंति तदाएकोमुहूर्तः अस्त्रियां ११ तेयदा त्रिंशन्मुहूर्ताभ
वंति तदाएकोहोरात्रः अहश्चरात्रिश्चतयोः समाहारः रात्रान्हाहाः पुंसिइति अयमेवविग्रहः साधुः अन्यथा अजभावप्रसंगात् ॥ तेः होरात्राः पंचद-
शसंख्याकाः यदाभवंति तदापक्षः पक्ष्यते पक्षपरिग्रहे कर्मणि घञ् तदुक्तं विश्वे पक्षोमासार्धकेगेहपार्श्वसाध्यविशेषयोः केशादेः परतोवृंदेखलेस

अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ताः कला ॥ तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रियां ११ ते तु त्रिंशदहोरात्रः पक्षस्ते दश पंच
च ॥ पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ १२ द्वौ द्वौ माघादिमासौ स्यादृतुस्तैरयनं त्रिभिः ॥ अयने द्वे गतिरुदग्दक्षिणार्कस्य
वत्सरः १३

खिसहाययोः चुल्लीरंध्रेपतत्रेच राजकुंजरपार्श्वयोः पूर्वापरौशुक्लकृष्णौ पक्षौज्ञेयौ तौपक्षौ एकः मासः मस्यतेपरिमीयते यमनेन-
कर्मधिकरणेवा घञ् यतशुक्लादिक्रमेण प्रायशोमासप्रवृत्तिः सातुचांद्रमानेन १२ माघादिमासौद्वौद्वौ एकः ऋतुः इयर्ति ऋच्छतिवा अर्तेश्चेतितुः चात्विकत्वं
सचहेमंतादिसंज्ञकइत्यर्थः माघादिशब्दस्तु अयनारंभपरः तैः त्रिभिः ऋतुभिः अयनंस्यात् अयनेऽर्कोऽनेन अयगतौ ल्युट् तद्द्वेधा अर्कस्यउदग्ग-
तिः उत्तरायणं दक्षिणागतिः दक्षिणायनं एवंअयनद्वयं वत्सरः स्यात् १३ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ

समरात्रिंदिवे काले तुलामेषगतरश्मिनि तुलासंक्रांतौ मेषसंक्रान्तौ च विषुवत् ॥ विषुव रात्रिश्च दिवा च रात्रिंदिवं तत्समं यस्मिन् विषुनानारूपं गमनं तदस्यास्तीति वि षुमान्मध्यवर्ती ततो मतुप् संज्ञायामिति षत्वं विषुवोपि विषुवं विषुवान् रात्रिवासर इति पुस्काण्डे बोपालितः रात्रिंदिवशब्द अचतुर इति चतुरेत्यादिना साधु ॥ पुष्ययुक्ता पुष्यनक्षत्रयुक्ता पौर्णमासी पौषी प्रोक्ता सा पौषी यस्मिन् मासे स्यात् स मास नाम्ना पौषः सास्मिन्पौर्णमासीति रत्तण् मघायुक्ता पौर्णमासी यत्र स माघः सख्यादौ रेषाने परे पौषादन्ये एकादश मासा एवमुक्तरीत्या ज्ञेयाः ऐकैकः ॥ मार्गशीर्षः मार्गशीर्षी पौर्णमासी अस्मिन् अण् ॥ सहा ॥ मार्ग ॥ आग्रहायणिकः अग्रेहायनमस्या तत स्वार्थेण् आग्रहायणी सास्मिन्नेत्यर्थेण् चत्वारि मार्गशीर्षस्य १४ पौष पुष्ययुक्तपौर्णमास्यस्मिन् ॥ तैष तिष्येण युक्ता पौर्णमास्यस्मिन् भाग्वदण् ॥ सहस्य

समरात्रिंदिवे काले विषुवद्विषुवं च तत् ॥ "पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा ॥ नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे १७ मा र्गशीर्षः सहा मार्ग आग्रहायणिकश्च सः १८ पौषे तैष सहस्यौ द्वौ तपा माघेथ फाल्गुने ॥ स्यात्तपस्य फाल्गुनिकः स्याच्चैत्रे चैत्रिको मधुः १९

सहसि बले साधु तत्र साधुरिति यत् भौ त्रिणि पौषस्य ॥ तपाः तपत्यस्मिन् असुन् तदुक्तं हेमे तपश्चाद्रायणे धर्मे पुमान् शिशिरमाघयोरिति ॥ माघ मघयायुक्ता पौ र्णमास्यस्मिन् भाग्वदण् द्वे माघस्य ॥ फाल्गुनः फलेगुडनेत्कनन् ततः स्वार्थेण् वृद्धि ॥ तपस्य फाल्गुनिकः फलनि निष्पादयति फलनिष्पत्तौ तदुक्तं गोवर्धनानन्दे फ ल्गुनस्तर्जने मासे नक्षत्रे फल्गुनी स्मृतेति फाल्गुनस्तर्जने मासे फाल्गुनी चास्य पौर्णमेति धरणिश्च फल्गुनीभिर्युक्ता पौर्णमासी सास्मिन्नस्ति विभाषा फाल्गु नीति ठक् तपसि साधुः तदुक्तं तपस्य सज्ञमासे तत्पूर्णिमायां तु फाल्गुनी इति त्रीणि ॥ चैत्र चित्रयायुक्ता पौर्णमास्यस्मिन् ॥ चैत्रिकः विभाषा फाल्गुनीति ठ क् मधु मनत्तानेफलिपाधेत्यु धश्चान्तादेश मधु पुष्परसे क्लीबे मद्ये नातु मधुद्रुमे वसन्ते दैत्ययोश्चैत्रे स्याज्जीवसा तु योषिनीति त्रीणि चैत्रस्य १९

वैशाखः विशाखया युक्ता पौर्णमास्यस्मिन् साऽस्मिन्पौर्णमासीत्यण् ॥ माधवः मधु मकरंदः सोऽस्मिन्नस्ति मधोर्ञ्चेति ञः ॥ राधः राधा विशाखा तद्युती पौर्णमासी राधी साऽ
स्मिन्नस्ति अण् प्राग्वत् ॥ त्रीणि ॥ ज्येष्ठः ॥ शुक्रः तदुक्तं त्रिकांडशेषे शुक्रः स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमानिति ॥ विरहिणः शोचंत्यस्मिन् शुच शोके ऋज्रेंद्रेति
रन् चस्य कः द्वे ॥ शुचिः शोचंति विरहिणोऽस्मिन् इगुपधात् इत्कीन् ॥ आषाढः आषाढ्या युक्ता पौर्णमास्यस्मिन् अण् प्राग्वत् तदुक्तं रुद्रे आषाढो यतिनां दंडे मासे
मलयपर्वतइति स्यादाषाढे त्वषाढकः इति शब्दार्णवश्चेति द्वे ॥ श्रावणः श्रवणेन युक्ता श्रावणी पौर्णमासी यस्मिन् साऽस्मिन् इत्यण् तदुक्तं हैमे श्रावणो मासि पा
षंडे दध्यात्यां श्रावणामनेति ॥ नभाः विरहिणो नभ्यंति नश्यंति नभंते वा नभ हिंसायां धनुर्धरे त्रिषु नभः क्लीबं व्योम्नि पुमान् घने घ्राण श्रावण वर्षासु विसर्गांतोप

**वैशाखे माधवो राधो ज्येष्ठे शुक्रः शुचिस्त्वयं ॥ आषाढे श्रावणे तु स्यान्नभाः श्रावणिकश्च सः १६ स्युर्नभस्य प्रोष्ठपद भाद्र भाद्रपदाः स मा: ॥ स्यादाश्विन इषोप्याश्वयुजोपि स्यात्तु कार्तिके १७ बाहुलोर्जौ कार्तिकिको**

नद्गुह इत्युक्तत्वात् ॥ श्रावणिकः विभाषा फाल्गुनी श्रवणेति ठक् त्रीणि
१६ नभस्यः नभः अभ्रं तत्र साधुः यत् ॥ प्रोष्ठपदः प्रोष्ठपदाभिर्युक्ता प्रोष्ठपदी साऽस्मिन् साऽस्मिन्नित्यण् ॥ भाद्रः भद्राभिर्युक्ता भाद्री साऽस्मिन् ॥ भाद्रपदः भद्रपदाभिर्युक्ता-
भाद्रपदी साऽस्मिन् चत्वारि तत्र त्रीणि अपांतानि ॥ आश्विनः अश्विन्या युक्ता पौर्णमास्यस्मिन् ॥ इषः इष गतौ संपदादिः ततो मत्वर्थे च् ॥ आश्वयुजः अश्वयुजा युक्ता-
पौर्णमास्यस्मिन् अश्विनोऽश्वयुजश्चेष इत्यमरमाला त्रीणि ॥ कार्तिकः कृत्तिकाभिर्युक्ता पौर्णमास्यस्मिन् अत्राप्यण् १७ बाहुलः बहुलाः कृत्तिकाः कृदण् तद्युत
श्च यस्मिन् ॥ ऊर्जः ऊर्जयति उत्साहयति जिगीषून् पर्यंतादच् तदुक्तं हैमे ऊर्जः स्यात्कार्तिके बलइति ॥ कार्तिकिकः विभाषा फल्गुनीति ठकि आदिवृद्धिः चत्वारि ॥

हायनः हश्चेतिण्युट् तदुक्तं हायनोनस्त्रियांवर्षेपुंस्यब्धिव्रीहिभेदयोरिति तत्रहायनंनाला अस्त्रियां॥ शरत् शृणाति शॄहिंसायां शत्रवत्॥ समाः स्त्रियाबहुलेच-
समांसमांविजायतइतिसूत्रात्समायांसमायामितितत्रभाष्याच्चेति एकत्वंदृश्यते तथा सहमांतिसहवर्ततेऋतवोस्यामिति मासानेबिदादित्वकल्पनीयंउक्तं
चसमासंवत्सरेस्त्रियामिति २० नृणांमासेनपितृणामेकःअहोरात्रःस्यात् अहश्चरात्रिश्चेतिसमाहारद्वंद्वे अहःसर्वेति अचिरात्रान्हेतिपुंस्त्वं तत्रशुक्लपक्षोहः कृष्णारा
त्रिः॥ तथानृणांवर्षेण देवानामयदैवोऽहोरात्रः उत्तरायणदेवानांदिनं दक्षिणायनंरात्रिःमानुषाणांयच्चतुर्गुणंतद्दैवंयुगंज्ञेयं एवंदेवानांयुगसहस्रद्वयेन ब्रह्मणो
ऽयं ब्राह्मोऽहोरात्रः अयंनिष्कर्षःउक्तदेवताहोरात्राणांषष्ट्यधिकैस्त्रिभिरहोरात्रशतैर्दिव्यंवर्षं दिव्यैर्द्वादशभिर्वर्षसहस्रैर्मानुषंचतुर्युगं तच्चदेवानामेकंयुगं तत्सहस्रं

**हायनोऽस्त्रीशरत्समाः २० मासेनस्यादहोरात्रःपैत्रोवर्षेणदैवतः॥ दैवेयुगसहस्रेद्वेब्राह्मःकल्पौतुतौनृणां २१ मन्वंतरंतुदिव्यानांयुगानामे**
**कसप्ततिः॥ संवर्तःप्रलयःकल्पःक्षयःकल्पांतइत्यपि २२**

ब्रह्मणोदिनंतत्तुभूतानांस्थितिकालः तावत्येवरात्रिर्भूतानांप्रलयकालइति॥ अतःनृणांतौ
द्वेदैवेयुगसहस्रे कल्पौस्तः कल्पयतःस्थितिप्रलयंच कृपूसामर्थ्ये ण्यंतात्पचाद्यच् कल्पःशास्त्रविधौन्यायेसंवर्तेब्रह्मणोदिनइत्युक्त०॥ २१ दिव्यानांयुगानांयाएक
सप्ततिः एकाधिकासप्ततिःसाचकिंचिदधिकेतिबोध्यं तन्मन्वंतरं मनोरंतरमवकाशइति विग्रहः तैश्चतुर्दशभिर्ब्रह्मणोदिनंभवतीत्यर्थः एकंसंवर्तः संवर्ततेजग
दत्र हलश्चेतिघञ् तदुक्तंहेमे संवर्तःप्रलयेस्कंद्राविति॥ प्रलयःप्रलीयतेत्र लिङ्श्लेषणे एरच् एवमेव कल्पःकल्पतेविरुद्धलक्षणयाक्षीयते॥ नपुंसिनिघः तदुक्तं क-
ल्पोविकल्पेकल्पाद्रौसंवर्तेब्रह्मवासरे शास्त्रेन्यायेविधाविनिहेमचंद्रात्॥ क्षयःक्षीयंतेप्राणिनोऽत्र क्षिक्षये एरच्॥ कल्पांतःकल्पस्यांतोवधिः पंचप्रलयस्य २२

पङ्क पच्यतेदु खमनेन पचिव्यक्तीकरणे भिरत्सारेचकरणे घञ् पङ्कोपेकर्दमइतिहैमः॥ पाप्मा आप्नोतिव्याप्नोतिलोकान् आप्लृव्याप्तौ नामन् सीमन्निति सूत्रेणनिपातित ॥ पाप पात्यस्मादात्मान पारक्षणे पानीविपः यद्वा पिबति भक्ष्यति कर्तारं पपाने॥ किल्बिष केलयति क्रीडयति विषयेषु किलश्वैत्यक्रीडनयो टिषच् बुगागमश्च॥ कल्मष कलयति वशीकरोति कलस्थाने कल्मषेतिवृषादयादि तदुक्त कलुषत्वाविलेपापे किल्बिषपापरोगयोरित्यम॰॥ वृजिन वृज्यते वृजीवर्जनेइनच् तदुक्त कोशांतरे वृजिन कल्मषे क्लीब केशेना कुटिलेत्रिष्विति॥ एनः एत्यधोऽनेन एतिगच्छतिप्रायश्चित्तेनवा इण्गतौ असुन्नुडागम ॥ अघ अविगतोपचादिः अघदुःखव्यसनेनसोरितिहैमः॥ अंहः अंहतिगच्छति अंहगत्यादिषु यद्वा अंहति अहिगतौ असुन्॥ दुरित दुष्टमितगमनमनेन दुष्कृत दुष्ट

अस्त्रीपङ्कपुमान्पाप्मापापकिल्बिषकल्मष॥ कलुषवृजिनैनोघमंहोदुरितदुष्कृत २३ स्याद्धर्ममस्त्रियापुण्यश्रेयसीसुकृतवृष ॥मुत्प्रीतिःप्रमदोहर्षप्रमोदामोदसम्मदाः २४ स्यादानंदथुरानंदः शर्मशातसुखानिच॥

कृत करणमनेन इदुडुपेतिषत्व तत्रपङ्कक्लीबपुंसो पाप्मान्कारान्त पुंसि द्वादश २३ धर्म धरतिविश्व धृञ्धारणे अर्तिस्त्वादिनामन् तदुक्तरभसे धर्मौ स्त्रीपुण्य आचारे स्वभावोपमयोः क्रतौ अहिंसोपनिषन्न्याये धनापूर्यमसोमपइति॥ पुण्य पुनाति पुनातेर्यत् णुट् ह्रस्वश्च॥ श्रेयः अतिशयेनप्रशस्त प्रशास्यस्यश्र ईयसुन् तदुक्त श्रेयोमुक्तौ शुभे धर्मे त्रिषशस्तेचवाच्यवदिति॥ सुकृतसुष्टुकृत॥ वृषवर्षति फल वृषुसेचने इगुपेतिकः एतेषुधर्ममस्त्रिया पञ्चसुकृतस्य॥ मुत्॥ प्रीतिः प्रिञ्तर्पणे॥ प्रमद प्रमदोहर्षे अप् प्रमद सम्मदेयतइत्यम॰॥ हर्ष हृषतुष्टौ घञ्॥ प्रमोदः॥ आमोदः उभयत्रघञ्॥ सम्मद पुंसीतिघः २४ आनंदथु टि्वतो थुच्॥ आनंदः श्रणात्यशुभ शृहिंसायामनिन्॥ शर्म स्यतिदुःखशोतनूकरणे क्तन्॥ शात इत्यादिर्वा॥ सुख शोभनानिखान्यनेन एतेषु द्वादशनामसुकर्मोनि साहचर्यान्मुद्पस्त्रियादन्तारान्तः॥

श्वःश्रेयसं श्वआगामिश्रेयोऽत्र श्वसोवसीयःश्रेयसः इत्यच्॥ शिवं शेतेनेन शीङ्स्वप्ने निपातनात् ह्रस्वश्च तदुक्तं विश्वे शिवंच मोक्षेक्षेमेच महादेवे सुखेजले शिवो योगांतरे वेदेगुग्गुलौ बालुके हरे पुंडरीके द्रुमे कीलेइति॥ भद्रं भंदते भदि कल्याणे रन् तदुक्तं हेमचंद्रे भद्रः शिवे खंजरीटे वृषभेच कदंबके करिजाति विशेषे नाक्नौ बं मंगलमुस्तयोरिति भद्रं भद्रं शिवं तथेति त्रिकांडशेषश्च॥ कल्याणं कल्ये प्रातः काले अण्यते अणशब्दे अकर्तरीति घञ् वा कल्याणं हेम्निमंगल इत्युक्तत्वात्॥ मंगलं मंगति मंग्यतेवा मगि सर्पणे मंगेरलच्॥ शुभं शोभते शुभशो भायां इगुपेतिकः शुभोयोगेशुभं भद्रे इत्यु॰ २५ भावुकं भवनशीलं लषेत्युकञ् भूप्राप्तौ॥ भवि-कं मत्वर्थेठन् भवो भद्राप्तिसत्तयोरित्यजयः॥ भव्यं भव्यगेयेतियत् भवोभद्राप्तिरत्रास्ति॥ कुशलं कुत्सितं शलते संवृणोति शलचलनेच पचाद्यच्॥ क्षेमं क्षप-

श्वःश्रेयसं शिवं भद्रं कल्याणं मंगलं शुभं २५ भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियां॥ शस्तंचाथ त्रिषुद्रव्ये पापं पुण्यं सुखादिच २६ मतल्लिका मचर्चिका प्रकांडमुद्घतल्लजौ॥ प्रशस्तवाचकान्यमू

त्यशुभं क्षिक्षयेमन् अस्त्रियामिति क्षेमशस्तमात्रान्वयि॥ शस्तं शस्यतेस्म शंसु स्तुतौ क्तेऽउदितो वेतिनेट् ह्रादशकल्या मात्रस्य पापपुण्यशब्दौ सुखादिशब्दाश्च श्वःश्रेयसादि शिवभद्रशस्तांतशब्दजातं द्रव्ये विशेष्ये वर्तमानं त्रिषुवाच्यलिंगा मितिबोध्यं तत्रपापास्त्री पुण्यो घटः श्वःश्रेयसं गांगंजलं इत्यादि २६ मतल्लिका मतं अलति ण्वुल् कुन् वा पृषोदरादित्वात् स्यलः प्रशस्तः कुलालः कुलालमतल्लिका॥ मचर्चिका प्रशस्तः दंडः दंड मचर्चिका मंशोभं चर्चेति ण्वुल्॥ प्रकांड प्रशस्तः घटः घटप्रकांड प्रगतं कांडं अवसरोऽस्मात् रसोवा॥ उद्घः प्रशस्तः दंडः दंडोद्घः संघोद्घौ इति साधुः उद्घो हस्तपुटे वन्हौ श्लाघायां देहजानिल इति हेमः॥ तल्लजः लजति पचाद्यच् तद्वत् लजः प्रशस्तामृत् मृत्तल्लजः पंचप्रशस्तवाचकानिस्युः एतेषां

अ॰धे
९

नञित्यद्रव्येएवयिगानरेणसामानाधिकरण्येपिस्वलिंगनत्यजति मतल्लिकादीनः रूढिशब्दत्वात् मशस्तावचनेश्चेतिरूप्यासपेवाप्यश्चादित्वदेनेनित्यसमासा मकाड पुस्यपि मस्तोमस्तयोविस्पेतरूस्तपमयाश्वयोरितिरमस तदुक्तत्वमेदिन्या मकाडोमस्तो विटपेमूलशारवानरेनरो ॥अयः एसनेनस्तव इण्गवौध शुभावहो विभिरु मतेशुभअवहति पचादिः देवमितसर्पः अयोकारान्तःएक २७ देवं देवादागत नते आगतरत्यण् ॥ दिष्टदिश्यतेउपदिश्यतेस्म कर्मणिक्त ॥भागधेय भागोनिधेय ॥भाग्यं भन्यते भजसेवाया ण्यत् कृत भाग्यकर्मशुभाशुभ ॥नियतिस्त्री नियम्यतेःनयास्तिन् नियतिर्नियमेदैवे इतिविश्व ॥विधि पुंसि विधीयतेऽनेन उपसेनिकिः डुधाञ् ष मात्मन कर्मण ॥हेतुःहिनोतिव्याप्नोति स्वर्यहिगतौ कमियनीतितुन् ॥कारण क्यनात्करणे ल्युट् स्वर्यतेःनेन ॥बीज विरोधेयाज्जायतेऽनेन यद्वा बीजयते ण्यन्त्संवरणेडेरी

न्ययः शुभावहोविधिः २७ दैवंदिष्टं भागधेयं भाग्यंस्त्रीनियतिर्विधिः॥ हेतुर्नाकारणंबीजंनिदानंत्वादिकारणं २८ क्षेत्रज्ञआत्मापुरुष प्रधानंप्रकृतिःस्त्रियां॥ ५ इत्यादिमकरणः इत्याद्भूत्य हेतुर्नाभयहेतुमात्रस्य ॥निदानतुआदिकारणस्यात् नितरांदीयते साधारणतयाजन्यतेःनेन डुधाञ् कर्मणि ल्युट् नितर्ने करणे ल्युट्हौ नपसोफलयाचने आदिर्मुख्यंकारणं एकंउपादानकारणस्य २८ क्षेत्रज्ञ क्षीयनइतिक्षेत्रं शरीरं तज्जानातीति ज्ञाअवबोधने अ-तोनुपेतिक तदुक्तंहैमे क्षेत्रज्ञावात्मनिपुणाविति॥आत्मा अतति अतसातत्यगमने आङ् पूर्वात्मनिन् ॥पुरुष पुरति पुरअग्रगमने पुरःकुषन् पुरुषोपि पूरय तिवा पूरी आप्यायने पुरिपुर्यनेसोवा पुरुषस्त्वात्मनिरनेपुन्नागेन्द्रेतिहैमः अयमात्मन ॥प्रधानं प्रधत्तेसर्वमात्मनीति अधिकरणेकरणेवा प्रकृष्टधानमनेनवा तदुक्तंहैमे प्र धान प्रज्ञाबुद्ध्याउत्तमे परमात्मनि महामात्रेनि॥प्रकृतिः प्रकृष्टाकृतिकायमस्या इत्याद्भूत्य तदुक्तंरभसे प्रकृतिर्गुणसाम्येस्यादमात्यादिस्वभावयोः योनौलिंगे पौरवर्गे इति हैमस्त्वादिगुणसाम्यावस्थायाः॥

यः कालिकः कालकृतः कालेननिर्वृत्तः निर्वृत्तश्चेतिठक् वा यौवनादिर्विशेषः सावस्था आतश्चोपसर्गेइत्यङ्॥ सत्त्वं सतोभावः सत्त्वंद्रव्ये गुणेचित्ते व्यवसायस्वभावयोः पिश
चादावात्मभावेबले प्राणेषु जंतुष्विति ॥ रजः रंजयति॥ तमः ताम्यत्यनेन तमुग्लाने असुन् कप्रत्यये रजतमौ अजंतपुल्लिंगावपि पुष्पेवेशोगुणेचैव रजोयंरजसासहेति उत्पलि-
नी रजोयंरजसा सार्धंस्त्रीपुष्पगुणधूलिष्विपजयः रजस्तमसी सांते एतेगुणाः प्रकृतेर्धर्माः एकैकं २९ जनु जनेरुसिः॥ जननंल्युट्॥ जन्म ॥ जनिः स्त्री ॥ उत्पत्तिः॥ उद्भवः
जन्तुः सांतं षट्कं जन्मनः॥ प्राणी प्राणाः संत्यस्य अतइनिः॥ चेतनः चेतयते चेततिवा कर्तरिल्युट्॥ जन्मी जन्मास्यास्तीति अतइनिः॥ जंतुः जायते कमिगमिजनीतितुन्
जनी प्रादुर्भावे ॥ जन्युः युच् अनादेशाभाव॥ शरीरी शरीरमस्यास्तीति मत्वर्थेइनिः षट् ३० जातिः जायते जनी प्रादुर्भावे क्तिच् तदुक्तंहेमे जातिः सामान्यगोत्रयोः माल-

**विशेषः कालिकोवस्थागुणाः सत्त्वंरजस्तमः २९ जनुर्जननजन्मानिजनिरुत्पत्तिरुद्भवः॥ प्राणीतुचेतनोजन्मीजंतुजन्युशरीरिणः ३० जाति-**
**जतिंचसामान्यंव्यक्तिस्तुपृथगात्मता॥ चित्तंतुचेतोहृदयंस्वांतंहृन्मानसंमनः ३१ इतिकालवर्गः बुद्धिर्मनीषाधिषणा**

त्यामामलक्यांच
तुल्यांकंपिलुजन्मनोः जातिफले छंदसिचेति ॥ जातं भावेक्तः॥ सामान्यं समानानांभावः त्वयंघटत्वादिजातेः॥ व्यक्तिः व्यज्यतेनया अंजूव्यक्तया दीप्तौ क्तिन् व्यनक्ति
वाक्तिच्॥ पृथगात्मता पृथगात्मायस्य तस्य भावः तल् द्वे॥ चित्तं चितीसंज्ञाने भावेक्तः॥ चेतः असुन्॥ हृदयं ह्रियतेविषयैः कयन् दुगागमश्च हरति आहरतिविष
यानितिवा॥ स्वांतं स्वनशब्दे स्वन्यतेस्मक्षुब्धेति निपातितः॥ हृत् हरतेस्क्विप्॥ मानसं मन्यतेनेन असुन् ततः प्रज्ञाद्यण्॥ मनः॥ हृत्दकारांतः सप्तकंचित्तस्य ३१ इ-
तिकालवर्गः॥ ॥ बुद्धिः बुध्यतेनया बोधनंवा करणेक्तिन् भावेवा॥ मनीषा मनसईषा ईषगति इत्यादिषु शकंध्वादिः धिषणा धृष्णुवंत्यनया ञि धृषाप्रागल्भ्ये युच्प्रकृ-
तेर्धिषादेशः॥

धीः ध्यायत्यनया ध्यायते क्विप् संप्रसारणं हल इति दीर्घश्च ॥ प्रज्ञा प्रज्ञायतेऽनया ज्ञा अवबोधने आतश्चोपसर्गे क इत्यङ् तदुक्तं शब्दार्णवे प्रज्ञा प्रज्ञा धरा वसि पंडा स वेदन वि देति ॥ शेमुषी शेते मोहोऽस्यां मुष्णाति मुष खंडने शीङो मुषिच् मूर्धन्य इत्येके शेमुषेः कः ॥ मतिः मन्यतेऽनया मन ज्ञाने क्तिन् ॥ प्रेक्षा प्रकृष्टं ईक्षणं गुरोश्च हल इत्यप्रत्ययः टाप् ॥ उपलब्धिः उप-लभ्यतेऽनया डुलभष् प्राप्तौ क्तिन् ॥ चित् चिती संज्ञाने संपदादिः क्विप् ॥ संवित् विदेः क्विप् ॥ प्रतिपत् पद्यते क्विप् संपदादित्वात् ॥ ज्ञप्तिः ज्ञानं ॥ ज्ञप्तिः ण्यासश्रन्थो युच् इति प्राप्ते बाहुल-कात् क्तिन् ॥ चेतना ण्यासश्रन्थो युच् अनादेशः चतुर्दश बुद्धेः १ या धारणावती धीः सा मेधा मेधृ संगमे संगच्छते सर्वमस्यां मेधृ संगमे गुरोश्च हल इत्यप्रत्ययः एकं ॥ यन्मानसं कर्म इदमहं कुर्यामिति मनसो व्यापारः स संकल्पः कृपू सामर्थ्ये भावे घञ् एकं ॥ चित्ताभोगः चित्तस्य मनस आभोगः आङ् पूर्वात् भुजेर्घञ् कुत्वं तदेकं मनसो पूर्णतायां

धीः प्रज्ञा शेमुषी मतिः ॥ प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः १ धीर्धारणावती मेधा संकल्पः कर्म मानसम् ॥ चित्ताभोगो मनस्कारश्च-र्चा संख्या विचारणा २ अध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः ॥ संदेहद्वापरौ चाथ समौ निर्णयनिश्चयौ ३

आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपीत्युक्तत्वात् ॥ मनस्कारः मनसः कारो व्यापारविशेषः डुकृञ् भावे घञ् अत एवोक्तेति सः हे मनसः स्कारादीनत्परतायाः ॥ चर्चा चर्च अध्ययने चिंति पूजीति युच् बाधकोऽङ् ॥ संख्या ॥ विचारणा रात्रे संख्या तद् न्यायप्रमाणैरर्थपरीक्षणस्य २ अध्याहारः अध्याहरणं ॥ तर्कः अपूर्वोत्प्रेक्षणं तर्कोऽवितर्क्ये कासाया मूहवर्ण-विपर्ययोरितिहैम ऊहः ऊहनं ऊह वितर्के घञ् न्याय तर्कस्य त्रिषु भावे घञ् ॥ विचिकित्सा कित निवासे सन्नंतादकार ॥ संशयः शीङो न्न ॥ संदेहः दिह उपचये संदेहनं भावे घञ् ॥ द्वापरः द्वौ परौ प्रकारौ यस्य सर्वनामत्वात्पूर्वनिपाते पृषोदरादित्वात् न्यायसंशयज्ञानस्य ॥ निर्णयः निर्णयनं णीञ् प्रापणे एरच् ॥ निश्चयः चिञ् चयने अप् द्वे निश्चयज्ञानस्य ३

मिथ्यादृष्टिः मिथ्येत्यपन्हवेतद्विषयिणी दृष्टिः ॥ नास्तिकता नास्तिपरलोकइति मतिर्यस्य तस्य भावः ठगंतात्तल् द्वे परलोकाभाववादिज्ञानस्य ॥ व्यापादः पदेर्ण्यंताद्धञ् ॥
द्रोहचिंतनं द्रोहस्यचिंतनं द्वे अन्यद्रोहचिंतनस्य ॥ सिद्धांतः सिद्धोंऽतोनिश्चयोयस्मिन् ॥ राद्धांतः राद्धः सिद्धोंऽतोनिश्चयोयस्मिन् द्वेसिद्धांतस्य ॥ भ्रांतिः भ्रमेः क्तिन् भ्र-
मोंबुनिर्गमे भ्रांतोकुंदभ्रमणयोरपीत्युक्तत्वात् ॥ मिथ्यामतिः मिथ्येत्यव्ययंतेन कर्मधारयः ॥ भ्रमः त्रयमयथार्थज्ञानस्य ४ संवित् संवेदन विद्ज्ञाने संपदादिः ॥ आ-
गूः धूर्वत् आगूः गमेर्डूप्रत्यये वधूवत् आग्वौ आगवः इति एतौ स्त्रियां धूर्वपदिपक्षे आगुरौ आगुर इत्यादि गुरीउद्यमने क्विप् हलिचेतिदीर्घः ॥ प्रतिज्ञानं ल्युट् ॥ नियः
मः नियमोयंत्राणायां च प्रतिज्ञानिश्चयेव्रत इत्युक्तत्वात् यमः समुपेनिअप् ॥ आश्रवः आश्रवोंगीकृतौ क्लेशे नान्यवद्वचनेस्थित इत्युक्तत्वात् ॥ एवंसंश्रयप्रतिश्रवौ

**मिथ्यादृष्टिर्नास्तिकता व्यापादोद्रोहचिंतनं ॥ समौ सिद्धांतराद्धांतौ भ्रांतिर्मिथ्यामतिर्भ्रमः ४ संविदागूः प्रतिज्ञानंनियमाश्रवसंश्रवाः ॥ अं-**
**गीकाराभ्युपगमप्रतिश्रवसमाधयः ५ मोक्षेधीर्ज्ञानमन्यत्र विज्ञानंशिल्पशास्त्रयोः ॥ मुक्तिः कैवल्यनिर्वाण**

आङ् संप्रतिपूर्वेभ्यः अप् ॥ अंगी-
कारः अंगीतिच्व्यंतं अव्ययं कृञो घञ् ॥ अभ्युपगमः ग्रहवृदृ इत्यप् ॥ प्रतिश्रवः ॥ समाधिः उपसेतिभावेकिः तदुक्तं रभसे समाधिर्नासमर्थने ध्यानेवैरस्य नियमे-
काव्यस्यच गुणांतरे इति दशांगीकारस्य ॥ मोक्षेतद्विषये याधीः तज्ज्ञानं ल्युट् एकं ॥ अन्यत्र मोक्षात् शिल्पशास्त्रयोः धीः विज्ञानं अन्येतु मोक्षनिमित्तंशिल्पशा-
स्त्रयोधीः ज्ञानमुच्यंते अन्यनिमित्तयाधीः साविज्ञानं विज्ञानंकर्मणि ज्ञानेइतिहैमः ॥ मुक्तिः मोचनं मुच्लृमोक्षणेक्तिन् तदुक्तंहैमे मुक्तिर्मोचनमोक्षयोरिति ॥ कै-
वल्यं केवलस्यभावः ष्यञ् ॥ निर्वाणं निर्वाणंमोक्षनिर्वत्यविघातेकरिमज्जन इतिहैमः ॥ ॥ ७॥ ॥ ७॥ ॥ ७॥

श्रेय अतिशयेनप्रशस्य ईयसुन्निश्रादेशः श्रेयोमुक्तौ शुभे धर्मे निम्रशुभेनुशाव्यवत् ॥ नि श्रेयस निनरां श्रेयो समासान्तोच् निःश्रेयसंतुकल्याणमोक्षयोः शंकरेपुमा
नितु ॥ अमृत अविद्यमानमृतमरणंयत्र अमृतंयज्ञशेषेस्यात्पीयूषेसलिलेघृते अयाचितेचमोक्षेचनाधन्वन्तरिदेवयोरित्युक्तत्वात् ६ मोक्ष मोक्षअवसाने एरन्प
न्तवा मोक्षोनिःश्रेयसेवृक्षविशेषेमोचनेमृताविनिर्दिष्ट ॥ अपवर्ग अपवर्गस्त्यागमोक्षयो क्रियावसानेसाफल्येइतिहैम अष्टकंमोक्षस्य ॥ अज्ञानज्ञानविरुद्ध ॥ अ
विद्या विद्याविरुद्धा ॥ अहंमति अहमितिविभक्तिप्रतिरूपकमव्ययं अहंकारार्थकं अहंमतिः अहंप्रधानामतिः त्रयमज्ञानस्य ॥ रूपरूपयति विमोहयतिरूपविमोह
ने अच् इत्यापूर्त्या रूपंतु श्लोकशब्दयोः स्वभावाकारसौन्दर्येनाणकेनाटकादिषु ग्रंथावृत्तौ स्वभावेचेतिहैम ॥ शब्द शप्यते आक्रुश्यते शपआक्रोशे दन् शब्दोऽस

## श्रेयोनिःश्रेयसामृत ६ मोक्षोपवर्गोऽथाज्ञानमविद्याहंमतिः स्त्रियां ॥ रूपशब्दोगन्धरसस्पर्शाश्चविषया अमी ७ गोचराइन्द्रियार्थाश्चहृ षीकंविषयीन्द्रियं ॥

स्त्रयोगीत्योर्वाक्येस्वेश्रवणेध्वनाविति हैमः ॥ गन्ध गन्धयति गन्धअर्दने अच् गन्धःसंबन्धलेशयोः गन्धकामोदगर्वेष्वि तिहैमः ॥ रस रस्यते र
स आस्वादने चुरादेरे रच् पन्न्रा रसोगन्धरसेजले श्रृंगारादौविषेवीर्येतिक्तादौद्रवरागयो देहधातुप्रभेदेचपारदस्वादयोः पुमानितिहैम ॥ स्पर्श स्पृशसंस्पर्शने
घञ् नदुक्तं हैमे स्पर्शोवर्गौ स्परेदानेस्पर्शनेस्पर्शकेरुजीति एतेपञ्च विषयाइति गोचरादीति इन्द्रियार्थादि इतिचत्वरः विषिन्वन्ति निबध्नन्तीन्द्रियाणि षिञ्बन्धने पचाद्यच्
रितिनोतिषत्वं तदुक्तं हैमे विषयोयस्ययोज्ञातस्तत्रगोचरदेशयो शब्दादौजनपदेचेति गावइन्द्रियाणि चरन्त्येषु गोचरः सञ्चरेतिनिपातितः इन्द्रियैरर्थ्यतेअर्थ्यतेअर्थयाच्
ञायां कर्मणि घञ् ॥ चीणि ७ तथाकहृष्यत्सनेन त्युअव्ययेके अनिद्द्रषीति ईकन् सचकित् ॥ विषयि विषयोऽस्यास्ति ॥ इन्द्रिय इन्द्रस्यात्मनो लिंगं इन्द्रियतुनस्कारि
पुरेनसीतिनिर्देशः चीणि इन्द्रियाणां चक्षुरादीनां विषयिणान ॥

कर्मेंद्रियंतुपाय्वादिस्यात् आदिनावागादि कर्मसाधकमिंद्रियं पायतिशोषयति पैशोषणे कृत्वापेनिउण् युगागमः नच्च पायूपस्थंपाणिपादौवाक्चेतींद्रियसंग्रहः उत्स-
र्ग आनंदादानगत्यालापाश्चतत्क्रियाइति॥ मनोनेत्रादिधींद्रियमुच्यते धीसाधनमिंद्रियं आदिनाश्रोत्रादि तच्च मनः कर्णौतथानेत्रंरसनाचत्वचासह नासिकाचेति
षट् तानि धींद्रियाणि प्रचक्षतइति कामंदीये एकं॥ अथरसभेदानाह तुवरः तवीति हिनस्तिरोगान् तुइतिसौत्रः ष्वरच् दीर्घादिरपि वरेऽश्मश्रुणिशृंगाभ्यांरहितेगवि
तूवरः कालेप्रासेरसायेचरसेपुंव्यंजनेच्युतइत्युत्पलिनी॥ कषायः कषतिकंठं कषहिंसायांबाहुलकादायः कषायःसुरभौरसे रागवस्तुनिनिर्यासेक्रोधादिषुविलेपने इ
तिहेमः द्वे तुवरस्यइतिख्यातस्य॥ मधुराद्याः पृथक्ज्ञेयाः एवंतुवराद्याःषडपिरसाउच्यंते मधुरः मधुमाधुर्यंयस्यास्ति मत्वर्थेरः मधुरस्तुप्रियेस्वादौरसेचरसवत्यपि म-

कर्मेंद्रियंतुपाय्वादिमनोनेत्रादिधींद्रियं ८ तुवरस्तुकषायोस्त्रीमधुरोलवणःकटुः॥ तिक्तोम्लश्चरसाःपुंसितद्वत्सुषडमीत्रिषु ९

धुरामधुरापुर्यांयष्टिभेदमधूलिषु मधुकर्कटिकायांचमिश्रेयाशतपुष्पयोरितिहेमः सतुजलादौप्रसिद्धः एकं॥ लवणः लुनातिजाड्यं लूञ्छंदने नंद्यादिः एवंलवणादौप्र
सिद्धः एकं॥ कटुः कटत्यावृणोति तीक्ष्णतयासुखं कटे वर्षावरणयोः कटिचटिभ्यांन्वेत्कः तदुक्तंहैमे कटुकार्येमत्सरेच दूषणेच कटूरसे तिक्ते प्रियंगुसुरभिकटुकार-
जिकास्वपीतिहैमः सतुमरीचादौप्रसिद्धः तिक्तः तेजयतिस्म तिजनिशाने णिजभावेगत्येतिक्तः तिक्तस्तुसुरभौरसे तिक्तातुकटुरोहिण्यांतिक्तपर्पटकौषधइतिहैमः
निंबादौप्रसिद्धः॥ अम्लः अंब्यतेशब्द्यते मोक्तृभिः अबिशब्दे तिंतिडयादौप्रसिद्धः अम्लोरसेम्लवेतसइतिहैमः॥ रसः रस आस्वादने अदंतः रस्यते आस्वाद्यते
कर्मणिघञ् अमीतुवरादयः षट् रसशब्दवाच्याःपुंसिच तत्रतुवरकषाययोरस्त्रीत्वस्योक्तत्वात् तद्वत्सुरसवत्सुवर्तमानास्त्रिषु वाच्यलिंगाइत्यर्थः ९

विमर्दोत्थे माल्यादिगंधे घर्षणसमुद्भवे चंदनादिगंधेच जनमनोहरे परिमल मल्यते कर्मणि घञ् मल धारणे सत्तापूर्वको विधिरनित्यः इत्या शुत्व एकः॥ विमर्दग्रहणे नजातिमाल्यादे निरासइत्यर्थः॥ योतिनिर्हारी अत्यंतसमाकर्षीसगंध आमोदउच्यते आसमंतान्मोदयतीति मुदहर्षेण्यंतादच् आमोदोगंधहर्षयोरित्यः॰ कस्तूरिका यामामोदः कर्पूरेमुखवासनः बकुलेस्यात्परिमलश्चंपकेसुरभिस्तथेतिशब्दार्णवः एकः॥ आ गुणात्कुणोशुक्लादयः पुंसीत्यत प्रागतः परेवाच्यलिंगत्वमधिक्रियते १०स माकर्षी समाकर्षतश्यमनः आवश्यकेणिनिः यद्वा समाकर्षशीलः सुपीतिणिनिः एवंनिर्हारी निर्हरत्यवश्यंमनो हूदूरगामिगंधस्य॥ सुरभि सुष्टुरमते अइन्॥ घ्राण तर्पणः घ्राणंतर्पयति इष्टगंध इष्टोगंधोस्य तदुक्तं रभसे इष्टगंध सुगंधोस्याभिषुक्तौवकुवाचके इति॥ सुगंधि सुष्टुगंधोस्य समासांतइकारः सुगंधिःस्यादिष्टगंधे

विमर्दोत्थेपरिमलोगंधेजनमनोहरे॥ आमोदःसोऽतिनिर्हारीवाच्यलिंगत्वमागुणात् १० समाकर्षीतुनिर्हारीसुरभिर्घ्राणतर्पण ॥ इष्टगंधः सुगंधिःस्यादामोदीमुखवासनः ११ पूतिगंधिस्तुदुर्गंधोविस्रंस्यादामगंधियत्॥ शुक्लशुभ्रशुचिश्वेतविशदश्येतपांडुराः १२ त्रिपुस्त्रीरेपुं

स्य मिति चत्वारीष्टगंधस्य॥ आमोदी आमोदयति सुपिणिनि ॥ मुखवासन मुखवासयति नंद्यादि त्व्यमुखवासयतितस्पतांबूलादेः ११ पूतिगंधि पूयते पूय ति पूतिर्दुष्टोगंधोऽस्य पूयीविशरणेदुर्गंधेच क्तिन्॥ दुर्गंधः दुष्टोगंधोऽस्य द्वे अनिष्टगंधयुक्तस्य॥ यदामगंधितद्विस्रंस्यात् विस्यति विसप्रेरणे बाहुलकाद्रक् कि त्त्वसनेचा आमोपक्वमलस्तस्येवगंधोयस्यतत् उपमानाच्चेतिसमासांतइः॥ शुक्ल शोकतिमनोऽस्मिन् ऋज्रेतिसाधुः॥ शुभ्र शोभतेरक्॥ शुचिः शुचेरिक्॥ श्वेत श्वितावर्णेघञ्॥ विशदः शद्लृशातने अच् विशीर्यते शद्लृशातने विशदः पांडुरेव्यक्ते इतिहैमः॥ श्येत श्यायतेरितन् पांडुर पडगतौ मनोस्मिन् पडिगती बाहुलकादु रोदीर्घश्चेतिसाधुः १२

अवदातः अवदायतेस्म दैप् धातोः कर्मणिक्तः अवदातंतुविमलेमनोज्ञेसितपीतयोरितिहैमः॥सितः सिनोतिमनः षिञ्बंधने ओंजि धूसीतिक्तः सितस्त्व
नसितेवद्धेसितातुशर्करेपिनेतिहैमः॥गौरः गुरीउद्यमेऋज्रेंतिसाधुः तदुक्तंहैमे गौरः श्वेतेरुणेपीते विशुद्धे चंद्रमस्यपि निदेशेगौरंतुश्वेत सर्षपेपद्मकेसर इति॥
अवलक्षः घञ्भागुरिमतेतुवलक्षः॥धवलः॥अर्जुनः अर्ज्यतेयतादुनन्॥हरिणः हरतिमनः हरतेरिनन् तदुक्तंहैमे हरिणौपांडुसारंगौ हरिणीत्वारुयोषिति
रूवर्णप्रतिमायांच हरिताष्टत्तभेदयोरिति॥पांडुरः नगपांसुपांडुभ्योरेः इतिरः पांडुलमस्यास्तीति॥पांडुः पंड्यते ज्ञायतेपडिगतौ पृषोदरादिः पांडुः कुंतीपतौसिते
इतिहैमः तदुक्तंशब्दार्णवे श्वेतस्तुसमपीतोसौरक्तेतरजपारुनिः वलक्षस्तुसितःशावःकदलीकुसुमोपमः अर्जुनस्तुसितःकृष्णालेशवान्कुमुदच्छविः पांडुरस्तुपी-

आवदातःसितोगौरोवलक्षोधवलोर्जुनः॥हरिणःपांडुरःपांडुरीषत्पांडुस्तुधूसरः १३ कृष्णोनीलासितश्यामकालश्यामलमेचकाः॥

तभागार्द्धः केतकीधूलिसन्निभ इति षोडशनामानिशुक्लस्य तत्रार्जुनांतानित्रयोदशनामानिशुक्लस्य हरिणादीनित्रीणिपीतमिश्रशुक्लस्येतिकेचित्॥ईषत्पांडुः
धूसरः धुनोतिक्विपःधूविधूनने रुधूमदीतिकसः बाहुलकात्षत्वाभावः इत्याधूल्यं यद्वा धूसंरातिधूसकांतिकरणेपर्यंतादेरन् तदुक्तंशब्दार्णवे धूसरीकिन्नरीभे-
देनाखरेत्रिषुपांडुरे धूसरस्तुसितःपीतलेशवान्बकुलच्छविरिति ईषद्धवलस्य १३ कृष्णः कर्षतिमनः कृषेवर्णेनक्पात्वं तदुक्तंहैमे कृष्णः काकेपिकेवर्णेविष्णौ
व्यासेर्जुनेकलौ कृष्णातुनील्यांद्रौपद्यांपिप्पलीद्राक्षयोरपि कृष्णंतुमरिचेलोहे इति॥नीलः नीलतिनीलवर्णे इगुपधेतिकः नीलोवर्णेमणौशैलेनिधिवानरभेदयोः नी-
ल्यौषध्यांलांछनेइतिहैमः॥असितः नसितः विरुद्धार्थेनञ्॥श्यामः श्यायतेमनोऽस्मात् श्यैङ्गतौमक्॥कालः कल्यते कलसंख्यानेघञ् कालापादेकृष्णस

पमहाकालफलतालयोः मरणान्तेहसोः कालीकालिकासीरकीटयोरिति हैमः ॥ श्यामल श्यामत्वमस्यास्तीति मत्वर्थे लच् तदुक्तं हैमे श्यामल पिप्पलेश्यामेऽ
ति ॥ मेचकः मेचति मिश्रीभवति वर्णान्तरेण मच मुचि कल्कने वुन् रूपधायाइत्वे गुणः मेचकः श्यामवे कृष्णोतिमिरेबर्हिचन्द्रक इति हैमः मेचक कृष्णनीलः स्याद-
तसीपुष्पसन्निभ इति विशब्दार्णवः असमनील्यादिगतवर्णस्य ॥ पीतः पीयते पिबतिर्ण्यन्तत्रयाणि ता कर्मणि क्तः नरिवाक्तः तदुक्तं रभसे पीतपाने हरिद्रायास्त्रि
याङ्गौरेऽभिधेयवत् ॥ गौरः गुरते उद्यमने मनोः स्थिता गुरीउद्यमने इगुपधेति कः स्वार्थे अण् गौरश्वेते रूपे पीते विशुद्धे चन्द्रमस्यपि गौरस्तु विशदे श्वेतसर्षपेपद्मकेस
रइति हैम ॥ हरिद्राभः हरिद्रेवाभादीप्तिर्यस्य त्रीणिपीतस्य ॥ पालाशः पत्रस्य पलाशस्याय तस्येदमित्यण् तदुक्तं रभसे पत्रं पलाशनारस्य शटीहरितकिञ्छे-

पीतोगौरोहरिद्राभ पालाशोहरितोहरि १४ रोहितोलोहितोरक्त शोण कोकनदच्छवि ॥ अव्यक्तरागस्त्वरुण

इति पलाशोपिस्यात् ॥ हरित हरति हरतेरितन् ॥ हरित् इतिः हरितास्त्रीचदूर्वाया हरिद्वर्णेयुतेन्यवत् त्रीणि शिरीषादिपत्रगतवर्णस्य १५ रोहित रो
हति रुहजन्मनि भादुभ्यो नेच इतन् रेफस्यलोवा ॥ लोहितः तदुक्तं हैमे लोहितमगलेनदे वर्णभेदेलोहितन्तु कुङ्कुमरक्तचन्दने गोशीर्षे रुधिरे युद्धे इति हैमः ॥ रक्त रज-
तिस्म रञ्जरागेक्त यद्वारज्यतेस्म रञ्च भनियन्ले तदुक्तं हैमे रक्तनील्यादि रञ्जिते कुङ्कुमेस्रृज्यनुरक्ते पार्चीनामलके रुणे इति त्रीणिरक्तस्य ॥ यः कोकनदच्छविः सशोण-
कोकनदं रक्तोत्पलमिवच्छविर्यस्य शोणयति शोणृवर्णे पचाद्यच् तदुक्तं रभसे शोणः कृशानौस्योनाकेलोहिताश्वेनदेपुमानिति यो ऽव्यक्तरागः किञ्चिद्रक्तः सोऽरु
णः ऋच्छति ऋगतौ कृतेरुन् तदुक्तममरमालाया अरुण कृष्णलोहितइति अरुणोऽव्यक्तरागे ऽर्केसन्ध्यारागे ऽर्कसारथौ निःशब्दकपिले कुष्ठभेदेनागुणिनित्रिषु अ
रुणानिविधाश्यामाम[illegible]

य. श्वेन मिश्रो रक्तः शपाटलः स्येकंनाम पाठयन्ति पटगतौ पर्यंतात् कलच् रषादित्वात् १५ श्यावः श्यायते श्यैङ् गतौ बाहुलकात् वः ॥ कपिशः कपिर्वर्णविशेषः सोऽस्या-
स्तीति मत्वर्थे शः कपिर्मर्कटः तद्वद्वर्णत्वादिति वा कपिशस्त्रिषु श्यामे स्त्री माधव्यां सिल्हके पुमान् द्वे धूसरारूणवर्णस्य ॥ धूम्रः पृषोदरादि धूम्रः ॥ धूमलः धूमंलाति रास
स्नाति मत्वर्थे शा कपिर्मर्कटः तद्वद्वर्णत्वादिति वा कपिशस्त्रिषु श्यामे स्त्री ॥ कृष्णलोहितः कृष्णामिश्रितः लोहितः त्रीणि कृष्णयुक्तलोहितवर्णस्य ॥ कडारः कडंकरूछ्टुनि क्रगतौ कर्मण्यण् कडवर्णे इलच् बस्यपः ॥ कपिलः कपिंवर्णो
नेन्ला आदाने ॥ कृष्णलोहितः कृष्णमिश्रितः लोहितः त्रीणि कृष्णयुक्तलोहितवर्णस्य ॥ पिंगः पिंगति पिजिवर्णे घञ् कुत्वं ॥ पिशंगः पेशति पिश अवयवे अगंच् ॥ कद्रुः कंदति कादि
लाति आतइतिकः तदुक्तं विश्वे अनलेवासुदेवेप कपिलः परिकीर्तितइति ॥ पिंगलः पिंजति पिजिवर्णे घञ्कुत्वं पिंगंलातीति तदुक्तं रभसे पिंगलः कन
आस्नाने रोदनेच औणादिकः तदुक्तं रभसे कद्रुस्त्रिषु स्वर्णपिंगे नागानांमातरि स्त्रियां ॥

**श्वेनरक्तस्तुपाटलः १५ श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते ॥ कडारः कपिलः पिंगपिशंगौ कद्रुपिंगलौ १६ चित्रं किर्मीरकल्मा-
षशबलैताश्च कर्बुरे ॥**

पिलेब भ्रौरुद्रे उर्के पारिपार्श्वके कपौसुनौ निधेर्भेदे पिंगला कुमुदस्त्रियामिति शब्दार्णवेतु सितपीतहरिद्रक्तः कडारस्तृणवन्हिव-
त् प्रगंतद्रक्तपीतांगः कपिलोगो विभूषणः हरितांशोऽधिकेसोतुपिशंगः पद्मधूलिवत् पिशंगस्त्व सितावेशात्पिंशो दीपशिखादिषु पिंगलरक्तपरच्छायः पिंगे-
शक्लांग खंडवदिति पिंगागोरोचनापांडुरितिकात्यश्च षद्कं पिंगलवर्णस्य अयंअत्यंतगौर बालकस्य केशेषु प्रसिद्धः १६ चित्रं चीयते चीञ् स्वयनेत्रः चित्तंत्रायतेवा-
आनइतिकः ॥ किर्मीरः कर्मीर इत्यपि किरतेरीरन् मुद्न्च ॥ कल्माषः कलूचासौमाषश्च कल्माषः कर्बुरे कृष्णोइति मूर्धन्यांतेरभसः कल्माषोराक्षसेकृष्णोश
वलेपीति हेमः ॥ शबलः शपेः कलः बादेशश्च ॥ एतः एतिवर्णात् एतेषट् कर्बुरेविचित्रवर्णेस्युः तदुक्तंमेदिन्यां कर्बुरंसलिलेहेम्नि कर्बुरः पापरक्षसोः क
र्बुराकृष्णवृंतायांशबलेपुनरन्यवदिति ॥

शुक्लादय गुणेगुणमात्रेवर्तमानाःपुंसि॥ त्रिमतु रूपभेदान्नपुंसक॥ यथास्यपदस्यचित्ररूप तद्वति गुणवति वस्तुनि वर्तमानागुणिलिंगाः अभिधेय-
लिंगाःगुणवचनेभ्योमतुपोलुक्इति गुणिनिवर्तमानत्वंतत्पत्सुस्थाने गुणगुणिनोरभेदाभिप्रायेह इतिमहाभाष्यादवगन्तव्य यथाशुक्लःशाटीशुक्लु पट शु
क्लंवस्त्रं१० इतिधीवर्गः ब्राह्मी ब्रह्मणइयंब्राह्मोजाताविति टिलोपः ङीप्॥ भारती विभर्ति अतच् स्वार्थेअण् भरतस्येयमितिवातस्येदं॥ भाषा भा-
ष्यते भाषव्यक्तायांवाचि गुरोरित्यः॥गीः गॄशब्देसंपदादि भागुरिमतेगिरापि॥तदुक्तंशब्दार्णवेब्राह्मणीवचनंवाग्चजल्पितंगदितगिरेति गीर्भणितिर्गिरेति
त्रिकाण्डशेषश्च॥वाक्उच्यते वचपरिभाषणे क्विब्वचीति क्विप्॥वाणी वणशब्दे इञ्॥सरस्वती सरोऽस्त्यस्याः मतुप्॥व्याहारःव्याहरतेर्घञ्॥उक्तिः वचप

गुणेशुक्लादयःपुंसिगुणिलिंगास्तुतद्वति१७ इतिधीवर्गः ब्राह्मीतुभारतीभाषागीर्वाग्वाणीसरस्वती॥ व्याहारउक्तिर्लपितंभाषितं
वचनंवचः१ अपभ्रंशोऽपशब्दःस्याच्छास्त्रेशब्दस्तुवाचकः॥ तिङ् सुबंतचयोवाक्यं क्रियावाकारकान्विता २

पव्यक्तायांवाचि॥भाषितक्तान्तादिमौ॥वचनं वचेर्भावेल्युट् असुनि॥वच अयोरसानामानि वचनस्य तत्रसरस्वत्यनातिससाधिष्ठातृदेवताया केचित्तुब्रा- रिभाषणेक्तिन्॥लपितं ल
ह्म्याद्यास्त्रयोदशपर्यायाइत्याहु गौःरेफान्ता१ यःअपशब्दः अपभ्रष्टःशब्दःगावीगोणीत्यादिःस अपभ्रंशःस्यात् संस्कृतादपभ्रश्यति भ्रंशुअधःपतने प
चाद्यच् एकः॥शास्त्रेव्याकरणादौयोवाचक साधु सशब्दइतिव्यवह्रियते यथा घटोऽस्ति ओतप्रोततन्तूनावाचकःपटइतिच॥तिङ्सुबन्तचयः तिङन्तसुबन्तप
दसमूहोवाक्यं वक्तेर्ण्यत्वचो शब्देनिकुत्व तिङ तन्तयोयथा पश्यति भवति दृशिक्रियासत्तेति पचति भवति पाको भवतीत्यर्थे॥सुबन्तचयस्तु प्रकृतिसिद्धमि
देहिमहात्मनामित्यादि भवतीत्यव्याहारस्य भाष्यकृतोमते आवश्यकत्वाभावात् सःवाक्यं क्रियेत्यादिवाशब्दः समुच्चये यद्वा वाशब्द चेदित्यर्थे-

क्रियासेन् कारकान्विते स्यर्थः इदंशब्देंदुशेखरेऽस्ति कारकान्वितक्रियाबोधकं भोभिक्षो भिक्षामभिरक्षेत्यादि तिङ् सुपूच यात्मकमपि वाक्यमित्यर्थः २ श्रुतिः श्रू-
यते श्रुश्रवणे श्रूयते धर्मोऽनयेति वा कर्मणि करणे वा क्तिन् श्रुतिः श्रोत्रे च तत्कर्मण्याम्नायवार्तयोः स्त्रिया मितिरभसात् वेदः विदंत्यानेन धर्मं विद्ज्ञाने हलश्चे-
ति घञ् ।। आम्नायः आम्नायते अभ्यस्यते कर्मणि घञ् म्ना अभ्यासे आमनति उपदिशति धर्मो धर्मोविति वा शाब्दे तिणः सुक् ।। त्रयी चत्वारि वेदस्य अत्रलिं-
गसंकरे दोषाभावः स्त्रीति विशेषविधानात् त्रय्या व्याख्यायमानत्वाच्च तव्याख्या त्रयीत्यंतं चतुष्टयं वेदसामान्यस्य नाम ।। त्रयीशब्दो वेदसामान्ये त्रिवेद्यांव
र्तते च यथा द्विजशब्दो ब्राह्मणे त्रिवर्णे च समस्तपदे तु त्रय्या प्रोक्तो धर्मस्त्रयीधर्म इत्यादि विग्रहः ।। तद्विधिः तस्यास्त्रय्या विधिर्वैदिको विधिर्यज्ञादिः ध-

श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः ।। स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी ३ शिक्षेत्यादि श्रुतेरंगमोंकारप्रणवौ समौ ।। इति
हासः पुरावृत्त

र्मः स्यात् स्मृत्युक्तो विधिर्धर्म एव तदुक्तं विधानमृग्यजुः साम्नां त्रयी धर्मं विदुर्बुधा इति यच्चाह गौतमः श्रुतिस्मृतिविहितो धर्म इति त्रयीशा-
ब्ददर्शनपूर्वकवेदभेदानाह ऋक् अस्यां ऋच्यंते स्तूयंते देवाः अनया ऋच स्तुतौ संपदादिः स्त्रियां ।। साम तदुक्तं विश्वे सामक्लीबमुपायस्य भेदे वेदांतरेपि
चेति स्यति पापं ।। यजुः इज्यते अनेन अर्तीत्यसुन् इति त्रयो वेदास्त्रयी प्रोक्ता त्रयोऽवयवा यस्याः ३ श्रुतेः अंगं शिक्षेत्यादि अंग्यते ज्ञायतेऽनेन अगि गतौ
घञ् शिक्षाकल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः छंदोविचितिरित्येषः षडंगो वेद उच्यते तत्र कल्पः कल्पसूत्रं एकं ।। ओंकारः अवतेर्मन् तस्य टिलोपः ऊठ्
कारः ।। प्रणवः प्रणूयते स्तूयते णु स्तुतौ द्वे ।। इतिहासः इति हेति पारंपर्योपदेशोऽव्ययं तदास्तेऽस्मिन् आस उपवेशने अधिकरणे घञ् ।। पुरावृत्तं पुरावृत्तं आ-
ख्यानं प्रयंतात्पचाद्यच् पूर्वाचरितप्रतिपादकप्रबंधस्य महाभारतादेः द्वे ।।

धात्रः क्तेहि। वेदार्थस्मरणपूर्वकं रचितत्वात्स्मृतिरित्यर्थः स्मरते ऽ क्तिन् एकं॥ समाहृतिरुक्त संग्रहः स्यात् ग्रहवृद्दत्वाप् तदुक्तं प्राचीनैः विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्य
यो निबंधो यः समासेन संग्रहं तं विदुर्बुधाः द्वे संग्रहग्रंथस्य ६ या समासार्था सा समस्या स्यात् असः क्षेपणे ण्यत् संज्ञापूर्वको विधिरनित्य इति वृद्ध्यभावः समासः पूरणसा
कांक्षो ऽर्थो यस्याः कविशक्तिपरीक्षणार्थमपूर्णतयैव पठ्यमानेत्यर्थः यथा शतचंद्रं नभस्तलं तत्पूरणं यथा दामोदरकराघातविह्वलीकृतचेतसा दृष्टं चाणूरमल्लेने-
ति समस्या त्वसमासार्थेति पाठे तु अपरिपूर्णार्थेत्यर्थः॥ किंवदंती वदेर्झच् अंतआदेशः गौरादिः॥ जनश्रुतिः जनेभ्यः श्रूयते कर्मणि क्तिन् द्वे लोकप्रवादस्य॥ वार्ता वृत्तिर्लोकवृ
त्तिरस्त्यस्यां वृत्ते ऽर्शआदित्वादच् (?) आदिवृद्धिः टाप्॥ प्रवृत्तिः प्रवर्तते व्याप्नोति तदुक्तं हैमे प्रवृत्तिर्वृत्तवृत्तांतप्रवाहेषु प्रवर्तन इति॥ वृत्तांतः वृत्तोनुवर्तनीयो गवेषणीयो ऽंतः समाप्तिर्यस्य

समस्या तु समासार्था किंवदंती जनश्रुतिः॥ वार्ता प्रवृत्तिर्वृत्तांत उदंतः स्यादथाह्वयः ७ आख्याह्वे अभिधानं च नामधेयं च नाम च॥ हूतिराकारणा
ह्वानं संहूतिर्बहुभिः कृता ८ विवादो व्यवहारः स्यादुपन्यासस्तु वाङ्मुखं॥ वृत्तांतस्तु प्रकरणे कार्त्स्न्ये वार्ताप्रकारयोरिति हैमः॥ उदंतः उद्गतो ऽंतो यस्य उ

दंतः साधुवार्तयोरिति चत्वारि प्रमाण लोकवृत्तकथनस्य॥ आह्वयः आह्वयंति प्रसारणित्वात् उः नैर्यायते घनर्थेकः ७ आख्या आख्यानं एवं आह्वा उभयत्र आ
तश्चोपसर्गे इति अङ् अभिधानं अभिधीयते कर्मणि ल्युट् इत्याप्तूल्यं (?)॥ नामधेयं भागरूपेति धेयः॥ नाम नामन्निति साधुः षट् नाम्नः॥ हूतिः क्तिन्॥ आकारणा युच्॥ आ
ह्वानं ल्युट् त्रीणि आह्वानस्य॥ या बहुभिः कृताहूतिः सा संहूतिः उपसर्गबलात् एकं ८ विवादः विरुद्धो वादः॥ व्यवहारः विनानार्थे ऽवसंदेहे हरणं हार उच्यते
नानासंदेहहरणाद्व्यवहार इति स्मृत इति कात्यायनः द्वयं ऋणादिनिमित्तनानाविधवादस्य॥ उपन्यासः उपन्यसनं अस्यतेर्घञ्॥ वाङ्मुखं वाचो मुखमिव मुख
मुपक्रमः द्वे वचनोपक्रमस्य॥

उपोद्घातः उपसमीपेउद्धनन ज्ञापन॥उदाहारःउदाहरण उभयत्र भावेघञ् द्वेप्रकृतिसिद्ध्यर्थ चिंतनस्य तदुक्तं चिनाप्रकृतसिद्ध्यर्थामुपोद्घातंप्रचक्षतइति वक्ष्यमाणोपयोग्या
र्थनिर्णनिस्येत्यन्ये॥शपनं शपआक्रोशेल्युट् अथप्रसयेशपथः तदुक्तंद्वेमे शपथःकारआक्रोशेशपनेचसुतादिभिरितिद्वयं • प्रश्नःपृच्छतेनिनङ् शपदेश ॥अनुयोगःयु
जेर्भावेघञ्॥पृच्छा प्रच्छेर्धात्वर्थेकेसंप्रसारणटाप् त्रीणिप्रश्नस्य॥प्रतिवाक्य उत्तर अप् द्वेउत्तरस्य॥ मिथ्याभियोगःमिथ्यात्वासावभियोगश्च॥ अभ्याख्यान आप
ण् ख्यर्यःअभ्याशनमेधरयसीत्यादिमिथ्याविवादस्य द्वे॥मिथ्याभिशंसनं १० अभिशापः अभिशपन द्वेमिथ्यारोपस्यसुरापानादिविषयस्य घञ्॥अनुरागजः
शब्दः प्रणादः प्रणदन घञ् तदुक्तं शब्दार्णवे प्रणादस्तुपुमास्ताररावेत्वभयापयो अनुरागकृतेशब्देप्रणादःसीत्कृतंनृणामिति एकं॥यश अशोरसुन्प्रकृतेर्युं

उपोद्घातउदाहारःशापनशपथ पुमान् ९ प्रश्नोऽनुयोगःपृच्छाचप्रतिवाक्योत्तरेसमे॥मिथ्याभियोगोभ्याख्यानमथमिथ्याभिशंसन १०
अभिशापःप्रणादस्तुशब्दस्यादनुरागजः॥यशःकीर्तिःसमज्ञाचस्तवस्तोत्रस्तुतिर्नुतिः ११ आम्रेडितद्विस्त्रिरुक्तमुच्चैर्घुष्टतुघोषणा॥का
कुःस्त्रियांविकारोयःशोकभीत्यादिभिर्ध्वनेः १२

ट्॥कीर्तिःकीर्त्यनेकृतसशब्दनेऊतियूतीतिसाधु कीर्तिःप्रसादयशसोर्विस्तारेकर्दमेपिचेतिहेमः॥समज्ञा
समैःसर्वैर्ज्ञायतेज्ञा अवबोधने घञर्थेकः समज्येतिपाठेतु अजगतौ सज्ञापाक्यप् चीणिकीर्ते ॥स्तवःस्तूयतेनेन अप्॥स्तोत्र॥स्तुतिःष्टुस्तुतौ उभयत्रक्तिन्॥नु
ति चत्वारिस्तुतेः ११ द्विःद्विवार त्रिःत्रिवार चोक्तं आम्रेडितंस्यात् आम्रेड्यते आधिक्येनोच्यतेस्म म्रेड्उन्मादे यथासर्प सर्पइति एकं॥उच्चैर्घुष्टउच्चैर्घुष्यतेस्म क
र्मणिक्तः॥घोषणा घुषेण्यन्ताद्युच् द्वेउच्चैर्घोषस्य॥शोकभीत्यादिभि ध्वनेः योविकार साकाकुः कक्यते ककलौल्ये ओपतापयो बाहुलकादुण् आदिनाकामक्रो
धादेर्ग्रहः एकं १२

निर्वादः वदतेर्घञ् तदुक्तं रभसे निर्वादः स्या-
अवर्णो नर्ण्यते वर्णवर्णने घञ् वर्णः प्रशंसा तद्विरुद्धोऽवर्णः आक्षेपः आक्षेपो भर्त्सनाकृष्टिकार्यलंकृतिषु स्मृत इत्युक्तत्वात् ॥ निर्वादः वदतेर्घञ् तदुक्तं रभसे निर्वादः स्या-
लोकवादपरिनिष्ठितवादयोरिति परीवादः उपेतिदीर्घः परीवादोऽपवादेस्याद्वीणावादनवस्तुनोः परिवाद इत्यपि उपेतिदीर्घाभावे ॥ अपवादः अपवादस्तु निंदायामाज्ञा विश्वे
भयोरपि ॥ उपक्रोशः क्रुश आह्वाने घञ् ॥ जुगुप्सा गुपेर्निंदायां सन् ॥ कुत्सा कुत्स अवक्षेपणे ॥ निंदा तदुक्तं विश्वे निंदास्यादपवादेपि कुत्सायामपियोषितीति ॥ गर्हणं ग
ह्र्यन्ह कुत्साया द्यानिंदायाः अपवाद इतिनि वत्प्रत्ययेन अवर्णादीनामुपक्रोशस्य चैकलिंगत्व ज्ञापितं १३ पारुष्यं परुषो निष्ठुर भाषणं तस्य भावः पारुष्यं ष्यञ्स्त्रा
र्थे पारुष्य परुषत्वेन दुर्वाक्ये पुंसि गीष्पनाविति विश्वः ॥ अतिवादः अतिक्रम्य उक्तिरतिवादः घञ् हे अप्रियवचसः ॥ अपकारगीः अपकारार्थगीः रे चोरोऽसि त्वां घात-

अवर्णाक्षेपनिर्वादपरीवादापवादवत् ॥ उपक्रोशो जुगुप्सा च कुत्सा निंदा च गर्हणे १३ पारुष्यमतिवादः स्याद्भर्त्सनं त्वपकारगीः ॥ यः सनिंद उपा-
लंभस्तत्र स्यात्परिभाषणं १४ तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति ॥ स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः १५ यिष्यामीत्यादि तद्भर्त्सन

मुच्यते भर्त्सतर्जसंतर्जने ल्युट् एकं ॥ उपालंभो द्विधा गुणाविष्करणपूर्वको निंदापूर्वकश्च यः सनिंदः निंदयासहितः उपालंभः तत्र परिभाषणमित्येकं ॥ आद्यो यथा
महाकुलीनस्य तव किमुचितमिदं ॥ द्वितीयस्तु बंधकीसूनस्य तवोचितमेवेदमिति तत्रयो द्वितीयः स परिभाषणं भाव व्यक्तायां वाचि ल्युट् १४ मैथुनं प्रति परस्त्री
जार संयोगनिमित्ते नय आक्रोशस्तत्र आक्षारणेत्येकं क्षरते र्ण्यंतात् युच् क्लीबमपि आक्षारणं ल्युट् ॥ आभाषणं ल्युट् ॥ आलापः लपेर्घञ् ॥ अनुलपनं द्वे अ-
न्योन्य सवो धनपूर्वकभाषणस्य ॥ यत् अनर्थकं वचः स प्रलापः अत्रापि घञ् तदुक्तं हैमे विप्रलापो विरुद्धोक्तावनर्थकवचस्यपीति १५ ॥ ७३ ॥ ॥

यत्परस्परेण पराहतं मानामेयं वन्ध्येतिवत्पूर्वापरविरुद्धं तत्र संकुलं क्लिष्टं चेति नामद्वयं संकोलति कुलसंस्त्याने इगुपधेति कः संकुलं त्रिषु विस्पष्टवाचि व्यासे इत्युक्तत्वात् क्लिश्यते स्म क्लिशूविबाधने क्तः १९ यत् लुप्तवर्णपदं वचः तद्ग्रस्तं इत्येकं ग्रसु अदने लुप्तो वर्णः पदं वा यत्र वाक्ये पदे वा ग्रस्यते स्म ग्रस्तं ग्रसितं कृते पस्याल्लुप्तवर्णपदोदिते इत्यम॰॥ यत्त्वरितोदितं निरस्तं असु क्षेपणे क्तः एकं स्यात् त्वरितमुदितं निरस्यते स्म निरस्तः प्रेषितशरे संत्यक्ते त्वरितोदिते निष्ठ्यूते च प्रतिहते इति हैमः॥ सनिष्ठीवं लालायुक्तं तदम्बूकृतमुच्यते अम्बु इति च्व्यंतं सनिष्ठेवमपि घञि गुणः एकं श्लेष्मनिर्गमसहितवचसः॥ यदनर्थकं जरद्गवादिवाक्यं तदबद्धं स्यात् अर्थात् नञ् इति कप् अवध्यमपि तदुक्तं अवध्यमवधार्हे स्यादनर्थकवचस्यपीति २० अनक्षरं अवाच्यं स्यात् वचेण्यत् वचोऽशब्दे इति नकुत्वं न प्रशस्तानि अक्षराणि यस्मिन् द्वे वक्तुमनर्हस्य वचसः॥ मृषा

सत्येऽथ संकुलक्लिष्टे परस्परपराहते १९ लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदितं॥ अम्बूकृतं सनिष्ठीवमबद्धं स्यादनर्थकं २० अनक्षरमवाच्यं स्यादाहतं तु मृषार्थकं॥ अथ म्लिष्टमविस्पष्टं वितथं त्वनृतं वचः २१ सत्यं तथ्यमृतं सम्यक्

र्थकं मृषार्थो यस्य वन्ध्यासुतो यातीतिवत् आहतं स्यात् एकं आहन्यते स्म आहतं गुणिते चापि ताडिते च मृषार्थके॥ सोल्लुंठनं उल्लुंठनेन सहितं लुठि आलस्ये प्रतिघाते च॥ सोत्प्रासं उत्प्रासः उपहासः तत्सहितं द्वे सोपहासादिवचनस्य॥ भणितं भणतेः क्तः॥ रतिकूजितं रतौ कूजितं द्वे रतिसमये शब्दस्य इति सोल्लुंठनं तु सोत्प्रासं भणितं रतिकूजितं इति क्वचित्पठ्यते॥ म्लिष्टं म्लेछ्यते स्म म्लेच्छ अव्यक्ते शब्दे क्षुब्धस्वांतेति निपातितः तदुक्तं मेदिन्यां म्लिष्टं त्रिष्वव्यक्तवाचीति द्वे अव्यक्तवचनस्य॥ अविस्पष्टं न विस्पश्यते स्म स्पश बाधनस्पर्शनयोः क्तः॥ यदनृतं वचः न ऋतमित्युच्यते विगतं तथा-त्वं यस्मात् तद्वितथं एकं २१ सत्यं तदुक्तं रभसे सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वतीति॥ तथ्यं सत्ये साधु॥ ऋतं अर्यते स्म ऋगतौ क्तः॥ सम्यक् समंचति संगच्छते अंचु गतौ क्विन् सम्यक् समङ् पुंसि स्त्रियां समीची॥

वा॰ भेदास्तु त्रिषूत्तर इति वचनसृत्तिलेन सत्यादीनां त्रिलिंगत्वमुक्तं यथा सत्यः पुमान् सत्या स्त्री सत्यमपत्यं ॥ इदानीं वक्ष्यमाणेन एषां त्रिलिंगत्वमाह अमूनि नद्वृति स
त्यवन्ति त्रिषु यथा सत्या स्त्री सत्यः पुरुषः सत्यं वचः अत्र मिति ॥ शब्दः शब्दनशब्दशब्दकरणे घञ् ॥ निनादः णद अव्यक्ते शब्दे घञ् ॥ निनदः अप् ॥ ध्वनिः ध्वनशब्दे इः
॥ ध्वानः घञ् ॥ रवः रवण रु शब्दे अप् ॥ स्वन २२ स्वानः घञ् ॥ निर्घोषः घुषघुष्टौ ॥ निर्ह्रादः ह्राद अव्यक्ते शब्दे ॥ नादः ॥ निस्वान एते घञन्ता ॥ निस्वन ॥ आरवः ॥-
आरावः विभाषाडि रुप्लुवो ॥ संरावः ॥ विरावः समरशब्दमानस्य ॥ वस्त्रपर्णानां स्वनिते मर्मरः मृङ् प्राणत्यागे अरन् मुगागमश्च नडुक हैमे मर्मरो घस्त्र भेदश्च श॰

नमूनि त्रिषु तद्वृति ॥ शब्दे निनादनिनदध्वनिध्वानरवस्वनाः २२ स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः ॥ आरवारावसंरावविरावा अथ मर्मरः २३
स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितं ॥ निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि २४ वीणायाः क्वणिते नादे प्रक्वणप्रक्वणादयः ॥ को-
लाहलः कलकलस्तिरश्चां वाशितं रुतं ॥ स्त्री प्रतिश्रुत्प्रतिध्वाने गीतं गानमिमे समे २५ इति शब्दादिवर्गः ॥ क्वपर्णध्वनी तथा पुंसि स्त्रियां पुन मोर्म्मम

र्मरीपीतदारुण्योति २२ भूषणानां नूपुरादीनां स्वनिते शिञ्जितमित्येकं शिजि अव्यक्ते शब्दे क्तः ॥ निक्वाणः घञ् ॥ निक्वणः अप् ॥ क्वाणः ॥ क्वणः ॥ क्वणनं ल्युट् पंच वीणादिस्व
नितस्य २४ मादेरुपसर्गात् घे अक्वाण प्रक्वण इत्यादयः जे वीणाया एव क्वणिते नान्यत्र आदिग्रहणादुपक्वणादयः ॥ कोलाहलः कोलन कोलः एकीभावस्तमाहलं
ति हल विलेखने अच् कल शब्दे ॥ कलकलः कलादपि कलः हैव ड्वुरुत्तस्पष्ट शब्दस्य ॥ तिरश्चां रुतं वाशितं स्यात् तिरोऽञ्चतीति तिर्यञ्चः वाशृ शब्दे वाशितां
रिपो मार्येवाशितं भवति रुतं इत्यक्तत्वात् एकं प्रतिश्रुत् प्रतिप्रथमशब्दरूपा स्त्री रुत्य श्रूयते प्रतिश्रुत् ॥ प्रतिध्वानः द्वे प्रतिशब्दस्य ॥ गीतं ॥ गानं ल्युट् द्वे त
द्यथा गीते द्वे शब्द गानयोरिति हैम २५ इति शब्दा०व०

अथस्वरभेदानाह निषादः निषीदन्ति मनोयस्मिन् षद्लृविशरणगत्यवसादनेषु हलश्चेतिघञ् तदुक्तंविश्वे निषादःस्वरभेदेऽपिचंडालेधीवरांतरइति॥ऋषभः ऋषति-ऋषीगतौ अभच् ऋषभस्त्वौषधांतरे स्वरभिद्वृषयोः कर्णरंध्रकुंभारपुच्छयोरित्युक्तत्वात्॥गांधारः गंधारदेशोभवः तत्रभवः गांधारोरागसिंदूरस्वरेषुनीवृदंतरइतिमेदिनी॥षड्जः षड्भ्योजातः सयथा नासांकंठमुरस्तालुजिव्हांदंतांश्चसंस्पृशन् षड्जःसंजायतेयस्मात्तस्मात्षड्ज इतिस्मृतः॥मध्यमः मध्येभवःसयथा तद्वदेवोत्थितोवायुरुरःकंठसमाहतः नाभिमासोमहानादोमध्यस्थस्तेनमध्यमः॥धैवतः धीमतामयं तस्येदं मतुपोवकारःसंज्ञात्वात्॥पंचमः पंचानांपूरणःतदुक्तंमेदिन्यां पंचमोरागभेदःस्यात्स्वरभेदेच पंचमी पांडवानांचपत्न्यांरुच्येपंचानांपूरणेत्रिष्विति वायुःसमुद्गतोनाभेरुरोहृत्कंठमूर्धसु विचरन्पंचमस्थानप्राप्त्यापंचमउच्यतइति तज्जन्यत्वात्स्वरःपंचमइत्यर्थः

निषादर्षभगांधारषड्जमध्यमधैवताः॥ पंचमश्चेत्यमीसमतंत्रीकंठोत्थिताःस्वराः १ काकलीतुकलेसूक्ष्मे ध्वनौतुमधुरास्फुटे॥ कलोमंद्रस्तुगंभीरे

पूरणे डट्तस्यमट् इत्यमी सप्तस्वरास्तंत्रीतः कंठाच्चोच्चरंति वंशामुरजादयस्तु अनुकरणमात्रोपयोगिनइतिभावः नारदः षड्जंरौतिमयूरस्तुगावोनर्दंतिचर्षभं अजाविकौच गांधारं क्रौंचोनर्दतिमध्यमं १ पुष्पसाधारणेकालेकोकिलोरौतिपंचमं अश्वस्तु धैवतंरौतिनिषादंरौतिकुंजरइति २एकैकं॥सूक्ष्मेकलेकाकलीत्येकं स्त्रियां ईषत्कलः काकली ईषत्कलःइषदर्थेचेतिकोः कादेशः गौरादिः काकलिरपि अत्रपक्षेकलेरितिः कृदिकेतिङीषविकल्पःअतएवसाधुदितं काकली भिःकुलीना इत्यभिनंदप्रयोगःसंगच्छते॥मधुरास्फुटेध्वनौ॥कलःमधुरःश्रुतिसुखः सचासावस्फुटोऽव्यक्ताक्षरश्च तादृशेकलतं कलसंख्याने घमत्ययः कडइत्यनेन कडमदे डलयोरेकत्वस्मरणं तद्यथा कलास्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके षोडशांशेचचंद्रस्यकलानाकालमानयोःकलंशुक्रे त्रिषुजीर्णेचाव्यक्तमधुरध्वनौ एकं॥गंभीरे ध्वनौमंद्रःमंदतेमदिस्तुत्यादिषु स्फायितंचीतिरक्॥

अत्युच्चैर्ध्वनौ तारस्त्रिषु तारयतीति तारः पचाद्यच् अन्यान्छादयति पर्याय एकं॥ नयः कलमन्द्रतारस्त्रिषु २ परःसमन्वितलयः स एकतालः स्यात् सम्यगन्वितो नुगतो लयो नृत्यगी
तादिसाम्यं यत्र एकः समस्तालो मानमस्येत्येकतालः एकं॥ वीणा वेति विद्यामने स्वरेऽस्यां गरूमासास्नेत्यादिना साधुः॥ वल्लकी वल्लते वल्लुसंवरणे क्वुन् गौरादिङीष्॥ वि
पंची विपंचयति विस्तारयतीति पचि विस्तारे पचनात् गौरादिङीष् विपंची देखि वीणयोरित्युक्तत्वात् त्रयं वीणायां॥ सा तु वीणा तु सप्तभि तन्त्रीभिरुपलक्षिता परिवा
दिनी परिवादविस्तारात् सप्तजातौ इनिर्णिनिः २ यद्वीणादिकं वाद्यं वादनीयं ततमुच्यते तन्यते तत् भत्स्यस्य किलाभ्यलोपः आदिनासौरंभीरावणहस्तकिन्नर्यादिः एकं॥ य-
न्मुरजादिकं मृदंगादिकं तदानद्धं स्यात् आदिना पटहादि आनह्यते स्म मुखे चर्मणा बध्यते स्म णह बंधने कर्मणि क्तः॥ वंशादिकं वंशो वेणु आदिर्यस्य आदिशब्दात् शङ्खा-

तारोत्युच्चैस्त्रयस्त्रिषु २ समन्वितलयस्त्वेकतालो वीणा तु वल्लकी॥ विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी ३ ततं वीणादिकं वाद्यमानद्धं
मुरजादिकं॥ वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ४ चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकं॥

तत्सुषिरं स्यात् सुच्छिद्रमस्यास्ति ऊषसुषी
निरः नड्डुक्तमेदिन्यां सुषिरं वंशादिवाद्ये विवरेपि नपुंसकं सुषिरो नस्त्रियामग्नौ वन्हौ रन्ध्रान्विते त्रिषु पुं॥ सुषुसुषिरामितेति प्रयोगात् स्त्रीत्यादिनाप्यास्ते मालव्या-
न्धपीत्याहुः॥ कांस्यतालादि कांस्यमयस्तालः आदिना घण्टादि घनं स्यात् निबिडत्वात् हन्यते हन्तेर्हिंसागत्योः मूर्तौ घनः इत्यप् घन आदेशश्च देशाख्ये विस्तारे मुद्गरे तु देस
घे मुस्ते घन मध्यनृत्य वाद्यभेदयोरिति निर्दैयः ५ इदं ततादि चतुर्विधं वाद्यादि वादित्र वाद्यते ध्वन्यते आसमन्तात् तुद्यते तुरव्यथने आतोद्य नामयस्य ततं चैवावन
द्धं घन सुषिरमेव च चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितमिति भरतात् वादित्रेणिजन् आतोद्येण्यत् ॥

मृदंगाः मद्यंते मृदक्षोदे अंगच् मृदंगमस्येति मृदंगो घोषवाद्ययो रिति हैमः ॥ मुरजाः मुरादेष्टनाज्जाताः मुरं वेष्टनं जातमस्येति वा बहुलाद्बहुवचनं मुरसंवेष्टने पंचम्यामि
तिडः हे मृदंगस्य ॥ भेदास्त्रयः अंक्यः अंकेउत्संगेभवः भवार्थेयत् ॥ आलिंग्यः आलिंग्यते लिगिगतौ ण्यत् ॥ ऊर्ध्वकः ऊर्ध्वः कायति शब्दायते कैशब्दे सपीति योगविभा
गेन कः तदुक्तं हरीतक्याकृतिस्त्वंक्यो यवमध्यस्तथोर्ध्वकः आलिंग्यश्चैव गोपुच्छो मध्यदक्षिणवामगा इति ५ यशः पटहो ढक्का स्यात् यशोऽर्थः पटहः दगिति कायति कैशब्दे
सपीति कः आनक इति वा हे ढक्कायाः शाकपार्थिवादिः ॥ भेरी बिभेत्यस्याः रवात् रन्प्रत्यये गौरादिङीष् वंश्यादयश्चेति रिप्रत्यये भेरिरपि स्त्री ॥ दुंदुभिः दुंदु इति शब्देन भाति य
द्वा द्यां सुभाति शब्देन उभ पूरणे पृषोदरादिः पुमान् स्यात् हे दुंदुभेः भेर्यानकदुंदुभी त्यपि पाठः ॥ आनकः आनित्यनेनबादिनेन क्वुन् आनयति प्राणयति सोत्साहान् करो-

मृदंगा मुरजा भेदास्त्वंक्यालिंग्योर्ध्वकास्त्रयः ५ स्याद्यशः पटहो ढक्का भेरी स्त्री दुंदुभिः पुमान् ॥ आनकः पटहोऽस्त्री स्यात्कोणो वीणादिवादनं
६ वीणादंडः प्रवालः स्यात्ककुभस्तु प्रसेवकः ॥

तियोधान् पबुल् तदुक्तं विश्वे आनकः पटहे भेर्यां मृदंगे ध्वनदंबुदे इति ॥ पटहः पटेन हन्यते डः तदुक्तं मेदिन्यां
पटहो ना समारंभे आनके पुन्नपुंसकमिति अस्त्रीति पूर्वान्वयि हे ॥ वीणादि वाद्यते येन धनुराद्याकृतिना स कोणः स्यात् कुण्यते येन कुण शब्दोपकरणयोः हलश्चेति घ-
ञ् ॥ द्वयोस्तु कोणो वीणादेर्वादनं सारिकाच्च सेति शब्दार्णवः कोणो वाद्यप्रभेदे स्याद्वीणादीनांच वादने एकदेशे गृहादीनामस्त्रे च लगुडेपि चेति मेदिनी कोणो वीणादिवा
दने लगुडे स्तोलोहितांगे इति हैमश्च एकं ६ वीणायाः दंडः प्रवालः एकं प्रकर्षेण वल्यते वल संवरणे कर्मणि घञ् प्रवालो विद्रुमे वीणादंडे ऽभिनवपल्लवे इति हैमः ॥ ककुभः
कस्य कुभ्नाति भाति अंतर्भावितण्यर्थात् लः ॥ प्रसेवकः प्रसेव्यते षेट्सेवने क्वुन् ककुभो रोगभेदेपि वीणांके ऽर्जुनपादपे इत्यः० हे वीणादंडादधः स्थितस्य ल्दगांभीर्यार्थचर्म

कालक्रियामानं तालः स्यात् कालक्रिययोर्मानं नियमहेतुरित्यर्थः गीतवाद्यपादादिन्यासानां क्रियाकालयोः एकं ॥ साम्यं लयः स्यात् लीङ् श्लेषणे एरच् तालः करतलेंगुष्ठमध्य मायां च संमिते गीतकालक्रियामाने कस्फालेद्रुमांतरे वाद्यभांडे चेति मेदिनी ९ ताडवं तांडवं तृणशिल्पनाट्यभेदयोरिति हेममेदिन्यौ अस्त्रियां तांडवमित्यन्वयः तंडुना प्रोक्तं ते न प्रोक्तं इत्यण् ओर्गुणः ॥ नटनं नट अवस्कंदने ल्युट् ॥ नाट्यं छंदोगौइतिञ्यः नाट्यं तौर्यत्रिके लास्ये इत्युक्तत्वात् ॥ लास्यं लास्यं तौर्यत्रिकं मतं नृत्ये चेति विश्वः लस श्लेषणक्रीडनयोः ण्यत् ॥ नृत्यं च ऋदुपधाच्चेति भावे क्यप् ॥ नर्तनं षट् नृत्यस्य ॥ नृत्यगीतवाद्यानि तौर्यत्रयं मिलितानि तौर्यत्रिकमिति नाट्यामिति स्यात् तूर्यं मुरजादि तत्र भवं तौर्यं उपलक्षितं त्रिकमिति विग्रहः इदमेव नृत्यादित्रयं नाट्यमित्यर्थः नटस्येदं हे १० यः पुरुषः स्त्रीवेषधारी नर्तकः नृत्यति तस्मिन् ॥ भ्रकुंसः भ्रुकुंसः भ्रूकुंसः भ्रुवो भ्रुवा वा कुंसो भा

तालः कालक्रियामानं लयः साम्यमथास्त्रियां ९ तांडवं नटनं नाट्यं लास्यं नृत्यं च नर्तने ॥ तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयं १० भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः ॥ स्त्रीवेषधारी पुरुषो नाट्योक्तौ गणिकाज्जुका ११ भगिनीपतिरावुत्तो भावो विद्वानथावुकः

षणमस्याः भ्रुवा कुंसय तिवा त्रयं स्यात् पटपुटे तिदंडके पटिनात् पर्यंतादेरच् तदुक्तं शब्दार्णवे भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसवदिति इको ह्रस्व इति सूत्रे इयङ्वेति वार्तिकस्य व्याख्याद्वयात् साधुत्वं नाट्योक्तावित्यधिकारः प्रागंगहारात् ॥ या गणिका सा अज्जुका ज्ञेया अर्ज अर्जने बहुलं उकन् रस्य ज्जः एकं ११ भगिन्याः पतिः आवुत्त इत्युच्यते एकं आपत्तं आप्संपदादिः ततो तेर्डः ॥ यो विद्वान् स भाव इत्युच्यते भावयति परिभावयति तदुक्तं विश्वे भावः सत्तास्वभावाभिप्रायश्चेष्टात्मजन्मसु क्रियालीलापदार्थेषु बुधजंतुविभूतिषु इति एकं ॥ जनकस्तु आवुक इत्युच्यते अवति अव रक्षणे उकण् जनकः पितृभूपयोरित्युक्तत्वात् ॥

२ युवराजस्तु कुमारो भर्तृदारकः इत्यं कुमारस्य। न कुमार क्रीडायां अच् कुमारो धातुनामके युवराजे गिरीशोस्कन्दे शुके वरुणपादपे कुमारजाले कनके कुमारत्वपरानिति निर्देशः भर्तुराज्ञो दारकः पुल्लिङ्गे १२ राजा भट्टारकः भटति भटपरिभाषणे क्विप् भट्टनासौ तारकश्च पृषोदरादित्वात् दः भट्ट स्वामिनि सुस्थाने तदुक्तं हैमे भट्टारको नृपे नाट्ये वाच्ये देवतपो धनइति॥ देव दीव्यति अच् तदुक्तं हेमचन्द्रे देवस्तु पक्षे देवस्तु नृपतौ तोयदे स्वरे इत्यमरः॥ तत्सुता भर्तृदारिका तस्य सुता भर्तुराज्ञो दारिका एक॥ कृताभिषेकायां देव्यां तदुक्तं हेमचन्द्रे देवी कृताभिषेकायां तेजनी स्पृक्कयोरपीति। इतरासु राज्ञीषु भट्टिनी तदुक्तं रभसे भट्टिनी द्विजभार्यायां नाट्योक्ता एक॥

जनको युवराजस्तु कुमारो भर्तृदारकः १२ राजा भट्टारको देवस्तत्सुता भर्तृदारिका॥ देवी कृताभिषेकायामितरासु तु भट्टिनी १२ अब्रह्म-
पयमवध्योनेराज शालस्तु राष्ट्रियः॥ अम्बा माता ऽथ बालास्या

तस्याः जनयोषितीति एक अत्र विशेषः शब्दार्णवे गणिकानुचरे रज्जुके तनाम्ना नृपेण सा युवराजस्तु सर्वेण कुमारो भर्तृदारकः भट्टारको वा देवो वा वाच्यो भृत्यजनेन स ब्राह्मणेन तु नाम्नैव राजन्नित्यृषिभिः स च वयस्यराजन्निति वा विदूषक इमं वदेत् अभिषिक्ता तु राज्ञा सा देवीत्यन्यास्तु भोगिनी भट्टिनी त्वपरैरन्या नीचैर्गोस्वामिनीति सेति १२ अवध्योक्तौ अब्रह्मण्यः स्यात् अवध्यस्य वधानर्हस्य ब्राह्मणादे ब्रह्मणि साधु न च साधुरिति यत् ततो नञ् समासः एक॥ राजशालः राष्ट्रिय उच्यते राष्ट्रेऽधिकृतः राष्ट्रावारेति घ एक॥ अंबा अम्यते शब्द्यते अवि शब्दे कर्मणि घञ्-
भूयेम्बेति अप्सरो वा नाट्योक्ता वित्यधिकारस्य प्रायिकत्वाद्वादीनां केषांचिदन्यत्रापि प्रयोग॥ माता द्वे॥ बाला वासूरिति द्वे कुमार्यां वास्यते स्वगृहे पञ्चुलकाप्यता॥

आर्यः अर्तुंयोग्यः ऋगतो पयन् कर्तव्यमाचरन्कामभकर्तव्यमनाचरन् तिष्ठतिप्रकृताचारेरातु आर्यइतिस्मृतः इतिवसिष्ठः ॥ मर्षणा सहनान्मारिषः हिंसानिवारक-
त्वा द्वा रिषहिंसायां इगुपेतिकः माशब्देनसमासः मारिषःशाकभिद्यार्येनाट्योक्तौपुंसि भाषितइतिमूर्धन्यांतेरभसः मार्षश्च नतुक्तं आर्येमारिषमार्षकाविनिशब्दार्ण
वात्सु द्वे आर्यस्य १४ याज्येष्ठाभगिनीसा अत्तिका अत्ता मातासेवअंतिका संज्ञायां कन् अत्तिकाचांतिका नथेतिद्विरूपकोशाद्बृतिकापि अंतिकंनिकटेवाच्यलिंगं स्त्री-
शोभनौषधे तुल्यांज्येष्ठ भगिन्यांच नाट्योक्त्यांकीर्त्यतेंतिकेति रभसः एकं ॥ निष्ठानियतंस्थानं निष्ठा आतश्चोपेत्यङ् उपसेतिषः ॥ निर्वहणं वहेर्ल्युट् अनादेश्येणत्वं
नियतंस्थानमितिभाव विवरणं निष्ठोत्कर्षव्यवस्थयोरिस्त्रु० निबर्हणंतु निष्ठास्त्रीसंहारश्चसमापन इति शब्दार्णवः समे इतिसमानार्थे नतुसमानलिंगे शब्दार्णवे-

वासूरार्यस्तुमारिषः १४ अत्तिका भगिनीज्येष्ठा निष्ठानिर्वहणेसमे ॥ हंडेहंजेहलाह्वानेनीचांचेटींसखींप्रति १५ अंगहारोंगविक्षेपोव्यंजकाभिन
यौसमौ ॥ निर्वृत्तेत्वंगसत्वाभ्यांद्वेत्रिष्वांगिकसात्विके १६

लिंगभेददर्शनात् द्वे ॥ मुखप्रतिमुखगर्भावर्शनिबर्हणाख्याः पंचनाटकेसंधयः तत्रपंचमस्यसंधेः
प्रस्तुतकथासमाप्तेरित्यन्ये नीचांप्रत्याह्वाने हंडे ॥ चेटीं प्रति हंजे ॥ सखींप्रति हला त्रीण्यप्यव्ययानि हिंडते हिडिगत्यनादरयोः बहुलंएप्रत्ययः इतोकारः हडे इत्यत्र डस्यजो
पि हलशब्दश्चबंतोपि सखीपर्यायः बाला वासूः सखी हलेति स्त्रीकांडे वोपालितात् हलविलेखने बाहुलकादाप्रत्ययः १५ अंगस्यस्थानात्स्थानांतरंनयनं अगहारः हरतेर्घञ्
अंगुल्यादिविन्यासः अंगविक्षेपः अंगानांक्षिपप्रेरणे घञ् द्वे नृत्यविशेषस्य ॥ व्यंजकः व्यनक्ति अंजूव्यक्त्यादौ ण्वुल् ॥ अभिनयः पचाद्यच् द्वे हस्तादिभिर्मनोगतार्थप्रकाशनस्य
॥ अंगसत्वाभ्यां भ्रूविक्षेपादिमनोरत्यादिरचनाभ्यांनिर्वृत्ते निष्पन्ने आंगिकसात्विकसंज्ञकेस्तः निर्वृत्तेक्षद्यूतादिभ्य इतिठक् यथाह स्तंभः स्वेदोथरोमांचः स्वरभंगोथवेपथुःवै
वर्ण्यमश्रुप्रलयइत्यष्टौसात्विकागुणाः इमेद्वे अपित्रिषु १६

शृंगारादयो ऽष्टौरसाः नाटकेपिनावनएव नेचयथा शृगारः शृगप्राधान्यंरयर्तिकर्मण्यण् तदुक्तंहैमे शृगारोगजमडणे स्करतेरसभेदेच शृगारभागसमवेइति ॥ वीरः॥ करुण ॥अद्भुतः॥हास्यः॥ भयानकः॥ बीभत्सः॥रौद्रः एवेअष्टरसाः रस्यंते रसआस्वादने चुरादेरदंतात्कर्मणिघञ् तदुक्तंविश्वे रसोगधरसेजलेशृगारादौविषेवीर्येतिक्ष्मा रौद्रवरागयोरिति चकारान्शांतोपिनवमः॥वात्सल्यंदशमः ॥शृगारः शुचिः शोच्यतेऽनेन उत्तमयुवप्रकृतिकस्तेनजुगुप्सारहितत्वात् तदुक्तंहेमचंद्रे शुचि शाद्वे सिते ऽजवे ग्रीष्माषाढाश्रुपहतेधूपधाश्रुद्धमंत्रिणि शृगारेचेति॥उज्वलः उज्वलति प्रकाशने अच् तत्रुणः नभाद्युपसर्गादिस्सनुश्चेः तदुक्तंहैमे उज्वलस्तुविकासिनि शृगारेविशदेदीप्तेपीति त्रीणिशृगारस्य १७ उत्साहवर्धन उत्साहेनवर्धते रघुवंशे उत्साहवर्धयतीतिवा नंद्यादि ॥ वीरः वीरयति शूरवीरविक्रांतौ सह्यविशेषे

शृगारवीरकरुणाद्भुतहास्यभयानकाः ॥बीभत्सरौद्रौचरसाः शृगारः शुचिरुज्वलः ।१७ उत्साहवर्धनोवीरः कारुण्यकरुणाघृणा॥ कृपा दयानुकंपास्यादनुक्रोशोप्यथोहसः॥१८

णइर्ति ईरयतिवा ईरगतौ कोऽत्वा वीरोज्जिनेभटेश्रेष्ठे वीरश्शमशानतेपिचेत्यकत्वात् द्वे वीररसस्य॥ कारुण्य करुणः तस्य भावः ब्राह्मणादित्वात्ष्यञ् ॥करुणा करोतेरुनन् तदुक्तंहैमे करुणात्रुकृपायास्यात्करुणोरसवृक्षयो रिति॥ घृणा घियतेनया घृसेचने नक्वक्रुवं तदुक्तंहैमे घृणातुस्याज्जुगुप्सायाकरुणायामिति॥ कृपा कृपण कृपकृपाया भिदादौकृपेः सप्रेतिसाधुः कृपोद्रोण श्यालकः स्याद्द्रोणपत्न्याकृपी स्मृतेति॥द या दयते रक्षत्यनया दयदानगतिहिंसारक्षणेषु भिदादि अनुकंपागुरोश्चेत्यङ्परः अनुकंपन कपिकिंचिच्चलने॥अनुक्रोशः अनुक्रोशत्यनेन क्रुश आ- ह्वाने रोदनेच हलइतिघञ् सप्तकरुणस्य॥हसः हसन हसेहसने स्वनहसोर्वेत्यप् १८

हासः घञ् तदुक्तं शब्दार्णवे तत्रहासो हसो हास्यं घर्घरं हासिका स्त्रियामिति ॥ हास्यं त्रयं हासस्य ॥ बीभत्सं बीभत्सास्त्यत्र मत्वर्थेच् बीभत्सो नार्जुने क्रूरे घृणात्म वि-
कृते त्रिष्वित्युक्तत्वात् ॥ विकृतं विकरणं कृतं जुगुप्सामभवत्वात् विकृतं त्रिषु बीभत्से रोगिते संस्कृते पिचेति विश्वः वैकृतोपि तदुक्तं शब्दार्णवे विकृतो वैकृतोप्याग्रहायण्य-
मग्रहायणमिति द्वे बीभत्सस्य इदं द्वयं रसे पुंसि तद्वति त्रिषु ॥ विस्मयः विस्मयनं ष्मिङ् ईषद्धसने एरच् तदुक्तं हैमे विस्मयोद्भुतदर्पयोरिति ॥ अद्भुतं आश्चर्यार्थेव्ययं
अत् तस्य भवनं आदिभुवोडुतच् ॥ आश्चर्यं आङ् निचर्यते अभिनीयते आश्चर्यमनित्येइति साधु ॥ चित्रं चित्रयति चित्रचित्रकरणे पचादिः चत्वारि अद्भुतस्य ॥ भैरवं भी-
रोरिदं तस्येदमित्यण् दूर्वायां भैरवः पुंसि शंकरे भीषणे त्रिष्वित्युक्तत्वात् १९ दारुणं दारयति चित्तं दृ भये उनन् ॥ भीषणं भीषयते ल्युः ॥ भीष्मं बिभेत्यस्मात् भीष्मो रुद्रे च

**हासो हास्यं च बीभत्सं विकृतं त्रिष्विदं द्वयं ॥ विस्मयोद्भुतमाश्चर्यं चित्रमप्यथ भैरवं १९ दारुणं भीषणं भीष्मं घोरं भीमं भयानकं ॥ भयंकरं प्रतिभयं रौद्रं तूग्रममी त्रिषु २० चतुर्दश दरस्त्रासो**

गांगेये राक्षसे च भयंकर इति हैमः ॥ घोरं घोरयति घुर भीमार्थशब्दयोः ॥ भीमं तदुक्तं हैमे भीमो वृकोदरे घोरे शंक-
रेप्यम्लवेतसे इति भीइतो मक् षुगभावः ॥ भयानकं बिभेत्यस्मात् भियः आनक् तदुक्तं भयानकः स्मृतो व्याघ्रे रसे राहौ भयंकरे ॥ भयंकरं भयं करोति मेघ इति खच् ॥ प्रतिभ-
यं प्रतिगतं भयमस्मिन् प्रतिभयं भये भीष्मे इति हैमः ॥ नव भयानकस्य ॥ रौद्रं रुद्रस्येदं अण् रौद्रो भीष्मे रसे तीव्रे रौद्री गौर्यामिति हैमः ॥ उग्रं उच समवाये रन् द्वे रौद्रस्य ॥
अमी अद्भुताद्याश्चतुर्दश शब्दा रसे पुंसि शृंगारवीरेत्यादिश्लोके पुंस्त्वदर्शनात् अभिन्नलिंगानामेव द्वंद्वप्रतिज्ञानात् तद्वति तु त्रिषु वाच्यलिंगाः २० रसानुक्त्वा तदनुगु-
णत्वेनोच्चावचान् भावानभिधत्ते दरः दीर्यत्यस्मात् दृ भये अप् दरः स्याद्भयगर्तयोरित्युक्तत्वात् ॥ त्रासः त्रसी उद्वेगे घञ् तदुक्तं हैमे त्रासो भये मणौ दोषे इति ॥ ॥

भीतिः भिभीभये क्तिन् ॥ भीः ॥ साध्वस साधूनस्यति पचादित्वात् सामर्थ्याद्वेरप एतेनेरमयुक्तं अण भसगात् इत्युक्तिः परास्तापाउ रेय्यान् ॥ भयं भिभेत्यस्मादिति तत्रेस्य स्याद् नेनपुंसी यानगर्हाचाय भयं भियोनिशस्त्रार्णव बाहुलकादडि भियाइतिसाधु षट् भयस्य ॥ मनसः विकार मानसउच्यते भावयति करोति रसानिति णिच्चोऽच् एकं ॥ यः भा वबोधकः चित्तविकारप्रकाशकः कटाक्षादिः सः अनुभावउच्यते अनुभावयतीति भावयत् साधु तदुक्तं हैमे भावोऽभिप्रायवस्तुनोरिति अनुभावः प्रभावेस्यान्निश्चये भावसूचनइति विश्वः एकं २१ गर्वः गर्वमाने घञ् ॥ अभिमानः अभिसर्वतोमान अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोरित्युक्तत्वात् ॥ अहंकारः अहमितिकरणं दी पि गर्वस्य ॥ चित्तसमुन्नतिः मानः स्यात् मनन मनु अवबोधने घञ् चित्तस्य समुन्नति परस्मादुत्कर्षचिन्तने नौन्नत्य मानः तदुक्तं हैमे मानप्रमाणे प्रस्थादौ मानश्चित्तो

*भीतिर्भीः साध्वसंभयं ॥ विकारो मानसो भावोऽनुभावो भावबोधकः २१ गर्वोऽभिमानोऽहंकारो मानश्चित्तसमुन्नतिः ॥ अनादरः परिभवः परी भावस्तिरस्क्रिया २२ रीढावमाननावज्ञाऽवहेलनमसूर्क्षणं ॥ मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः २३*

न्नतौ ग्रहइति एकं गर्वादय ।

पिपर्यायाइतित्युक्तं ॥ अनादरः न आदर ॥ परिभव अप् पक्षे घञ् ॥ परीभाव उपसेति बहुलदीर्घ ॥ तिरस्क्रिया तिरस्करणं २२ रीढा रेढृ परिहवघेकः अवमानना मनेर्ण्यन्तात् अवमाननं ॥ अवज्ञा ज्ञानश्रोपेत्यङ् अवज्ञानं ॥ अवहेलन हेड् अनादरे घञ् ॥ असूर्क्षण सूर्क्षोनञ्पूर्वो न अनादरस्य ॥ मन्दाक्ष मन्दम् क्षगागापच ॥ ह्रीः ह्रीलज्जायां संपदादि क्विप् त्रपते षित्वादङ् ॥ त्रपा तदुक्तं हैमे त्रपा लज्जा कुलटयोरिति ॥ व्रीडा व्रीड लज्जायां अकारप्रत्ययः ॥ लज्जा घञि व्रीडोपि गङ्गु षगर्ज्ये पजनामरहार लज्जा लज्जा सदा रमस नर्तक गर्ध भृगा व्रीडादयश्च वरत्व वराटक अउत्कटवाण करकास्ससामपास्येति स्त्रीपुंल्लिंग कथने र भसः सालज्जा अन्यतः परस्माच्चेत् अपत्रपा अपत्रपा अडनः एकं २३

प्रेम प्रयण प्रीञ् तर्पणे मनिन् प्रमनान क्लीब॥ स्नेह स्नेहन ष्णिह प्रीतौ घञ् स्नेहः प्रेम्णि घृतादिक इत्यनेकार्थत्वात् पयस्नेहस्य॥ दोहद दोहमभिलाषं ददाति अप मिच्छा मानवान्त्यपि विशेषेण गर्भिणीच्छाया प्रयुज्यते नन दोहद रोगगर्भलक्षणे अभिलाषेन यागर्भे इति हेमः॥ इच्छा इषेः शोनिपातः॥ कांक्षा कांक्षेः अकारः॥ स्पृहा॥ ईहा ईह चेष्टाया अकारः॥ तृट्॥ वाञ्छा॥ लिप्सा लभे सन् अकार मनोरथः मनसोरथ इव २७ काम कामनं कमु कान्तौ कामः स्मरेच्छयोः पुमान् रेतस्यपि नि कामेन कामेपि स्यान्नपुंसकमित्यकेऽकन्॥ अभिलाषः लषन लष कान्तौ घञ्॥ तर्षः॥ दोहदादित षोनां निद्यदस्य स्पृहायाः॥ सतर्षः महाप्मेपसा लसा लल ईसायां स्त्रैणादि रसण् द्वयो स्त्रीपुंसयोः उपाधिः॥ धर्मचिंता धर्मस्य चिंता उपाधिः पुंसि द्वे धर्मचिंतनस्य॥ आधिः आधीयते दुःखमनेन डुधाञ् उपसर्गे किः॥ मानसी व्यथा मनसि भवा आधिः

प्रेमस्नेहो॰पदोहद॥ इच्छाकांक्षास्पृहेहातृड्वाञ्छालिप्सामनोरथः २७ कामो॰भिलाषस्तर्षश्च सोत्यर्थं लालसा द्वयो ॥उपाधिर्ना धर्मचिं-
ता पुंस्याधिर्मानसी व्यथा २८ स्याच्चिंतास्मृतिराध्यानमुत्कंठोत्कलिके समे॥ उत्साहो॰ध्यवसाय स्यात्सवीर्यमतिशक्तिभाक् २९ पुंसि द्वे मनःपीडा

याः २८ चिंता चिंतन अकारः चितिस्मृत्या चुच् वाधनार्थ चिति पूजीति अड्वा चिंता तु स्मृतिराध्यान स्मरणासस्पृहे पुनः उत्कंठोत्कलिके तस्मिन्नभि आतृ भयोरपीति शब्दार्णवः॥ स्मृतिः स्मरण स्मृ आध्याने तदुक्तं हैमे स्मृतिः स्मरण धीछास्त्र शास्त्रेइति॥ आध्यान ध्यै चिंतायां ल्युट् त्रीणि स्मरणस्य उत्कंठा कंठ शोके अकारः॥ उत्कलिका कलेर्वुन् द्वे उत्कंठायाः॥ उत्साह उत्सहन षह मर्षणे घञ्॥ अध्यवसायः अध्यवसान स्यतेर्घञ् युग् द्वे उत्साहस्य॥ येन कृत्वा असाध्यसाधने उद्यतो भवति स उत्साहो॰ तिशक्तिभाक् सातिशक्तिश्चे द्वीर्यमुच्यते वीरेसाधुः अतिशयशक्तिवीर्या इति त्रमरमालायां स्त्रील एकं २९

के विभ्रमः भ्रमु अनवस्थाने घञ् चित्तस्यानवस्थानं शृंगाराद्विभ्रमोयम विभ्रमो रत्नदृश्योपि भवान्तेपि पुमानयमिति कोशाच्च ॥ ललितं सकलांगसमीचीनविन्यासो ललितं स्मृतं अनाचार्योपदिष्टस्यात् ललितं रतिचेष्टितमिति कोशाच्च ललवईप्साया लडविलासे भावेक्त ड्लयोरैक्यं ३१ हेला तत्रापीत्थं स्याद्भावसूचको हावो हेला स्यैवाङ्गभावनमाटेघास्फरते हेलेनिशा ॥ लीला प्रियस्यानुकृतिर्लीला श्लिष्टावाम्यचेष्टिते लीलाकेलिर्विलासश्च शृंगारभावजक्रियाद्दनिशाब्दाभकारार्थाद्न्योपितेया अर्म स्त्रीणां शृंगारभावजा शृंगाररससम्भूता क्रियाश्चेष्टा परमी हावाःस्युः एकैकअन्येपितेयाद्दस्युक्तं तेचयथा लीला विलासो विच्छित्तिर्विभ्रमः किलकिंचितं मोट्टायितं कुट्टमितं बिब्बोको ललितं तथा विहृतं चेति मन्तव्या दश स्त्रीणां स्वभावजा इति नाटकरत्नकोश विच्छित्तिः छिदिर्द्वैधीकरणे मण्डनाभावरन्यासो विच्छित्ती रूपदर्पण ॥ किलकिंचित

विभ्रमो ललितं तथा ३१ हेला लीलेत्यमी हावाः क्रिया शृंगारभावजाः ॥ द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च ३२ व्याजोऽपदेशो लक्ष्यं च

हर्षाद्रुदितगीतादिस्यामिश्रं किलकिंचितं ॥ मोट्टायितं स्मरादिस्मरतिक्ष्यइक्त मोट्टायितमिय स्मृता सागभगविज्रृम्भण ॥ कुट्टमितं कुट्ट छेदने घञ् रमप्त्रु स्वोपचारः-सौस्व्येपि हर्षात्कुट्टमितं मतं ॥ विकृतं वक्तव्य माषणेव्याजोहित्त्वनदर्शितेगितं ॥ द्रवः द्रु गतौ अप् द्रवो विद्रवमर्मणोरित्युक्तत्वात् ॥ केलिः केल्लन क्रिडाक्रीडायां केलृ चलने वाइन् केलिः पुंसि स्त्रियांलिङ्गानां ह्यभावात् ॥ परीहासः परिहासः घञ् दीर्घ ॥ क्रीडा क्रीडनं क्रीड् विहारे गुरोश्चेत्यप्रत्ययः क्रीडा केलि प्रकारे स्यात्खेला ज्ञानकयो रपीत्युक्तं ॥ लीला लीलेत्यत्र खेलेति केचित् खेलृ चलने अकार ॥ नर्म नृ नयेसनिन् पदृक्रीडायाः ३२ व्याजः घञ् वीभावोन ॥ अपदेशः अपदेशान दिशातिसर्जने घञ् ॥ र स्य लक्ष्यते लक्ष आलोचने ण्यत् लक्ष्यं स्यादपदेशेपि शरव्येपि नपुंसकमित्युक्तं व्याख्यायाननालक्षसक्लीबव्याजशरव्ययोरितिमूर्धन्यान्तेषु मत्स्य ॥ अभीप्सितार्थ-सिद्ध्यर्थमन्यानराद्युष्ठानव्याज इत्यर्थ त्रीण्यपि स्वरूपाच्छादनस्य ॥

क्रीडा ॥ खेला अकारः ॥ कूर्दनं त्रयं बाललीलायाः ॥ घर्मः जिघर्त्यंगमनेन घृक्षरणदीप्त्योः निपातः ॥ निदाघः निदह्यतेऽनेन घञ् ॥ स्वेदः घञ् स्विद्यत्यनेनांगं नदुक्तं हैमे स्वेदो घर्मस्वेदनेनेति त्रयं स्वेदस्य ॥ प्रलयः एरच् प्रलयो मृत्युकल्पांतमूर्च्छापायेषु पुंस्ययमित्युक्त० ॥ नष्टचेष्टता नष्टा चेष्टा यस्य तस्य भावः तस्य भावस्त्वतलौ द्वे परिस्पंदनाशस्य ३३ अवहित्था अबहिःस्थितिः स्थ इति योगविभागात्क· पृषोदरादिः ॥ आकारगुप्तिः आकारस्य शोकादिजनितमुखम्लान्यादेर्गोपनं गुपेः क्तिन् द्वौ समौ ॥ संवेगः ओविजे घञ् ॥ संभ्रमः भ्रमु चलने घञ् संभ्रमः साध्वसेपि स्यात्संवेगादरयोरपीत्युक्तत्वात् द्वे हर्षादिना कर्मस्खलनस्य ॥ सोत्प्रासः उत्प्रासनं असक्षेपणे घञ् उत्प्रासेनाधिक्येन क्षेपणेन वा सहितः आच्छुरितकमुच्यते आच्छुरणं परच्छेदनं छुरछेदने भावेक्तः स्वार्थेकः स्यादाच्छुरितकं हासं नखशाघातभेदयोरित्यु० एक परस्परामर्षजनकहासस्य सः हासः मनाक्

क्रीडा खेला च कूर्दनं ॥ घर्मो निदाघः स्वेदः स्यात्प्रलयो नष्टचेष्टता ३३ अवहित्थाकारगुप्तिः समौ संवेगसंभ्रमौ ॥ स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक्स्मितं ३४ मध्यमः स्याद्विहसितं रोमाञ्चो रोमहर्षणं ॥ क्रंदितं रुदितं क्रुष्टं जृंभस्तु त्रिषु जृंभणं ३५ विप्रलंभो विसंवादो

ईषच्चे स्मितं स्यात् ष्मिङ् ईषद्धसने क्तो भावे ईषद्विकसितैर्दंतैः कटाक्षैः सौष्ठवान्वितं अलक्षितद्विजद्वारं उत्तमानां स्मितं भवेत् ३४ सः हासः मध्यमश्चेदनल्पाधिकस्तर्हि विहसितं स्यात् हसहसने भावेक्तः प्रस्तावोऽस्य सानुरागमाहुर्विहसितं बुधा इति कोशांतरात् एकं ॥ रोमांचः रोम्णामंचनं पूजनं घञ् अचेः पूजायामिति रट् विधानात् वार्तिकमतेन कुत्वं ॥ रोमहर्षणं रोम्णां हर्षणं पुलककंठकरोमक्रिया रोमोद्गमाश्चाप्येव द्वे रोमोद्गमस्य ॥ क्रंदितं क्रदि रोदने क्तः ॥ रुदितं रुदिर् अश्रुविमोचने क्तः ॥ क्रुष्टं क्रुश रोदने क्तः ॥ त्रीणि रोदनस्य ॥ जृंभः घञ् ॥ जृंभणं भावे ल्युट् द्वे जृंभिकायाः जांभई इति ख्यातायाः न त्रजृंभस्त्रिषु ३५ विप्रलंभः विशेषेण प्रलंभनं डुलभष् प्राप्तौ घञ् ॥ विसंवादः विरुद्धं सम्यग्वदनं घञ् द्वे वंचनायुक्तभाषणस्य अंगीकृतासंपादनस्येति वा ॥

रिगण रिंगिगतौ भावेल्युट् रिखणमपि ॥ स्खलनं स्खलसंचलने ल्युट् द्वे स्वधर्मादेर्भ्रंशनस्य बालानां हजपादगमनस्येत्यन्ये ॥ निद्रा निद्राण गुकुत्सायां गतौ प्रातश्चो
पेत्यङ् ॥ शयनं शीङ् स्वप्ने भावेल्युट् शयने स्तरने निद्राशयर्योर्भ्वन उसत्कमित्यः ॥ स्वापः ञिष्वप् शये घञ् स्वाप शयननिद्रयो रित्यः ॥ स्वप्न स्वपोनन् तदुक्तं कोशान्तरे
स्वप्न स्वापेप्यसुप्तस्य विज्ञाने दर्शने पुमानिति ॥ संवेशः संवेशनं विशामवेशने घञ् पंचनिद्रायाः ३६ तन्द्री स्पृहिगृहिभ्रमतन्द्रीतिनिपातितान्करोतिण्यतादस्वरः तन्द्रीर्नन्द्रिस्त्र द्वेति
द्विरूपकोशः ॥ प्रमीला प्रमीलनं प्रमीलसिचरत्यकारः प्रमीलनं मीलनिमेषणे द्वे अस्यन्तश्रमादिना सर्वेन्द्रियासामर्थ्यस्य ॥ भ्रुकुटि कुटकौटिल्ये इन्प्रत्ययः ॥ भ्रुकुटि भ्रुवोः कु
टि ॥ भ्रूकुटि पृषोदरादित्वा द्रस्वः भृकुटीत्यपि त्रयः क्रोधादिजनितभ्रूवक्रतायाः भ्रकुंसश्च रूपद्वयमाद्युक्तं ॥ अदृष्टिः अक्षिणासरोषेनदृष्टिः अदृष्टिरित्येक द्वि

रिंगणं स्खलनं समे ॥ स्यान्निद्राशयनं स्वापः स्वप्नः संवेश इत्यपि ३६ तन्द्री प्रमीला भ्रकुंसःभ्रुकुटिर्भ्रूकुटिः स्त्रियां ॥ अदृष्टिः स्यादसौम्येक्षिण्यास
सिद्धिः प्रकृती त्विमे ३७ स्वरूपंच स्वभावश्च निसर्गश्चाथ वेपथुः ॥ कंपोऽथ क्षण उद्धर्षो मह उद्धव उत्सवः ३८ इति नाट्यवर्ग

सौम्ये असुन्दरेना क्रूरदृष्टिरित्यर्थः ॥ संसिद्धिः संसेधन षिधुसंराधौ ॥ प्रकृतिः इमे इति द्वयोः स्त्रीत्वबोधनार्थमुक्त उभाभ्यांक्तिन् ३७ स्वरूपं स्वरूपयति ॥ स्वभाव स्व
स्यैव भावः निसर्गः भावे घञ् पंचस्वभावस्य ॥ वेपथु टुवेपृकंपने ट्वितोथुच् ॥ कंपः द्वे कंपस्य ॥ क्षणः क्षणोति दुःखं क्षणुहिंसायां पचाद्यच् तदुक्तं हैमे क्षण कालविशेषे स्यात्पर्वण्य
वसरे महे व्यापारविकलत्वे परतन्त्रत्व मध्ययो रिति ॥ उद्धर्षः उद्धर्षयति हृषु अलीके पर्यंतादच् उद्धतो हर्षोत्रेति वा ॥ महः महन मह पूजायां पुंसि संज्ञायामिति घः यद्वा महति अच्
तदुक्तं कोशान्तरे महो नद्यांतरे भूमौ मह उत्सवतेजसोरिति ॥ उद्धवः उद्धुनोति दुःखं धूञ्कंपने पचाद्यच् तदुक्तं कोशान्तरे उद्धवो यादवाभिदि महे नैक्रतुपावके ॥ उत्सवः उत्सवति
पूञ्प्रेरणे अच् उत्सवो महउत्सेके इच्छाप्रसरकोपयोरित्युक्तत्वात् महोत्सवे षट् ३८ इति नाट्यवर्गः ॥

शि॰ विस्तृतार्थानन्तश्च

अधोभुवनं अधश्चतद्भुवनं च अधोपि अधोऽव्ययं स्यात्पाताले इति त्रिकांडशेषात् ॥ पातालं पतंत्यत्र पापात् पतिचंडिभ्यामालञ् पातालं वडवानले रसातले चेति हैमः ॥ बलिस
द्म बलेः सद्म ॥ रसातलं रसायास्तलं ॥ नागलोकः नागानां लोकः पंच पातालस्य ॥ कुहरं कुं हरति हरतेरनुद्यमनेऽच् यद्वा कुह विस्मापने कुहं राति रादाने आतइति कः तदुक्तं को
शांतरे कुहरं गह्वरे छिद्रे क्लीबं नागांतरे पुमानिति ॥ सुषिरं शोषणं शुषशोषणे ऊषसुषि मुष्केति रः सुषिरं वंशादिवाद्ये विवरेपि नपुंसकमित्युक्तत्वात् ॥ विवरं विवृणोति वृ-
ञ्वरणे अच् यद्वा विन्नियतं विगतो विरोस्माद्वा वीनां पक्षिणां वरं वा विवरं दूषणे गर्ते इत्युक्तत्वात् ॥ बिलं बिलति भिनत्ति बिल भेदने बिल्यते वा इगुपधेति कः घञर्थे इति वा
तदुक्तं कोशांतरे बिलं छिद्रे गुहायां च पुमानुच्चैःश्रवोहये इत्यु० ॥ छिद्रं छिद्यते छिद्र भेदने घञ् ॥ यद्वा छिद्यते छिदिर् द्वैधीकरणे रक् ॥ निर्व्यथनं ॥ रोकं रोचतेऽत्र रुच दी

अधोभुवनपातालबलिसद्मरसातलं ॥ नागलोकोऽथ कुहरं सुषिरं विवरं बिलं १ छिद्रं निर्व्यथनं रोकं रंध्रं श्वभ्रं वपा शुषिः ॥ गर्तावटौ भुवि श्वभ्रे सरंध्रे सुषिरं त्रिषु २ अंधकारोऽस्त्रियां ध्वांतं

प्तौ हलश्चेति घञ् ॥ रंध्रं रंधयति रंध हिंसासंराध्योः बाहुलकात् रक् नुमपि रंध्रं नु भूषणे छिद्रे इति विश्वमे
दिन्यौ ॥ श्वभ्रं श्वभ्रयति श्वभ्र गतौ पर्यंतादच् शोभनमभ्रं स्योमात्रवा नालव्यादि ॥ वपा उप्यतेऽत्र भिदाद्यङ् ॥ शुषिः शुष्यत्यत्र शुषशोषणे किः सुषिरपि सुषिः सुष्टु
स्यति बहुलं किः एकादश छिद्रमात्रस्य ॥ भुवि गर्तावटौ द्वौ शब्दौ समौ वर्त्तते गिरति गॄ निगरणे हसिमृ इति तन् स्त्रियां टाप् तदुक्तं हैमे गर्तावटे कुकुंदर इति गर्तेत्यपि श
कट शर गर्त शृंगा इति स्त्रीपुंसप्रकरणे रभसात् अवत्यस्मात् अवरक्षणादौ शकादिभ्योऽटन् अवटिरितीदंतोपि द्वे श्वभ्रे रंध्रस्य सुषिरमित्येकं सरंध्रे रंध्रयुक्ते वस्तुनि
शुषिरमपि तत्त्रिषुवाच्यलिंगं २ अंधकारः अंधं करोति अंधदृष्ट्युपघाते घञ् रुजः कर्मण्यण् अंधकारः क्लीबपुंसोः ॥ ध्वांतं ध्वन्यते ध्वन शब्दे क्षुब्धस्वांतेति नि-
पातः ॥

तमिस्त्रं तमोस्त्यत्र ज्योत्स्नेति निपातः तमिस्त्राख्या अथवा तेनास्येति वा मत्वर्थे च् क्षेपे तमिस्त्रं तिमिरे कोपे स्त्री तु तमस्वती कृष्णपक्षनिशायां चेति विश्वमेदिन्यौ ॥ ति-
मिर तिम्यति तिम् आर्द्रीभावे किरच् ॥ तम ताम्यत्यनेन तमु ग्लानौ असुन् तमसमपि तदुक्तं त्रिकाण्डशेषे तमसं तु निशाचर्मे इति प्रथमाचारस्य ॥ गाढे ध्वानेऽन्धतमसि अ-
न्धमित्येक अंधं च तत्तमश्च अवसमन्धेभ्यस्तमसः ॥ क्षीणे ध्वान्ते अवतमसमित्येक अवक्षीणं तम अवात्यत्र् एकं २ विष्वक् तम सर्वत्र व्यापि तमः संतमसं स्यात् समवान्धात् सम-
न्तात्तम ॥ नागा नगे भवा तत्र भव इत्यण् इत्याद्युक्तं तदुक्तं हैमे नागस्त्रेसौ सपत्ने स्त्रीवधेकरणान्तरेति ॥ काद्रवेया कद्र्वा अपत्यानि स्त्रीभ्यो ढक् ३ नागानां ॥ तदीश्व-
रः तेषामीशाः ॥ शेष शिष्यते शिष्लृ विशेषणे कर्मणि घञ् तदुक्तं हैमे शेषोऽनन्ते वधे सीरिण्युपयुक्तेतरेपि च शेषो निर्माल्यदानेस्यादिति ॥ अनन्त न अन्तोऽस्य अन

तमिस्रं तिमिरं तमः ॥ ध्वान्ते गाढेऽन्धतमसं क्षीणेऽवतमसं तमः २ विष्वक्संतमसं नागाः काद्रवेयास्तदीश्वराः ॥ शेषोऽनन्तो वासुकिस्तु सर्पराजोऽथ
गोनसे ४ तिलित्स स्यादजगरे शयुर्वाहस इत्युभौ ॥ न्तः केशवे शेषे पुमान्निरवधौ त्रिष्विति रूप अनन्तस्य ॥ वासुकि वसु रत्नं के मूर्ध्नि यस्य वसुकः अपत्यं वा
केशब्दे आनइति कः वसुक तस्यापत्यं अत इञ् ॥ सर्पराजा सर्पाणां राजा ३ नागराजस्य ॥ गोनस गौरिव नासिका यस्य अत् नासिकेत्यत्र् नसादेशः गोनासो गोन
सावितित्रिकाण्डशेषः गोनसी मडली वोड इति तु विक्रमादित्य ४ तिलित्स तेलति तिलगतौ तिल्रति तिल्स्नेहने सपत्ति तिलमेति इण् गतौ क्विप् तुक् अयेयोन कर्मणि
क इत्याद्युक्तं हैमे घोणस इति प्रसिद्धः ॥ अजगर गिरति गॄ निगरणे अच् अजस्य गर अजोनित्यो गरो विषयस्येति वा ॥ शयु शेते शीङ् स्वप्ने मृगय्वादित्वात्कुः ॥ वाहसः वहति
वह प्रापणे वहियुभ्यां णित् इत्यसच् वाहसः स्यादजगरे सुनिषण्णनिषण्णयोरिति हैमः इति भय अजगरस्य भारइतिख्यात ॥

प्र

अलगर्दः लगति लगेसंगे क्विप् अर्दयति अर्दगतौ अच् लग्चासावर्दश्च तद्भिन्नो अलगर्दः लक्चासावर्दश्च लग्नः सन् पीडक इत्यर्थः निर्विषत्वात्तद्भिन्नो ऽलगर्द इत्या
घूर्त्यं अलगर्ध इत्यपि॥जलव्यालः जले स्थो व्यालः द्वे जलसर्पस्य पाणसर्प विरोळे इत्यादिम०॥राजिलः राजिः रेखास्यास्ति सिध्मादिभ्यश्चेति लच् यद्वा राजिं लाति लादाने
आतइति कः तदुक्तं कोशांतरे निर्मुक्तो निर्विषः सर्पो राजिलः परिकीर्तितइति राजीलइत्यपि॥डुंडुभः डुडु इत्यनुकरणशब्दः तं भणति तेन भीतो तिवा अन्येभ्योपि इति डः प-
क्षेकः तवर्गतृतीयादिरपि द्वे निर्विषस्याद्विमुखसर्पस्य माल्दुंड दुतोंडें इति ख्यातस्य ५ मालुधानः मालुरोषधी तत्र धानमस्य मालुधानश्चित्रसर्पे महापद्येच दृश्यत इ-
त्युत्पलिनी तदुक्तंच विश्वे मालुधानो मातुलाहौ मालुधानी लतांतर इति॥मातुलाहिः मांतुलयति मूलविभुजादिः मातुलश्चासावहिश्च द्वे खड्गाकारचित्रसर्पस्य आ-

अलगर्दो जलव्यालः समौ राजिलडुंडुभौ ५ मालुधानो मातुलाहिर्निर्मुक्तो मुक्तकंचुकः॥ सर्पः पृदाकुर्भुजगो भुजंगो ऽहिर्भुजंगमः ६ आशीवि-
षो विषधर

घेलें दिवड इति ख्यातस्य ॥निर्मुक्तः निर्गतः मुक्तो यस्य॥मुक्तकंचुकः द्वे त्यक्तकंचुकस्य मुक्तः कंचुको येन तदुक्तं कोशांतरे निर्मुक्तस्त्यक्तसंगे स्यान्मुक्तकंचुकभो
गिनीति॥सर्पः सर्पति सृप्लृगतौ अच् ॥पृदाकुः पर्दते पर्दकुत्सिते शब्दे काकुः सम्प्रसारणं अल्लोपश्च पृदाकुर्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमानिति उक्तत्वात् ॥भुजगः
भुजः सन्गच्छति भुजेन कौटिल्येन गच्छतिवा डः तदुक्तं हैमे भुजंगः सर्पखिंगयोरिति खचित्पुम्॥अहिः आहंति आङि हेतेः इन् डित् तदुक्तं कोशांतरे अहिर्वृत्रासुरे
सर्पे पुंसीति॥भुजंगमः खच्चडिद्वाच्यः ६ आशीविषः आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति तत्र विषमस्य पृषोदरादिः आशीविषोपि केचित्त्वीकारांतमाशी
शब्दमाहुः आशी मिव कलाभिदोरिति राजशेखरः॥ विषधरः विषस्य धरः अजंतेन समासः॥

चक्री चक्रमस्यास्तीति ॥ तदुक्तं हैमे चक्री कोके कुलाले ऽहौ वैकुंठे चक्रवर्तिनीति ॥ व्याल ॥ व्याडइति अडउद्यमे व्याङ् पूर्व डलयोरेकत्वस्मरणात् व्यालोऽपि व्यालो दुष्टगजे सर्पे श्वलेश्वापदसिंहयोरिति विश्वमेदिन्यौ ॥ सरीसृप ॥ कुटिलं सर्पति नित्यं कौटिल्ये इतियङ् अच् ॥ कुंडली कुंडलं कुंडलाकारतास्यास्ति मत्वर्थे इनि ॥ [illegible] कर्णमूला पोणशोऽपि वलये ऽपि नेत्स्क्रत्वात् ॥ गूढपात् गूढापादा अस्य पृषोदरादिः यद्वा गूढपदयति पदगतौ ण्यन्तात् क्विप् ॥ चक्षुःश्रवा ॥ चक्षुः श्रवः कर्णोऽस्य ॥ काकोदर ॥ काक-

स्येवोदरमस्य ॥ फणी फणा ॥ स्यास्ति व्रीह्यादिः ७ दर्वीकरः दर्व्याकरः फणएवास्य भक्षार कत्वात् दर्वीफणं करोतीतिवा ॥ दीर्घपृष्ठ दीर्घं पृष्ठमस्य ॥ दन्दशूक गर्हि ति लुपसदेति यङ् यजजपदशांमिति ऊकः तदुक्तं कोशांतरे दन्दशूकस्तु पुंल्लिंगो राक्षसे च सरीसृपइति ॥ बिलेशय ॥ बिले शेते अधिकरणे शेतेरित्यच् श

ो व्यालसरीसृप ॥ कुंडली गूढपाच्चक्षुःश्रवा काकोदरः फणी ७ दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशय ॥ उरगः पन्नगो भोगी जिह्मगः पवना-

८ " लेलिहानो द्विरसनो गोकर्णः कंचुकी तथा ॥ कुंभीनसः फणधरो हरिर्भोगधरस्तथा १ अहेः शरीर भोगः स्यादाशीरप्यहिदंष्ट्रिका "

र सेतिर ,तदुक्तं हैमे बिलेशयो मूषके ऽहौ इति ॥ उरग ॥ उरसा गच्छति उरसो लोपश्चेति साधु ॥ पन्नग ॥ पन्नं पतितं यथा तथा गच्छति सर्वत्र पन्नपोरिति डः तदुक्तं कोशांतरे प

[illegible]नना शिरसि ॥ भोगी भोगः शरीरं चक्रमतिर्वा ऽस्यास्ति इनिः भोगी भुजंगमेऽपि स्याद्ग्रामपान्ये नृपे पुमानित्युः ॥ जिह्मग ॥ जिह्मं कुटिलं गच्छति डः तदुक्तं-

इति ॥ पवनाशन ॥ पवनो ऽशनमस्य पंचविंशतिः पवनाशनस्य ८ " लेलिहान ॥ लिह आस्वादने यङ् लुङ् शानच् ॥ द्विरसन गोकर्ण कंचुकी कुं-

भोगधरः इत्यापदो सर्पमात्रस्य अहेः शरीर भोगः स्यात् आशीरपि अहिदंष्ट्रिका स्यात् इति साधपदस्य क्षेपकत्वान्न व्याख्यानं ॥ "

म

यहिषास्थ्यादि अहिभवंतत् आहेयं त्रिषुस्यात् अहेर्भवं कुलकुक्षिइति अहेर्ढञ् आदिना कंचुकादिग्रहणं स्त्रियां आहेयी टिड्ढेति ङीप् ॥ स्फटायांतु द्वयोः स्त्रीपुंसयोः फ णास्यात् स्फुटति स्फुटविकसने अच् पृषोदरादिः फणति फणगतौ अच् द्वयोरित्यनेन स्फटापि संबध्यते इति गुरुचरणाः फटापि कंचुकनिर्मोकौ समौ कंचुकश्च निर्मोकश्च कंच्यते कचिदीप्तिबंधनयोः बाहुलकादुकन् कंचुकोवारबाणे स्यात् निर्मोक कवचेपिच वर्धापकगृहीतांगस्थितवस्त्रेच चोलके कंचुक्यौषधिभेदेचेति विश्वप्रदीप्यौ निश्च येन मुच्यत इति कर्मणि घञ् द्वेसर्पत्वचः निर्मोकः मोचने व्योम्निसन्नाहे सर्प कंचुक इत्यपि ॥ क्ष्वेडः क्ष्वेडते मोहयति अच् द्विवर्णलनेनवा त्रिक्ष्विदा स्नेहनमोचनयोः हल श्चेति घञ् पृषोदरादिः क्ष्वेडा वंशशलाकायां सिंहनादेच योलोहितार्कपर्णफलेघोषपुष्पेनपुंसकं दुरासदेच कुटिलेवाच्यलिंगः प्रकीर्तितइत्यक्तत्वात् ॥ गरलं गरंलाति ला-

त्रिष्वाहेयंविषास्थ्यादिस्फटायांतुफणाद्वयोः॥ समौकंचुकनिर्मोकौक्ष्वेडस्तुगरलंविषं ९ पुंसिक्लीबेचकाकोलकालकूटहलाहलाः॥ सौराष्ट्रिकःशौक्लिकेयोब्रह्मपुत्रःप्रदीपनः १० दारदोवत्सनाभश्च

दाने आतइतिकः तदुक्तं हैमे गरलं पन्नगविषे तृणे फलक मानयोरिति ॥ विषं वेवेष्टिकायं विष्ल व्याप्तौ इगुपधेतिकः पुल्लिंगमपि पुंसिक्लीबेचेति विषेणापि संबध्यते केरपि इत्युक्तत्वात् त्रयं विषमात्रस्य ॥ काकोलः ईषत्कोलति कलसंस्त्याने अच् ईषदर्थेइतिकोः कादेशः लंविषब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितइति याज्ञवल्क्येनोक्तं ॥ कालकूटः कालमपिकूटयति कूटपरिदाहे पर्यंतात्कर्मण्यण् कालस्यकर्णगात्मृत्योवा कूटोराशिरिति वा ॥ हलाहलः हल इव आहलति अच् ॥ सौराष्ट्रिकः सुराष्ट्रे भवइतिठञ् ॥ शौक्लिकेयः शुक्लिदेशेभवः 1 नदीनिस्त्रेयोगविभागात्ढक् ॥ ब्रह्मपुत्रः ब्रह्मणः पुत्रः ॥ प्रदीपनः प्रदीपयति जठरमिति १० दारदः दरददेशेभवः अण् दारदो विषभेदे स्यात्पारदे हिंगुलेपुमानित्युक्तः ॥ वत्सनाभः वत्सान्नभ्नाति णभ हिंसायां कर्म ण्यण् वत्सस्यनाभिरिव नाभिरस्येतिवा ॥

अमीकारमेसप्यानवस्थावरविषभेदाः नवकाकोलादित्रयक्लीबपुंसो ॥वत्सनाभ वत्सनागइतिलोकेप्रसिद्धः काकोल काकमेचकः कालकूट पृथुपालिदैत्यरक्ताद्भवः हलाहलस्तालपत्राकृतिः हलाहलहालहलहलाहलमित्यपिनत्पर्यायाः नदुक्तवहिरूपकोशे हलाहलस्थलहलवदत्यपिहलाहलमिति गोनासगोनसौहालाहलहालहल विषमिति त्रिकाण्डशेषः ॥विषवैद्य विद्यामधीते वेत्तिवा तदधीते तद्वेदइत्यण् विषस्य वैद्य ॥ जांगुलिक जांगुली विषविद्या अधीते वेद वा वसनादिभ्यइतिठक् जांगुल्यादिव्यनीतिवा परीक्षितसमश्लोयाज्जांगुली त्रिभिषग्धतदरुक्॰ हेविषहारवैद्यस्य॥व्यालग्राही व्यालगृह्णाति सर्पैरिति णिनि ॥अहितुण्डिक अहेस्तुण्डमुखनेनदीव्यतीतिठक् व्यालग्राहोऽहितुण्डिकरत्यमरमाला हेसर्पग्राहिणःगारुडीइतिप्र॰ ११ इतिपातालभोगिवर्गः नारक॥नरक नरति नृणातिवा नृनयेष्ठ आदि

विषभेदाअमीनव॥विषवैद्योजांगुलिकोव्यालग्राह्यहितुण्डिक ११ इतिपातालभोगिवर्ग स्यान्नारकस्तुनरकोनिरयोदुर्गति स्त्रिया॥त
द्भेदास्तपनावीचीमहारौरवरौरवा १सहारःकालसूत्रंच भ्यःसंज्ञायामितिवुन् नरकःपुंसिनिरयदेवारानि प्रभेदयोरितिविश्वगेदिन्यो प्रज्ञाद्यणिनारक
॥निरयः निर्गतो अयात्॥दुर्गति दुःस्थगतिः नत्वारिनरकस्य॥तस्यनरकस्य भेदानाह तपनः तपति तद्यादि॥अवीचि नविद्यतेवीचि सुखमत्र तपनोरथ्कारैपिस्याद्भास्करेनिरयान्तरे वीचि स्वल्पतरगेस्याद्वकाशेकरवेपिचेति विश्व अवी चित्तुतरगेस्यान्नरकेपिनिगद्यतइति हैम॥महारौरव महतोरुरारय रुरुर्नामप्राणिविशेषस्तस्येदमित्यण्॥रौरव रौरवेनरकेघोरे इति हैम १ सहार सम्यक्हापेन ह्यार हरणं सघानरत्यपिपाठ तत्रेत्यम् सम्यक्पानोऽत्र॥कालसूत्र कालान्पयोमयानिसूत्राण्यत्र॥ ५५॥ ५ ५ ५ ५ ५

इत्याद्याः नरकभेदाः आद्यशब्देन तामिस्रांधतामिस्रासिपत्रवनादयः जलवड्वासमानोऽयश्मपृष्ठरूपत्वान्मतोऽत्वयो यत्र सोऽवीचिरित्यर्थः ॥ नारकाः नरके भवाः तत्र भ-
वइत्यण् ॥ सत्त्वाः इण्गतौ गत्यर्थेक्तः ॥ प्रेता प्रेतो भूतांतरे पुंसि मृते स्याद्वाच्यलिंगक इत्यजकलात् एकं प्रेतानां सिंधुः नदी वैतरणी ज्ञेया विगतस्तरणिर्यत्र तत्र भवा विगता
तरणिर्नौर्यत्र वा वितरणे तदानेन लंघ्यते इति वा शेषे इत्यण् प्रेतानदी वैतरणी स्मृतेति त्रिकांडशेषः एकं ॥ नारकस्य लक्ष्मीः अशोभा निर्ऋतिः स्यात् एकं निर्गता ऋति
घृणा यस्याः तदुक्तं रभसे ऋतिर्गतौ घृणायां च स्पर्द्धायां च शकुनेपि चेति ऋतिः सौत्रः इक्कृष्यादिभ्यः कृणायां तेलौके इति कोसुद्यां निर्ऋतिः स्यादलक्ष्म्यां स्त्री दिशां
पालांतरे पुमानित्यक० २ विष्टिः विशति कुशं विशप्रवेशने विशप्रवेशने क्तिन् यद्वा विष्णाति विषविप्रयोगे तदुक्तं हैमे विष्टिः कर्मकरे मूल्ये भद्राज्रूप्रेरणेषु चेति ॥ आजूः

त्याद्याः सत्त्वास्तु नारकाः ॥ प्रेता वैतरणी सिंधुः स्यादलक्ष्मीस्तु निर्ऋतिः २ विष्टिराजूः कारणा तु यातना तीव्रवेदना ॥ पीडा बाधा व्यथा दुःखमाम
नस्यं प्रसूतिजं ३

आजवति जुगतौ क्विप् वचीत्यादिना साधुः आ अज्यते नेति गुरूच्चरणाः तदुक्तं शाश्वते आजूर्वेतनयोर्विष्टिः कर्मकृत्कर्मणोरपीति द्वे नरके हठा-
त्क्षेपस्य भद्राख्यकरणस्येत्यन्ये ॥ कारणा कृञ् हिंसायां पर्यंताद्युच् कारणं करणे हेतु बंधयोश्च नपुंसकमित्यक० ॥ यातना यत निकारादौ पर्यंताद्युच् ॥ तीव्रवेदना -
तीव्रा चासौ वेदना च विद वेदनादौ पर्यंताल् युच् त्रीणि नरकदुःखस्य ॥ पीडा पीड अवगाहने पर्यंताः अच् तदुक्तं हैमे पीडा निर्मर्दनोत्तंसकृपासु सरलद्रुम इति ॥ बाधा
बाधृ विलोडने गुरोश्च इत्यः बाधा दुःखे निषेधे च ॥ हेमः आ बाधेभि वा छेदः तत्र भावा धा वेदना दुःखमिति हलायुधः ॥ व्यथा दुःखं दुर्निर्दितं खनति इ. इत्याद्युल् ॥
आमनस्यं अमनसो भाव इति ष्यञ् मानस्याङ्गिरा गितिना प्रसूतिज पमानस्य कृच्छ्रक एकलाकुल मिति वाचस्पतिः आमनस्यमपि ॥ प्रसूतिजं प्रसूते र्जातं ३ ॥

कष्ट कषति कषहिंसायां क्तः कष्टं तु गहने कृच्छ्रे इत्युक्तम्॥ कृच्छ्रं कृन्तति कृती छेदने रक् कृतेश्छ ॥ आभीलं आसमन्ताद्विभेत्यस्मादिति आनइतिकः आभीलं भीषणे कृच्छ्रे
निर्देश्यः न वदुःखस्य अनन्तवापि दुःखस्येत्सेके पीडादिचतुष्कं मनःपीडायाः आ मनस्यादिद्वयं वै मनस्यस्य कष्टादित्रयं शरीरपीडाया इति भेदः एतेषां मध्ये यदु
खादिकं भेद्यगामि विशेष्यघ्नमिति तन्निषु यथा सेयं सेवा दुःखा च बहुरूपा सोयं दुःखं स कृतो गुण सर्वदुःखं विवेकिन इति भेद्यगामित्वाभावेन दुक्तलिंगमेव इति नर
कवर्गः॥ समुद्रः समुन्दति उन्दी क्लेदने रक् नलोप सर्मीचीना उद्रा जलचरविशेषा यस्मिन्निति वा सह मुद्रया मर्यादया वर्तत इति वा वोपसर्जनस्येति सहस्य सः॥ अ
ब्धिः आपो धीयन्तेऽत्र कर्मण्यधिकरणे चेति किः ॥ अकूपारः कुः पृथिवी पिपर्ति पृ पालनपूरणयोः कर्मण्यण् अन्येषामपीति कुशब्दस्य दीर्घः नञ्समासः इत्याद्युक्तं॥ प

स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत् इति नरकवर्गः समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः॥ उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्ण-
वः॥ रत्नाकरो जलनिधिर्यादःपतिरपाम्पतिः॥ पारावारः परमावृणोति वृञ् वरणे अण् पारापारावस्य स्त इति वा मत्वर्थेऽण् तदुक्तं कोशान्तरे पारावारः पयोधौ
पारावारं तटद्वयं इत्युक्तत्वात् पारापार इत्यपि पारं अपारमस्य सरित्पतिः सरितां पतिः ॥ उदन्वान् उदकानि सन्त्यत्र उदन्वानुदधौ चेति साधुः॥ उदधिः उदकानि धीयन्ते
ऽत्र॥ सिन्धुः स्यन्दन्ते आपोऽत्र स्यन्दू प्रस्रवणे स्यदे सम्प्रसारणं च धश्चेत्युः सिन्धुर्वमथु देशाब्धिनदे ना सरिति स्त्रियामिति विश्वमेदिन्यौ॥ सरस्वान् सरांसि नीराणि सन्त्यस्य
स्मिन् तसौ मत्वर्थे सरो नीरे तडागे मनेनि रूढः सरस्वानू कनदे वार्द्धौ नान्यवत्प्रसिद्धे स्त्रियामित्युक्तत्वात् ॥ सागरः सगरस्य राज्ञोऽयं तस्येदं॥ अर्णवः अर्णांसि सन्त्यत्र सतिः अ
र्णसो लोपश्चेति॥ रत्नाकरः रत्नानामाकरः ॥ जलनिधिः जलानि निधीयन्तेऽत्र कर्मण्यधिकरणे चेति किः जलानां निधिरिति वा॥ यादःपतिः यादसां जलजन्तूनां पतिः॥ अपांपतिः
पञ्चदश समुद्रनामानि॥

तस्यसमुद्रस्यप्रभेदाः क्षीरोदः क्षीरमुदकंयस्य उत्तरपदस्येत्युदादेशः॥ एवं लवणोदः तथाऽपरेस्युःतेच इक्षुरसोदः सुरोदः घृतोदः दधिमंडोदः स्वादूदः समुद्रविशेषाणां पृथक्पृथग्येकैकं २ आपः आप्नुवंति आप्यंतेवा आप्लृव्याप्तौ आप्नोतेर्ह्रस्वश्चेति क्विप् ह्रस्वत्वंच स्त्रियांबहुत्वेनित्यं॥ वाः॥ वारिवारयति वृञोण्यंतात् क्विप् इञ्जिवारि॥ सलिलं सलति सलगतौ इलच् सरिलमपि रलयोरेकत्वात् तत्रसरिलंसलिरंसलिलमितिवाचस्पतिः॥ कमलं काम्यते कमुकांतौ वृषादित्वात्कलच् कमलाश्रीजलंपयः कमलं कमलोमृगइतिधरणिः कमलंक्लोम्निभेषजे पंकजेसलिलेताम्रे कमलस्तुमृगांतरे कमलाश्रीवरस्त्रियो रितिहेमचंद्रः॥ जलं जलति जल अपवारणे अच्॥ पयः पयते-पीयतेवा पयगतौ पीङ्पानेवा असुन् पयःक्षीरेचनीरेचेति॥ कीलालं कीलां ज्वालामलति वारयति अलभूषणादौ कर्मण्यण् भौर्वाग्नेःकीलांलातिवा तदुक्तंहैमे कीलालंरु-

तस्यप्रभेदाःक्षीरोदलवणोदस्तथापरे २ आपःस्त्रीभूम्निवार्वारिसलिलंकमलंजलं॥ पयःकीलालममृतंजीवनंभुवनंवनं ३ कबंधमुद-कंपाथः

धिरेतोयेइति॥ अमृतं नमृतंमरणमस्त्यस्मिन् प्राणस्यापोमयत्वात् अमृतं यज्ञशेषेस्यात्पीयूषेसलिलेघृते अयाचितेचमोक्षेचनाधन्वंतरिदेवयोः अमृता मागधीपथ्यागुडूच्यामलकीषुचेति॥ जीवनं जीव्यतेऽनेन जीवप्राणधारणे ल्युट्करणे जीवनं वर्तनेनीरप्राणधारणयोरपीत्युक्त०॥ भुवनं भूयते भूसत्तायां क्युन् भवंत्युत्पद्यंतेऽनेन ल्युट्संज्ञात्वान्नगुणः तदुक्तंकोशांतरे भुवनंविष्टपेपिस्यात्सलिलेगगनेजलइति॥ वनं वन्यते संभज्यतेवा वनसंभक्तौ घञ् संज्ञात्वान्नवृद्धिः वनं प्रस्रवणे-गेहेप्रवासेंभसिकानने इतिहैमः॥ कबंधं कंसुखंबध्नाति बंधबंधने कर्मण्यण् कबंधोऽस्त्री क्रियायुक्तमपमूर्धकलेवरं क्लीबं जलेपुंस्युदरे राहुरक्षोविशेषयोरि०॥ केचित्तु कमंधमपिपठंति॥ उदकं उनत्ति उंदीक्लेदने उदकमितिसाधुः दकमित्यपि तदुक्तंहलायुधे मोक्षं प्राणैर्भुवनममृतं जीवनीयंदकंचेति कंदंकंजलमितित्रिकांडशेषः अ-स्मिन्पक्षे कबंधंचदकंपाथइतिपाठः॥ पाथः पाति पारक्षणे उदकेथुट्चेत्यसुन् थुट्॥

फ़ो पुष्कर पुष्णाति पुषपुष्टौ पुषः करन् पुष्करपुष्करेभ्योऽभिपद्य करिकराग्रयोः पुष्करतूर्यवक्त्रेच पद्मे खड्गफले पिञ्जे च ॥ सर्वतोमुख सर्वतोमुखान्यत्र सर्वदिग्गमना
त् तदुक्तं कोशान्तरे सर्वतोमुख उग्रेच क्षेत्रज्ञब्रह्मणो पुमान् नपुंसकं तु पानीये स्वर्गेऽन्यपिस्मृतमिति ॥ अम्भ आप्नोति आप्यते वा आपूव्याप्तौ असुन् भ जुम् ह्रस्व
॥ अर्णः ऋच्छति ऋगतौ उदकेसुट् च ॥ तोयं तौतु तुः सौत्रः आवरणार्थ औणादिको य ॥ पानीय पीयते पापाने अनीयर पानीय फेनजलयोरितिहैम ॥ नीरं नीयते
णीञ् प्रापणे स्फायीतिरक् ॥ नारं निश्चयेन राति करणं ॥ क्षीर क्षियति क्षि निवासगत्योः क्रन् दीर्घः क्षीर पानीयदुग्धयोरितिहैमः ॥ अबु अम्बते अबि शब्दे बहु
लउः ॥ शम्बर शम्वृणोति वृञ् वरणे अच् शवस्य वरणं राती ति वा तदुक्तं विश्वे शम्बरसलिलेपुंसि मृगदैत्यविशेषयोः शम्बरीचाखुपर्ण्यांस्यादिति शम्बरमितिदत्यादि ९

पुष्करसर्वतोमुख ॥ अम्भोर्णस्तोयपानीयनीरक्षीराम्बुशम्बर ४ मेघपुष्पघनरसस्त्रिषुद्वेआप्यमम्मयम् ॥ भङ्गस्तरङ्ग ऊर्मिर्वा -

मेघपुष्प मेघपुष्पमिव ॥ घनरस घनस्यरसः पुंसि तदुक्तं शब्दार्णवे नीरघनरसः पुमानिति सप्तविंशतिजलस्य वा रेफान्ता पूर्वोत्तरसाहचर्यात् स्त्रियाङ्क्लीबे च शे
षङ्क्लीब असकृन्ति आपः सान्तङ्क्लीबेच वारनारमित्कमयमङ्क्लीव अन्नसमाहारावर्तः प्रमाणं घनरसमितिङ्क्लीवमपि घनरसमम्बुक्षीरमितिरत्नकोशात् ॥ आप्य अपाम्वि
कारः अण् प्यञ् ॥ अम्मय मयट् हृजलविकारस्य त्रिषु आप्या अम्मयी इत्यादि ॥ भङ्गः भज्यते भञ्जो आमर्दने घञ् तदुक्तं हैमे भङ्गस्तरङ्ग भेदेच रुग्विशेषपरा
जये कौटिल्ये भयविच्छित्तिरिति ॥ तरङ्गः तरति तॄप्लवनतरणयो ॥ ऊर्मिः ऋच्छति ऋगतौ उदादेशः मि ॥

वीचिः वयति ऊयतेवा वेञ् तंतुसंताने इचडित् तदुक्तं हैमे ऊर्मिः पीडाजवोत्कंठालेखाप्राकाश्यवीचिषु वस्त्रसंकोचलेखायामिति वास्त्रियामिति काकाक्षिन्यायेनोर्मि
वीचिभ्यां संबध्यते ऊर्मिरिव स्त्रीपुंसयोः वीचिस्तु नित्यं स्त्रीत्येके पुल्लिंगस्त्रीलिंगयोर्धीचिमपि पायष्टिमुष्टित्रुटिशामिपाटलिशाललि तरणिश्रेण्यूर्मयो बस्तिश्चेति वामनः
न्त्वारिलहर्याः ५ महत्सु ऊर्मिषु उल्लोलः लोलयतीति लोलः अच् उद्गतश्चासौ लोलश्च उल्लोडयति लोडृ उन्माने डलयोरेकत्वात्॥ कल्लोलः कंजलं तस्य लोलः उन्मा
दः तोर्ल्लिकल्लुते अनेन नद्यइतिशेषः कल्लु अव्यक्तशब्दे बहुलं ओलच् हैमहातरंगस्य॥ अंभसां भ्रमः आवर्तः स्यात् आवर्तनं वृत्तु वर्तने घञ् आवर्तश्चिंतने वारि भ्रमे चा
[illegible]॥ पर्षति पर्षति पृषु सेचने वर्तमाने इति साधु तदुक्तं कोशांतरे पृषन्मृगे पुमान्बिंदौन द्वयोः पृषतो पिनेति॥ बिंदवः बिंदति

रिहूयत्तजलनिस्सरणनालकस्य नयारो अध स्यजलस्यो र्ध्वनिस्सरणस्येतिनामन ॥ कूलं कूलयति कूल आवरणे अच् ॥ रोधः रुणद्धि रुधिर् आवरणे असुन् म
॥ तीरं तीरयति परतीरेतिष्यनात् अच् ॥ प्रतीरं ॥ तटं तटति तटउच्छ्राये अच् रोधः सांत अदन्तोपि रोधः पोक्रम्परोपसीतिसंसारावर्ते तटं त्रिलिंगं एत्तीरस्य
॥ परावर्चीतीरेक्रमेण पारावारे उच्यते परत्र अर्वाक् तु नद्याः परतीरपारं अवाक्तीरं अवारमित्यर्थः एकैकं ॥ तयोः पारावारयोः अंतरं मध्यं पात्रं स्यात् पिबत्यत्र
पात्स्माद्वा पातेष्ट्रन् तदुक्तं हैमे पात्रं तु कूलयोर्मध्ये पर्णे नृपतिमंत्रिणि योग्यभाजनयोर्यज्ञभाण्डेनाधानुकर्तरीति एकं ॥ अंतर्वारिणः वारिणः अंतः मध्ये यत्तट तद्वी
पइति अंतरीपमिति चोच्यते द्विर्गता आपोत्र ऋक्पूरिति समासांतः उभयत्र त्यंतरमितिर्इत् अपः अंतर्गतं अंतरीपमिति अस्त्रियामिति अंतरीपउ भाभ्यां सबद्धे

कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ७ पारावारे परार्वाची तीरे पात्रं तदंतरं ॥ द्वीपो ऽस्त्रियामंतरीपं यदंतर्वारिणस्तटं ८ तोयोत्थितं तत्पुलिनं सैकतं सिकतामयं ॥ निषद्वरस्तु जंबालः पंको ऽस्त्री शादकर्दमौ ९

नेह्रस्वमध्यस्थस्थानस्य ८ तोयोत्थितं तत्पुलिनमुच्यते पुलति पुल महत्वे एनन् त्रि
काद्वरोपेतु पुलिनं द्वीपमुच्यत इति एकं ॥ सैकतं सिकताः सत्यस्मिन् सिकतेति अण् ॥ सिकतामयं सिकतानां विकारः मयड्वैतयोर्भाषायाम् इति मयट् हे वालुकामयतटस्य ॥ निषद्वरः निषीदत्यत्र प
ङ्किशरणगतेषु वसादनेषु नीषदेनिष्यस्त्र सदेरिति निषलं इत्याद्युक्त्या तदुक्तं विश्वे निषद्वरः स्मरे पंके निशायामनु निषद्वरेति ॥ जंबालः जमति जमु अदने बाहुलकात् यद्वा
तेव अदने जंबः थाल्वानिवा क ज्वराते जबालः शैवले पंके जगले मदनद्रुमे मेदकेपि इत्यरोप्रयंपुंसि धूर्ते भिधेयवत्विश ॥ पंकः पच्यते पचि विस्तारे पञ् पंको ऽस्त्रीक
र्दमे पापे इति हैमः ॥ शाद शीयते ऽस्मिन्ननेन शद्लृ शातने णः इत्याद्युक्त्या तदुक्तं हैमे शादः कर्दमशष्पयोरिति ॥ कर्दमः कर्दति कर्द कुत्सिते शब्दे कर्दमः पंकशब्द
पुंनपुंसकयोः पंचकर्दमस्य ९

सांयात्रिकः समुदितानागमनं द्वीपान्तरगमनं वा संयात्रा सा प्रयोजनमस्यास्तीति प्रयोजनमित्यठक्॥पोतवणिक् पोतेनोपलक्षितो वणिक् द्वे नौकया वाणिज्यकारि
ण॥ कर्णधारः कर्णं श्रोत्रमरित्रं च धरति धृ धारणे अण्॥ नाविकः नावा तरति नौरिति तरतीतिठक् द्वे नाविकस्य नौपृष्ठदण्डधारकस्येत्यन्ये॥नियामका नियच्छन्तिपान ण्वु
ल् नियामक पोतवाहे कर्णधारे नियन्तरि इति कोशान्तरे॥पोतवाहा पोतं वहन्ति अण् द्वे पोतमध्यस्थितकाष्ठाग्रे दृष्टजलादिज्ञानाय स्थिताये नियन्तुं शक्तास्तेषां॥कूप
कः कूपे कायति कपीविकः कै शब्दे॥गुणवृक्षकः गुणानां रज्जूनां वृक्षः द्वे नौमध्यस्य रज्जुबन्धनकाष्ठस्य कुवाडोलकाठी इतिख्यातस्य १२ नौकादण्डः नौकायादण्डः
॥ क्षेपणी क्षिप्यते अनयेतिवा क्षिपेः कित्त्वेत्यनिः षट्कुलगुणः क्षेपणिरपि द्वे नौकावाहकदण्डस्य वल्हे इतिख्या०॥अरित्रं ऋच्छत्यनेन ऋगतौ अर्तीतित्र॥केनिपा

सांयात्रिकः पोतवणिक्कर्णधारस्तु नाविकः ॥ नियामकाः पोतवाहाः कूपको गुणवृक्षकः १२ नौकादण्डः क्षेपणी स्यादरित्रं केनिपातकः॥ अभ्रिः
स्त्री काष्ठकुद्दालः सेकपात्रं तु सेचनं १३ क्लीबेऽर्धनावं नावोऽर्धे तीतनौकेतिसुत्रिषु॥ तक केलके निपातोऽस्य हलदलादित्सलुक् कन् द्वे कर्णस्य सकाणु इतिख्या
तस्य॥ अभ्रिः अभ्रति अभ्र गतौ इन् अभ्रीत्यपि काष्ठकुद्दालः काष्ठस्य कुद्दालः द्वे पोतादेर्मलापनयनार्थं काष्ठादिरचितकुद्दालस्य कुडती इतिख्यातस्य॥सेकपात्रं सेक
स्य पात्रं॥सेचनं सिच्यतेऽनेन करणे ल्युट् सेचनक्षरणे सेके नौकायाः सेकभाजन इतिविश्वमेदिन्यौ द्वे चर्मादिरचितस्य जलोत्सर्जनपात्रस्य वारवीडोल इति स्यात-
स्य॥ यानपात्रं तु पोतोऽब्धि मध्ये त्रिषु समुद्रिय सामुद्रिको मनुष्योऽब्धिजाता सामुद्रिका च नौरितिठक् चित् १३ नावोऽर्द्धं अर्धनावस्यात् तत्क्लीबे नावोद्विगोरर्धा चेतिटच्-
अतीत नौकं नौकामतीत्य वर्तमाने मनुष्यादौ अतिनु अतीता नौर्येन नपुंसक इतिन्हस्वः अतिनौः पुमान् स्त्री वा त्रिषु एक॥

अतः परं अगाधात् अगाधशब्दमभिव्याप्य त्रिषु वाच्यलिंगा इत्यर्थः॥ प्रसन्नः प्रसन्नास्त्रीसुरायांस्यादच्छसंतुष्टयोस्त्रिष्वितस्कन्दात्॥ अच्छः छो छेदने सुपी
तिकः अच्छो भल्लुके स्फटिके मलेच्छाभिमुखे व्ययमिति हेमः द्वे निर्मलस्य॥ कलुषः लुषति लुषहिंसायां इगुपेतिकः कस्यजलस्यलुषो घातकः कलुषं त्वाविलेपापेइ
ति विश्वः॥ नच्छः आविलः आविलति विल भेदने इगुपेतिकः त्रीणि मलिनजलस्य १४ निम्नं निमनति म्ना अभ्यास आतश्चोपेतिकः॥ गभीरं गच्छति गाङ् गतौ गम्भ
गतौ गभीर गंभीराविति निपातितौ त्रीणि गंभीरस्य खोऽजइतिख्यातस्य॥ नत्स्यगंभीरस्य नद्वे पर्यये उत्तानंस्यात् उद्गतस्तानो विस्तारो ऽस्मात् तदुक्तं शांतरेऽउ
त्तानमगंभीरेस्याद्ऊर्ध्वास्यशायिनेत्रिषिति एकं॥ अगाधं नास्तिगाधः स्थितिरत्र नञास्त्येतिसाधुः॥ अतलस्पर्शो न विद्यते तलस्पर्शो ऽस्य द्वे अत्यंत गंभीरस्य॥ कै-

क्षिप्वागाधात्प्रसन्नोच्छः कलुषो नच्छ आविलः १४ निम्नं गभीरं गंभीरमुत्तानं तद्विपर्यये॥ अगाधमतलस्पर्शे कैवर्ते दाशधीवरौ १५ आनायः
पुंसिजालं स्याच्छणसूत्रं पवित्रकं॥ मत्स्याधानी कुवेणी स्याद्बडिशं मत्स्यवेधनं १६

वर्तः केजले वर्तते इलुवर्तने अच्॥ दाशः दशति मत्स्यान् दं
शद्शने दंशो ऽपि तिसाधुः यद्वा दश्यते मूल्यमस्मै दाश्दाने घञ् दासइत्यपि तत्रेस्यं दासो भृत्येच शूद्रेच ज्ञातेर्थिनिच धीवर इत्यक०॥ धीवरः दधाति मत्स्यान् छि
वरे त्वादिनानिपातः त्रीणि कैवर्तस्य १५ आनायः आनयंति मत्स्यानतेन श्रीतिघञ्॥ जालं जलेक्षिप्यते शेषेइत्यण् तदुक्तंरभसे जालंवृंदगवाक्षयोः क्षारकानाय
दंभेषुनीपेनास्त्रीहूघोपकद्वीति द्वे जालस्य॥ शणसूत्रं शणोति शणगतौ अच् शणस्यसूत्रं॥ पवित्रकं पवित्राद्विपरीतलक्षणयासंज्ञायांक द्वे शणसूत्रजालस्य॥ मात्स्याधा
नी मत्स्या आधीयंतेत्र डुधाञ् धारणपोषणयोः ल्युट्॥ कुवेणी कुत्सितंवेणंतेमत्स्याः ह्लश्चेतिघञ् वेणृगतौ द्वे मत्स्यबंधनकरंडिकायाः॥ बडिशं बलिनोमत्स्यान् श्य
ति शोतनूकरणे आतइतिकः डलयोरैक्यात् बडिशमपि बडिशाबडिशी त्रयोऽपिलमध्याया॥ मत्स्यवेधनं मत्स्यानां वेधनं द्वे मत्स्यवेधनस्य गळइतिख्यातस्य १६

पृथुरोमा पृथूनि रोमाण्यस्य॥ झषः झषति झषहिंसार्थः अच्॥ मत्स्य मद्यति मदीहर्षे स्यः॥ मीन. मीनाति मीयते वा मीञ् हिंसायां फेनमीनौ॥ वैसारिणः विशि भ्रसरति स्वगतो णिनि विसेनि अण्॥ अण्डज. अण्डाज्जायते स्म जनी प्रादुर्भावे ड॥ विसार विशेषेणासरति स्वगतौ व्याधीनिपञ्॥ शकुली शकलमस्यास्तीति अत इनि शकलं वल्कले. धेनि तिताल व्यादाव जय. अर्द्धीपत्स्यस्य॥ गडक. गडति गडसेचने क्वुन्॥ शकुलार्भक शकुलोपमत्स्यमात्रइति गुरवः तस्यार्भकः द्वे मत्स्यविशेषस्य गरइतिख्यातस्य १७ सहस्रदंष्ट्र सहस्रंदंष्ट्रायस्य॥ पाठीन पाठिपृष्ठभमर्पाति पापमक्षे अनर्भोनिवाद्य अन्येनिर्देषं नद्युक्तं द्वे पाठीनो गुरगलुवुमे पाठके मीनभेदेपेनि द्वे वडुदंष्ट्रस्य मत्स्यविशेषस्य॥ उलूपी उरिस्मपलनकरूपयस्यास्ति अंतइति रलयोरैक्य॥ शिशुक. कन् द्युक्त कोषान्तरे शिशुक. शिशुमारे

पृथुरोमाझषोमत्स्योमीनोवैसारिणोण्डज॥ विसार शकुलीचाथगडक शकुलार्भक १७ सहस्रदंष्ट्र पाठीन उलूपी शिशुक समौ॥ नलमीनश्चिलिचिम प्रोष्ठीतुशफरीद्वयो। १८ क्षुद्राण्डमत्स्यसंघातःपोताधानमथोझषाः॥ स्याद्रालकेल्लूपिनोरपीनि द्वे शिशुमाराख्यमत्स्यस्य॥ नल

मीन. नलवनस्थो मीन नलमीनश्चिलिचिमो स्हन्मीनोछिन्नस्विमिरितिरत्नमाला इलयोरैक्यात् नदमीनोपि॥ चिलिचिमः चिलिचिं विलासं मिमीते माङ् माने क. ॥ चिलिचिमिरपि नलमीनश्चिलि चिमिरिनि चोपालितः द्वे जलपृष्ठचारिमत्स्यविशेषस्य वेगसाइतिख्या.॥ प्रोष्ठी प्रकृष्ट ओष्ठो यस्या पररूप नासिकेनिर्डीष्॥ शफरी शफराति रादाने क. ष्णुसितु मोष्ठ शफरस्य द्वे सहरीरतिख्यातस्य शफ्रमत्स्य विशेषस्य १८ क्षुद्राण्डमत्स्य संघात क्षुद्राद्धाण्डाज्जातानामत्स्यास्तेषां संघातः पोताधानस्यात् पातो. र्भक आधीयतेऽत्र धात्रोल्पुट्॥ अथो झषविशेषा उच्यन्ते॥

रोहितः रोहति रुह बीजजन्मप्रादुर्भावे इनच् तदुक्तं कोशान्तरे रोहितं कुंकुमे रक्ते ऋजुशक्रशरासने पुंसि स्यान्मीनमृगयोर्भेदे लोहितकर्दमे इति एकं रोहि इति प्र-
सिद्धस्य ॥ मद्गुरः मज्जति मस्जेर्निपातः मंगरा इति प्रसिद्धः ॥ शालः शाड्यते शाडृ श्लाघायां डलयोरैक्यं घञ् सालोपि सालो वरुणसर्जयोरिति रभसे तुदंत्यादिः शा-
लो हल्ले मत्स्यभेदे शालोकस्तत्प्रदेशयोरिति हैमः चक्रांकितमत्स्य इत्यर्थः एकं ॥ राजीवः राजी रेखास्यास्ति अन्येभ्योपि वः राजीवो मीनसारंगभेदयोरिति हैमः अञ्जमपि-
एकं राया इति प्रसिद्धः ॥ शकुलः शक्नोति गंतुं वेगेन शक्लृ शक्तौ बहुलं उलच् एकं सौरा इति प्रसिद्धः ॥ तिमिः ताम्यति तमु ग्लानौ इन् १९ तिमिंगिलः तिमिं गिरति गॄ निगरणे
मूलेनिकः आदिशब्दान्नंद्यावर्तादयोऽन्ये पृथक् एकैकं ॥ यादांसि यांति वेगेन या प्रापणे असुन् बहुलं दुक् ॥ जलजंतवः जलानां जंतवः द्वे जलचरमात्रस्य ॥ तद्भेदाः तेषां ज-

**रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः १९ तिमिंगिलादयश्चाथ यादांसि जलजंतवः ॥ तद्भेदाः शिशुमारोद्रशंकवो मकरादयः २० स्यात्कु-**
**लीरः कर्कटकः कूर्मे कमठकच्छपौ ॥**

लजंतूनां भेदाः उच्यंते शिशुमारः शिशून् मारयति मृङ् प्राणत्यागे अण् शिशुमारोंबुसंभूतजंतौ तारात्मकाच्युते इति विश्व-
मेदिन्यौ शिरस इति ख्यातः ॥ उद्रः उनत्ति उंदी क्लेदने रक् हूद इति ख्यातः ॥ शंकुः शंकते स्मात् ख रु शंकु इति साधुः सकू इति ख्यातः तदुक्तं हैमे शंकुः पत्रशिराजाले संख्या-
कीलकशंभुषु यादोस्त्रभेदयोर्मेंद्रे इति ॥ मकरः कृणाति कॄ हिंसायां अच् पृषोदरादिः यद्वा मंकते मकि भूषायां अच् मगर इति प्रसिद्धः आदिना जलहस्त्यादयः २०
कुलीरः कुलति कुल संस्त्याने कोलीयते लिङ् श्लेषणे इति अग्रेण कुलिनं ईरयति कुलिर इत्यपि ॥ कर्कटकः कटति कटे वर्षावरणयोः कृणातेर्विच् अच् स्वार्थे कः कर्कश्चासौ
टश्च कर्कः श्वेतवर्णः टलति वा टल गतौ डः करकट इत्यपि करकड इति गुरवः तदुक्तं हैमे कर्कडः कुलिरे द्वे कुरलेंखेकडा इति ख्या० ॥ कूर्मः कौ ऊर्मिवेगोस्य योगविभागादच्

च तदुक्तं कोशान्तरे

शंखः शंखनति खनु अवदारणे अन्यइतिडः श॥ ... ॥वा शमुउपशमे सण्यर्थात् खः॥ कंबुः काम्यते कमुकांतौ जम्बा दिः कंबुर्वलयशंखयोरित्यभि॰ द्वे शंखस्य अस्त्रियौ पुंनपुंसकौ॥ क्षुद्रशंखाः क्षुद्राश्च ते शंखाश्च शंकते शकिशंकायां अनुदात्तेतश्चेत्युक् कन्॥ शंखनखाः शंखस्यनखइवेति द्वे सूक्ष्मशंखानां॥ जलशुक्यः शंबूकाःस्युः उल्लूकादिः जलमात्रजाः शुक्तयः शंबूकानन पुंसके इतिमेदिनेर्द्विलिंगता शंबूकः शंबुकश्चैव पूर्वः कांतश्च सर्वदा ककारेणविनाशेषोदृश्यते ग्रंथविस्तारइत्युत्पलिनी २३ भेकः बिभेति ञि भी भये इण्भीकेतिकन् भेकोमंडूकमेघयो रित्युक्तत्वात्॥ मंडूकः मंडयतिजलाशयं मंडतेवा मडिभूषायां शलिमंडिभ्यांऊकन् तदुक्तंहैमे मंडूकपर्यायंमंडूकीमंडूकौभेकशोणकाविति॥ वर्षाभूः वर्षासुभवति भुवः संज्ञायां वर्षाभूः स्त्रीचशोथघ्न्यांभूलतापुवयोःपुमानिति वि-

**शंखः स्यात्कंबुरस्त्रियौ॥ क्षुद्रशंखाः शंखनखाः शंबूकाजलशुक्तयः २३ भेके मंडूकवर्षाभूशालूरप्लवदर्दुराः॥ शिलीगंडूपदी भेकीवर्षाभ्वी कमठीडुलिः २४ मद्गुरस्य प्रियाशृंगी**

श्चमेदिन्यो॥ शालूरः शालते शालकत्थने खर्जपिंजादिभ्यइतिऊरः डलयोरैक्यं तत्र शाडते शाडृगतौ परिसरत्युत्तासस्वेदसालूर इत्युष्मविवेकाइंद्रस्यादिरपि प्लवः प्लवते प्लुंगतौ अच् तदुक्तंकोशांतरे प्लवः प्लक्षे प्लुतौ कपाविति॥ दर्दुरः दृणाति शब्दैः कर्णौ दृ विदारणे मुकुरदर्दुरौ तदुक्तं कोशांतरे दर्दुरः पर्वतेपुंसि त्रिष्वौषड्ग्रामाजने दर्दुरस्तोयदे भेके वाद्यभांडाद्रिभेदयोरिति षट् भेकस्य॥ शिली शिलति शिलउंछे इगुपेतिकः॥ गंडूपदी व्याख्यातं द्वेस्वल्पगंडूपदजातेः॥ भेकी॥ वर्षाभ्वीगौरादिः वर्षाभूरपि भेक्यांपुनर्नवायांस्त्रीवर्षाभूर्दर्दुरेपुमानितियादवः द्वे क्षुद्रभेकजातेः॥ कमठी पुंयोगेजातोवाङीष्॥ डुलिः दोलतिडुलउत्क्षेपे इगुपेतिकिः द्वे कूर्म्याः २४ मद्गुरस्य मत्स्य भेदस्य प्रियाशृंगीत्युच्यते शृणाति शृहिंसायां शृणातेर्ह्रस्वश्चेतिगन् गुट्च एकं॥

दुर्नामा दुष्टनिंदितनामास्याः दुर्नाम्नी अनउपेतिवाडीप् ॥दीर्घकोशिकादीर्घः कोशोयस्याः जातिडीप्नेतान्कन्हस्व इत्यादुक्त्य द्वे जलूकाकारस्य जलचरविशेषस्य॥ जलाशया। जलमाशयो ऽदयमस्य जलमाशेते निष्ठतानेतिवा पुसीविघ वदुक्तकोशांतरे अलाशयोजलाधारेस्यादुशीरेःन्यग्नि गकापिति ॥जलाधारः जलानाधारः द्वेतर गादीना तत्र जलाशयेषु अगाधजलः ह्रदउच्यते अगाधमतलस्पर्शनलयस्य ह्रदतेन्हाद् अव्यक्तेशब्दे अच् पृषोदरादिः एक २५ उपकूपजलाशये आहाव निपानमाह्व निपानस्याम् पिवनेः करणेनिस्युट् इतिद्वे आहूयंतेऽत्र निपानपिवंत्यस्मिन् द्वे कूपसमीपे योजलाशय कूपोद्धृताम्बुस्थापनीय शिलादिरचितोर्गनः यत्रार्थंतस्करेवन गोमहिषादयः पिबंतितस्य॥अधु अम्यते अमगत्यादौ अर्जीतिकु यद्वा अधयति अधुरत्स्कपपाने सृगोतिसाधुः॥महिः मन्हियते कूपे इ॰ डिञ्च॥कूपः कौति कुशब्दे

दुर्नामादीर्घकोशिका॥जलाशयाजलाधारास्तत्रागाधजलोह्रद २५आहावस्तुनिपानस्यादुपकूपजलाशये॥पुंस्येवाधु महि कूपउदपानंतुपु सिवा २६ नेमिस्त्रीकाः स्यवीनाहोमुखबंधनमस्ययत्॥पुष्करिण्यांतुखातंस्याद्खातदेवखातकं २७ कुमूद्वनिपः कुत्सितार्ईषद्वा आपोऽत्र कुक्

पूइति समासांतः ऊदेत्यत्र दीर्घनिर्देशादन्यत्रापिस्युट् ॥उदपान उदकंपिबंत्यस्मिन् पुंसिवा चत्वारि विहीरइति॰॥ २६ अस्यकूपस्यनेमि अनेरज्ज्वादिधारणार्थदारुप त्रेसात्रिका सरव्याया सपेतिकन् त्रिका कूपस्यनेमौस्यात्रिकश्च ष्ठाधरेस्त्रियामिति विश्वमेदिन्यौ हालराहावइतिस्यानस्यैक॥ अकूपस्यपाषाणादिभिर्यन्मुखबंधनस्वो नाहउच्यते विनह्यतेनेन नहबंधनेघञ्दीर्घ विनाहइत्यपि नदीपटइतिस्यानस्यैक॥पुष्करिणी पुष्कराणिसंत्यस्या मत्वर्थेइनिः॥खात अखानि खनुअवदारणे क कर्मणि अतएव अखातमिति निपातनादर्थि द्वे पुष्करिण्या॥अखात नञ्पूर्वात्क्त॥देवखातक देवेनखात अखातोदेवखात क इति पुस्काडे ऽमरदत्तात्पुष्करिपे द्वे अकृत्रिमखातस्य देवहारस्थजलाशयस्येत्यन्ये २७॥

पद्माकरः पद्मानामाकरः तडागः तड्यते तड आघाते तडादित्वं तदुक्तं विश्वे तडागस्तु जलाधारविशेषे यंत्रकूपके इति ॥ कासारः कासते कासृ शब्दे आरन् यद्वा ईष
त्सारोस्य कोः कादेशः मत्वर्थे अच् इत्याद्यूह्यं ॥ सरसी स्रियते सृ गतौ असुन् ङीष् सरः पंच तडागस्य तडाग इत्यत्र तडाग इत्यपि तटाक तडागावपि सतु अस्त्रियां
अत्र पद्मादि इंस पद्मागाधजलाशयस्य कासारादित्रयं कृत्रिमपद्माकरस्येत्यपि मतं सरसी स्त्री सरः सांतं असुन्नंतत्वात् वेशंतः विशंत्यत्र भेकादयः विश प्रवेशने
झृ विशिभ्यां झच् पल्वलं पलति पल्यते वा पल गतौ वलच् पुंस्यपि वेशंतः पल्वलो स्त्री इति वाचस्पतिः ॥ अल्पसरः अल्पं च तत्सरश्च त्रीणि स्वल्पसरसः वापी वापिरपि व
सिवपीति इञ् कृदिकेति वा ङीष् तत्र वाप्यं वापिरपि स्मृतेति द्विरूपकोशः दीर्घिका दीर्घेव संज्ञायां कन् ह्रदे दीर्घिकेति ख्याताया: २८ खेयं खन्यते खनु अवदारणे

पद्माकरस्तडागोस्त्री कासारः सरसी सरः ॥ वेशंतः पल्वलं चाल्पसरो वापी तु दीर्घिका २८ खेयं तु परिखा धारस्त्वंभसां यत्र धारणं ॥ स्या
दालवालमावालमावापोथ नदी सरित् ॥२९

ईं च खनः परिखा परितः खन्यते इति अन्येष्वपि डः ह्रे दुर्गाद्बहिर्यत्परितः खातं क्रियते तस्य चर इति प्रसिद्ध-
स्य यत्र अंभसां धारणं क्षेत्रादिसेकार्थे जलानां संग्रहणं स आधारः स्यात् आधियते जलमस्मिन् अध्यायेति घञ् तदुक्तं कोशांतरे आधारश्चाधिकरणेप्यालवा
लें तु धारण इति यदपि अपां धारणमाधारस्तदल्पं चालवालकमिति एकं बांध इति ख्यात० आलवालं आसमंताज्जलस्य लवमालाति ला आदाने आवलते भोतेनव
लसंवरणे हल इति घञ् अलवालमपि तत्रेत्थं लवमालाति तद्भिन्नं नञ् समासेन्ह स्वादीत्यन्ये आवालं आईषत् वाला वृक्षा अत्र आवापः आवपति जलमत्र डुव
प् बीजसंताने घञ् त्रयं वृक्षादिमूले समंततोंऽभसो धारणार्थे यद्वेष्टनं तस्य अळें इति ख्यातस्य नदी नदति णद अव्यक्ते शब्दे अच् सरित् सरति सृ गतौ सतेरि-
तिः २९

.श्री

तरंगिणी तरंगास्सत्यस्या इति शैवलिनी शैवलमस्त्यस्या तटिनी तटमस्त्यस्याः ह्रादिनी ह्रदाः सत्यस्या ह्रदिनीत्यपि एतेषु इन्नंतान्ङीप् धुनी धुनोतिवेतसादि न् पृषोदरादि स्रोतस्वती स्रोतांसिसत्यस्या स्रोतस्विनीत्यपि द्वीपवती द्वीपमस्त्यस्या स्रवती स्रवति लट शतृङीप् निम्नगा निम्नं गच्छति गमश्चेत्यनोडः आप गा अपांसमूहः आपंतेनगच्छति समूहेण् गमेर्डः अपगेतिन्हस्वादिरपि वियादगारमागारमपगामापगामपीति द्विरूपकोश इत्येतानद्याः ३०गंगा गच्छति गन् गम्यद्योरितिगन् विष्णुपदि विष्णोः पदंस्थानयस्याः गौरादिः तदुक्तं हैमे विष्णुपदंनभोव्योम्नयो विष्णुपदस्तुक्षीरोदेविष्णुपदीसुरापगेति जन्हुतनया ज न्हो राजर्षेस्तनयासुरनिम्नगा सुरापगानिम्नगा भागीरथी भगीरथस्येयं तस्येदं त्रिपथगा त्रयाणांपथां समाहारस्त्रिपथं तेनगच्छतिड त्रिस्रोताः त्रीणि

तरंगिणी शैवलिनी तटिनी ह्रादिनी धुनी ॥ स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा ३० कूलंकषा निम्नगारिणोरोधोवक्रासरस्वती ॥ गंगा विष्णुपदी जन्हुतनया सुरनिम्नगा ॥ भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ३१ कालिंदी सूर्यतनया यमुना शमनस्वसा ॥ रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ३२ स्रोतांसियस्याः भीष्मसूः भीष्मसूतेसा षुङ् प्राणिप्रसवे क्विप अष्टौ भागीरथ्याः ३१ कालिंदी कलिंदस्येयं अपत्यात् ङीप् सूर्य-तनया सूर्यस्यतनया यमुना यच्छति यमउपरमे अर्जियमिभ्य इतिउनन् शमनस्वसा शमनस्यस्वसा चत्वारियमुनायाः शमनस्वसाकृदना रेवा रेवते रेवृप्लवगतौ अ न् नर्मदा नर्मददातिक इयंतिवा डुदान्दाने दो अवखंडने वा नर्मदं केलिसचिवे नर्मदासरिदंतरे इति विश्वमेदिन्यौ सोमोद्भवा सोमात्सोमवंशजात्पुरूरवसउद्भवतिभ-न् तेनानीतत्वात् यद्वासोमामृतमुद्भवस्यस्या स्वर्गभवत्वात् सोमादुदावुद्भवति मेकलकन्यका मेकलस्यऋषेरद्रेर्वाकन्यका चत्वारिनर्मदायाः ३२ ॥६७॥

करतोया करस्य तोयं तदस्यास्ति मत्वर्थेन् सदानीरा सदानीरं यस्याः द्वे गौरीविवाहे शंकरहस्ते दत्तं कन्यादानोदकं तस्मात् जातायाः यदुक्तं प्रथमं कर्कटे देवी त्र्यहं गंगा रजस्वला सर्वा रक्तवहा नद्यः करतोयांबुवाहिनीति बाहुदा आतइनिकः बाहुं छिन्नं दत्तवती लिखितस्यर्षेः यद्वा बहुदस्य कार्तवीर्यस्येयं तेनावतारितत्वात् अत्रपक्षे अजादिः सैतवाहिनी सितानि वाहनानि यस्यार्जुनस्य तस्येयं अण् यद्वा सितस्यार्जुनस्येयं सैती चासौ वाहिनी च द्वे कार्तवीर्यार्जुनेन यावतारिता तस्याः शतद्रुः शतधा द्रवति द्रुगतौ डुः वसिष्ठशापभयाच्छतधा द्रुता शतद्रुः जातेत्यर्थः शुतुद्रिः शुपुजितं तुदति तुद व्यथने बहुलं रुक् द्वे शतरुद्रेति देशभाषया प्रसिद्धायाः विपाशा पाशा विमोचयति सत्येति मोचने णिच् अच् विपाट् क्विप् शांतत्वात् षत्वं शकारांता द्वे पाशमोचिनी निख्यातायाः ३३ शोणः

करतोया सदानीरा बाहुदा सैतवाहिनी ॥ शतद्रुस्तु शुतुद्रिः स्याद्विपाशा तु विपाट् स्त्रियां ३३ शोणो हिरण्यवाहः स्यात्कुल्याल्पा कृत्रिमा सरित् ॥ शरावती वेत्रवती चंद्रभागा सरस्वती ३४ कावेरी सरितोन्याश्च

शोणति शोणृ वर्णगत्योः अच् हिरण्यवाहः हिरण्यं वहति अण् द्वे नदविशेषस्य शोणनदीति प्रसिद्धस्य याऽल्पा कृत्रिमा सरित्सा कुल्या स्यात् तत्र साधुरिति यत् तालव्यांतं एकं कुल्या नदी कुल्यमस्थि कुल्या वारिप्रणालिकेति धरणोर्नदिमात्रेपि शरावती शराः सत्यस्यां वेत्रवती वेत्रमस्त्यस्यां उभयत्र मतुप् चंद्रभागा चंद्रभागयोः पर्वतयोः इयं तत्प्रभवत्वात् अण् चंद्रभागा चांद्रभागा चांद्रभागी च सा मता चंद्रभागी च सैवोक्तेति द्विरूपकोशः सरस्वती सरांसि संत्यस्यां मतुप् ङीप् ३४ कावेरी कस्य जलस्य वेरं शरीरं तस्येयं अणि आदिवृद्धिः तदुक्तं कोशांतरे कावेरी स्यात्सरिद्भेदे पण्यनारी हरिद्रयोरिति एते पंच सरिद्विशेषाः एकैकं अन्याश्च सरितः कौशिकी गंडकी चर्मण्वती गोदावर्यादयः स्युः ॥

सभेदः सभिद्यते भिद्यतेऽनेन भिदिरविदारणे हलश्चेति घञ् सिंधुसंगमः सिंधोः संगमः द्वे नदीमेलनस्य पयसः जलस्य पदव्या निर्गमनमार्गे मकरमुखादिरूपाप्रण
लोत्येक नद्रूपे पुंसितु प्रणालः नल्यते नेल बंधने कर्मणि घञ् उपसर्गादितिणः ३५ उत्तरौ देवितास्याविकसारवौ त्रिपुस्थानौ यथा देविकायां नद्यां भवं दाविकं दीव्यते दिवु
क्रीडाया ण्वुलकेगुण भवार्थे अण् दविकाशिंशपेति आ घञ् आत्व सरय्वां भवं सारवं सरति सर्तेरयुः भवार्थेण दोडी नायनेति निपातात्साधुः एकैक स्त्रियावु दाविकी सा
रवी अप्रयनत्वात्सपुत्रङीप् सौगंधिक शो भनोगंधः प्रयोजनमस्य विनयादित्वं प्रयोजनमितिठक् सौगंधिकं तु कल्हारे पद्मरागेच कदंपेरक्तकत्वात् कल्हार
कस्य जलस्य हारः रत्न कल्हादनेवा अत्र पृषोदरादिः द्वे सध्याविकासिनः शक्कुसरोजस्य हल्लकं हल्लति हल्लविकासने ण्वुल् यद्वा सपदादि हल् हललातीतिक -

सभेद सिंधुसंगमः ॥ द्वयोः प्रणालीपयसः पदव्यां त्रिषु तूत्तरौ ३५ देविकायां सरय्वां च भवे दाविकसारवौ ॥ सौगंधिकं तु कल्हारं हल्लकं रक्त-
सध्यकं ३६ स्यादुत्पलं कुवलयमथ नीलांबुजन्म च ॥ इंदीवरं च नीलेऽस्मिन्सिते कुमुदकैरवे ३७ स्वार्थे कन् इत्याद्यूर्ध्वं रक्तसध्यकं रक्तान् सध्येन्प्र

कृति अकुमदि ब्धायागतौ मूलविभूजादित्वात् द्वे रक्तकल्हारस्य ३६ उत्पलं उत्पलति पलगतौ पचाद्यच् कुवलयं कोर्वलयमिव शोभाकरत्वात् इत्याद्यूर्ध्व कुवल
वृत्पल कुवमिति निर्मलइशेष द्वे कुमुदस्य कमलसाधारणस्येत्यन्ये नीलेऽस्मिन्नुत्पले नीलांबुजन्म नीलं च तदंबुजन्म च इंदीवरं इंदति इदिपरमैश्वर्ये रेणनेति इ
यं इंदिके तिङीप् इंदीलक्ष्मीनस्यावरमिष्टं इंदीवरं कुवलये पतावर्यां च योपिनीलकत्वात् द्वे नीलोत्पलस्य इंदिवरं इंदीवारं इत्यपि सिते शुक्लेऽस्मिन्नुत्पले कुमुदं को
मोदते मुद हर्षे मूलविभूजादित्वात्कः कैरवं केजलेरौति रुशब्दे पचाद्यच् तत्पुरुषे कृतीत्यलुक् केरवस्य हंसस्येदंवानस्येदमित्यणि आदिवृद्धिः द्वे शक्कोत्पलस्य ३७

एषांउत्पलविशेषाणां कंदोनाममूलं शालूकं स्यात् शल्यते शलतिवा शलचलनसंवरणयोः शलिमंडिभ्यामूकन् वृद्धिश्च एकंवारिपर्णी वारिणिपर्णान्यस्याः पाककर्णे
तिङीष् यद्वा वारिविपर्त्ति पृपालनपूरणयोः धापृइतिनः जानेरितिङीष् कुंभिकाकुंभोस्त्यस्याः मत्वर्थेठन् द्वेजलकुंभितिख्यातायाः जलनीली जलंनीलयति -
नीलवर्णे कर्मण्यण् इत्यादिमूलं शेवालंजलेशेतेतिष्ठति शी डेनवालन्, शैवलः वालन् शेवालश्चापिशैवालः शेवलोजलनीलिका त्रीणिशेवाळ इतिप्रसिद्धस्य
कुमुद्वती कुमुदानिसंति कुमुदनडवेतसेभ्योडमतुप् झप् इतिनत्वं ३८ कुमुदिनी अतइनिः द्वेकुमुदिन्याः कुमुदयुक्तदेशस्यच नलिनी नडाः संत्यत्र डलयोरै
क्यं अतएव नडिन्यपि विसिनी विसमस्त्यस्याः पद्मिनी पद्मानिसंत्यस्यां मुखशब्दात् मृणालिनीत्यादयः तदुक्तंमेदिन्यां पद्मिनीपद्मसंघाते स्त्री विशेषे-

शालूकमेषांकंदः स्याद्वारिपर्णीतुकुंभिका ॥ जलनीलीतुशैवालंशैवलोथकुमुद्वती ३८ कुमुदिन्यांनलिन्यांतुबिसिनीपद्मिनीमुखाः ॥
वाम्बुसिपद्मंनलिनमरविंदंमहोत्पलं ३९ सहस्रपत्रंकमलंशतपत्रंकुशेशयम् ॥

सरोंबुज इति पद्मिनीयोषिदंतरे पद्मं पद्यते पद्गतौ प-
द्मोऽस्त्रीपद्मकेव्यूहनिधिसंख्यांतरेंबुज इत्युक्तत्वात् नलिनं नलति पालगंधे अरविंदं अलंशीघ्रंलिप्सांविंदति अकारा णिपत्राणि विंदतिवा महोत्पलं म
हच्च तदुत्पलंच तदुक्तंरभसे उत्पलं कुष्टभूरुहे इंदीवरेमांसशून्येइति ३९ सहस्रपत्रं सहस्रंपत्राण्यस्य कमलंकंजलं अलति अलभूषणादौ यद्वाका-
म्यते कमुकांतौ तदुक्तंहेमे कमलंन्योम्नि भेषजे पंकजे सलिले ताम्रे कमलस्तु मृगांतरे कमलाश्रीवरंनार्योरिति ३९ शतपत्रंशतंपत्राण्यस्य शतपत्रशिखं-
डि नि दार्वाघाटे सारसेच कमलेतुनपुंसकमिति विश्वमेदिन्यो कुशेशयं कुशेजलेशेते अधिकरणेशेतेरित्यच् शयवासिस्वलुक् ॥

पंकेरुहं पंकेरोहतीति रुहमादुर्भावे इगुपधेति कः नत्पुरुषे इत्यलुक् तामरसं तामर घृतमर्धर्चादित्वात् नत्र सरति अन्येभ्योपीति ड यद्वा तम्यते तमु कांक्षायां बहुलनि
र्देशादसुन् तामं पङ्कं ग्लानिं वा रसयति आस्वादयति पचनादेरच् तामरसं च तत्र सारसं तत्र भवमित्यण् सारसं सरसीरुहं सारसः पुष्कराह्वे स्यादिति हैमः सरसीरुहं
सरस्यां रोहतीति मूलविभुजादि इगुपधेति वा कः सूत्रे तत्पुरुषपदनिर्बन्धनस्य अभावेन दर्शित विग्रहस्य भवान् गणांकृतत्वाविरोधः समवायः युक्तो विग्रहः ५० बिसप्रसूनं बिस
स्य प्रसूनं राजीवं केसरस्य राज्य अस्त्यस्य अन्येभ्योपि दृश्यत इति वः राजीव नलिने नागभेदे हरिण मीनयोरित्युक्तत्वात् पुष्कर पुष्णाति पुष पुष्टौ पुषः कित् इति करन् अं
भोरुहं अम्भसि रोहतीति कः षोडशकमलस्य अपुंसि षोडश नामानि तत्र पुंडरीकं पुंडयति मंडि भूषायां पुंडिच कर्फरीकादयश्चेत्यरीकन् तदुक्तं कोशान्तरे पुंडरी

पंकेरुहं तामरसं सारसं सरसीरुहं ५० बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च ॥ पुंडरीकं सिताम्भोजमथ रक्तसरोरुहे ५१ रक्तोत्पलं कोकनदं
नालो नालमथास्त्रियां ॥ मृणालं बिसमब्जादि कदंबे खंडमस्त्रियां ॥ ५२ कं सिताम्भोजे सितच्छत्रे च भेषजे इति सिताम्भोजं सितं च तत् अम्भोजं

च द्वे सितकमलस्य रक्तसरोरुहं रक्तं च तत् ५१ रक्तोत्पलं रक्तं च तदुत्पलं च कोकनदं कोकान् चक्रवाकान् नदति णद अव्यक्ते शब्दे अतः मौविनण्यस्यादि मूलविभुजादित्वात् कः
तदुक्तं विश्वे अथ कोकनदं रक्तकुमुदे रक्तपंकजे इति त्रीणि रक्तकमलस्य कोकनदमिति रक्तकुमुदेपि वर्तते तत्रेत्थं रक्तसंध्यारक्तकुमुदे च बुधैः कोकनदं स्मृतमिति नालः नलति
गंधबंधने ज्वलितिरिति णः नालं तदुक्तं कोशान्तरे नालं नालोपद्मखंडे नाली शाकादिदंडकं इति एवं नाली नाल्यौ इत्पादयादि दंडस्य मृणालं मृण्यते मृण हिंसायां तमि विशि इत्या
दिना कालन् तदुक्तं विश्वे मृणालं नलदे क्लीबपुंनपुंसकयोर्बिसे इति बिस बिसति बिस प्रसरणे इगुपधेति कः मृणाले तु बिसं बिसमिति द्विरूपकोशः मृणालिगुणा पंचयेरस्त्री
त्वात् विकीरेणितिङीष् मृणाली द्वे मृणालस्य बिसे इति स्यात् तस्य अस्त्रियां क्लीबपुंसयोः अब्जादिकदंबे कमलादीनां समूहे खंडमित्येकं नाम स्यात् अस्त्रियां शरदः शाडिरुजायास

घातेच० घञ् बणु दाने ऽमनाह्नुः बहुलंषत्वाभावः षंडः तालव्यो मूर्धन्यो ऽप्यादिकदंबषंडशब्दोयं मूर्धन्य एव वृषभे पूर्वाचार्यैर्विनिर्दिष्ट इत्यूष्मविवेकः ४२ करहाटः
करं हाटयति हट दीप्तौ कर्मण्यण् तदुक्तं हैमे करहाटः पद्मकंदे पुष्पद्रुमविशेषयोरिति शिफाकंदः शिफा मूलतरुप्ररोहस्तत्सहितः कंदः कंदो मूलमित्यर्थः शिफेति च कं
दमिति च पृथक् नामनी इत्यन्ये किंजल्कः केजले सरति स्पगतौ पचाद्यच् हलदंता इत्यलुक् केशीर्यते नेवा शॄ हिंसायां अप् तदुक्तं कोशांतरे केसरं हिंगुनिर्ध्यासवं किंज-
ल्केन स्त्रियां पुमान् सिंहच्छटायां पुन्नागे बकुले नागकेसर इति केशर इत्यपि द्वे केसरस्य संवर्तिका संवर्तने वृतु वर्तने ष्वषिरुषि वृतनिइति इन् संवर्तिर्नवपत्रिकेति
बोपालितः नवदलं नवं च तत् दलं च बीजकोशः द्वे पद्मादीनां नवकोशस्य बीजकोशः बीजस्य कमलाक्षस्य कोशः पात्रमिति आधार इति कश्चित् वराटकः वरंट-

करहाटः शिफाकंदः किंजल्कः केसरोस्त्रियां ॥ संवर्तिका नवदलं बीजकोशो वराटकः ॥ इति वारिवर्गः ॥ उक्तं स्वर्व्योमदिक्कालधीशब्दादि-
सनाट्यकं ॥ पातालभोगिनरकं वारि चैषां च संगतं १ इत्यमरसिंहकृतौ नामलिंगानुशासने ॥ स्वरादि कांडः प्रथमः सांग एव समर्थितः ॥ १ ॥

लवरण मटति अटगतौ कर्मण्यण् वराटकः पद्मबीजकोशे रज्जौ कपर्दके इत्य० ॥ द्वे बीजकोशस्य ॥ ॥ इति वारिवर्गः ॥ ॥ उक्तान् वर्गान् संगृह्णाति उक्तमिति अत्र
स्वर्गादिवार्यंताः एकादश वर्गा ऽप्यथोक्ताः एवां एकादशवर्गाणां संगतं संबद्धवशात्प्राप्तं देवासुरमेधादिकं तदप्युक्तं ॥ १ ॥ इतीति एवममरसिंहस्य कृतौ नाम्नां
लिंगानां चानुशासने स्वरादिशब्दानां कांडः समूहः सांगाः ॥ अंगोपांगसहितः प्रथमः समर्थितः प्रोक्तः ॥ १ ॥ श्रीमत्यमरकोशे पंडितेत्यकपनाम्ना हरिणा
विरचितविग्रहः प्रथमकांडः समाप्तिमगमत् ॥ ॥ कृष्णाय वासुदेवाय हरये नंदसूनवे ॥ सिद्ध्यर्थं सर्वकार्याणां नमोस्तु मम विष्णवे ॥ इति सवि० अ० प्र० स०।

## अथसविग्रहामरकोशेद्वितीयकांडंप्रारभ्यते.

म श्रीगणेशायनम. इहवक्ष्यमाणेद्वितीयकांडे वर्गाउक्ता वरितुमारभ्या कीर्त्या पृथिव्यादिभिरुपलक्षिता तत्रांगानिमृदादीनि उपांगानिग्वलादीनि अपणादीनि विपण्यादीनि एवमन्यत्राप्यूह्य मृगशब्दोऽरण्यपशुमात्रपर आरण्या पशवो मृगाइत्युक्तत्वात् आदिशब्देनपक्षिकीटादीनांग्रहण तत्रचांगोपांगानिपक्षिपशा दीनि यद्वा मृगानन्तुशीलयस्यसमृगादीसिह १ भू भवतीतिभू भूधातु सत्तास्पार्थे भू स्थानमात्रे कथिनाधरण्यामपियाधिति भूमि भूमिःस्यत्ती- स्थानमात्रइतिहैम अचला नचलतीत्यचला चलकंपने अचला सत्यस्यांवा अर्शआद्यच् टाप् अचलस्त्कागिरिकीलयो अचलाभुवीतिहैम अनन्ता नास्त्य

**श्रीगणेशायनम वर्गा पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभि नृब्रह्मक्षत्रविट्शूद्रै सांगोपांगैरिहोदिता १ भूर्भू मिरचलानन्तारसाविश्वंभरास्थिरा धराधरित्रीधरणीक्षोणीज्याकाश्यपीक्षिति २**

न्तोयस्या यद्वा अनंतोऽस्तिधारको यस्या. अनंतःकेशवेशेषेपुमान्विरवधौत्रिषु रसा रसाःस्यामस्तीति रस्यतवा रस आस्वादने॥विश्वभरा विश्वविभर्तीति भृञ्भरणे विश्वंभरोऽच्युतेशा केपुंसिविश्वंभराभुवि॥स्थिरा तिष्ठतीति स्थिराभूशाल्पपर्योनाशिनामोक्षेबलत्रिषु इति॥धरा धरतीविश्व धृञ्धारण धरा सातियस्यावा यद्वा धृङ् अवस्थाने ध्रियतेधर कूर्माधिपेगिरौ कर्पासमूलधरामेदोभूमिजरासुधीतिहैम॥धरित्री धरतीति॥धरणी धृञ् धारणे धरणधारणेमानविशेषेधरणीभुवीतिहैम॥क्षोणी क्षौतीति इक्कुशब्दे॥ज्या ज्यामौर्वीज्यावसुधरेतिशाश्वत॥काश्यपी कश्यपस्येयम्॥क्षिति क्षियतीति क्षिनिवासगत्योः क्षितिर्गेहेभुविक्षयइतिहैम २

ऊषवान् ऊषास्त्यस्मिन् ऊषरुज्जाया ॥ ऊषर इयक्षारमृत्तिकाशाया अभिधान ॥ इावप्यन्यलिगौ यथा ऊषवती ऊषग्वास्थली ऊषरस्थलमित्यादि ॥ स्थल स्थ
लतीति एलस्थान स्थली अकृत्रिमभूमे नाम कृत्रिमातुस्थला स्थलमुभयसाधारण ॥ मरु म्रियते ऽस्मिन्भूतानि मृङ्प्राणत्याग मरुर्गिरिधन्वनो ॥ ध-
न्वा धन्व्यते ऽस्मात् धविगत्यर्थ धन्वातुमरुदशेनाक्लीबेचापस्थलेपिच ॥ इतिद्वेनिर्जलदेशस्याभिधान ॥ खिल खिलति खिलउञ्छे खिल्यते ऽस्मिन्वा ॥ अप्रह
त नप्रहन्यतस्म हल्यादिभि हनहिंसागत्यो सम समानार्थे त्रिषुलिगेष्वित्यर्थ इतिद्वेहलाद्यकृष्टदेशस्यनामनी ५ जगती गच्छतीति गम्लगतौ जगत्यादि
एपेङ् विवायोना ज्जगमेश्च ॥ जगतीभुवनेस्मायाञ्छदाभेदजनपिच ॥ लोक लोक्यते लोकृदर्शने लोकोविश्वजनइतिहैम ॥ विष्टप विशत्यत्र विशप्रवेशने विष्टप

ऊषवानूषरोद्वावप्यन्यलिगौस्थलस्थली समानौमरुधन्वानौद्वेखिलाप्रहतेसमे ५ त्रिष्वथोजगतीलोकोवि
ष्टपभुवनजगत् लोकोयभारतवर्षशरावत्यास्तुयोवधे ६

मपि पठेत्तु पिष्यतेवा पिशागतौ पिषसञ्चूर्णनेवा विष्टप पुमानितिवापालित ॥ भुवन भुवत्यस्मिन् जगत् इतिपञ्चभूतलस्याभिधानानि ॥ एक महाभूतपृथिवी
पञ्चमहाभूतविषयद्रियात्मकजगदितिपृथिवीजगतोर्भेद अय जबुद्वीपवर्तीदृश्यमानालोक भारतनामकवर्षज्ञेय उक्तञ्च उत्तरयत्समुद्रस्यहिमाद्रेश्चैवद
क्षिण वर्षतद्भारतनामभारतीयत्रसततिरिति ॥ भारत भरतस्यराज्ञइदभारत वर्षशब्द पुल्लिगोपि पुनपुसकपावर्षजबुद्वीपाद्यदशिष्वितिरुद्र वर्षोस्त्री
भारतादौच जबुद्वीपाद्यशिष्वितिमेदिनी इत्यकमभिधेय गव इलावृतान्यष्टौवर्षाण्यन्यान्यपिशरावत्याअवधे -

यः प्राक्दक्षिणः प्राक्सहितोदक्षिणोदेशः सप्राच्यः प्राच्यांभवः इत्येकंनाम॥ शरावत्या अवधेः यः पश्चिमोत्तरः पश्चिमेनसहितः स देशः उदीच्यः उदीच्यांभव इत्येकमभिधानं॥ प्रत्यन्तः अंतप्रतिगतः॥म्लेच्छदेशः म्लेच्छानांदेशः तदुक्तं चातुर्वर्ण्यव्यवस्थानयस्मिन्देशेनविद्यते तंम्लेच्छविषयंप्राहुरार्यावर्तमतः परं इतिद्वेशिष्टाचाररहितस्यखशादिदेशस्यनामनी॥ मध्यदेशः मध्यश्चासौदेशश्च॥ मध्यमः मध्येभवः इतिद्वेनामनी एतत्परिमाणंतु हिमवद्विंध्ययोर्मध्यं यत्प्राग्विनशनादपि प्रत्यगेवप्रयागाच्चमध्यदेशःप्रकीर्तितइत्युक्तत्वात् विनशनं कुरुक्षेत्रं ७ आर्यावर्तः आर्याआसमंतात्वर्तंतेऽत्र॥पुण्यभूमिः पुण्यस्यभूमिः पुण्याचासौभूमिश्चेतिवा उक्तंच आसमुद्रात्तुवैपूर्वादासमुद्राच्चपश्चिमात् तयोरेवांतरंगिर्योरार्यावर्तंविदुर्बुधाइत्युक्तत्वात्॥हिमागः हिमप्र-

देशःप्राग्दक्षिणःप्राच्यउदीच्यःपश्चिमोत्तरः प्रत्यंतोम्लेच्छदेशःस्यान्मध्यदेशस्तुमध्यमः॥७ आर्यावर्तःपुण्यभूमिर्मध्यंविंध्यहिमालयोः निवृज्जनपदोदेशविषयौतूपवर्तनं ८ त्रिष्वागोष्ठान्नडप्रायेनड्वान्नड्वलइत्यपि

धानोऽगः॥ हिमालययोरितिपाठेतु हिमेनअल्यते अलभूषणादौ इतिद्वेविंध्यहिमागमध्यदेशस्याभिधाने॥निवृत् निवृत्तुंसि साहचर्यात् नियतवर्तंतेऽस्मिन्नहिवृत्तीतिदीर्घः अस्मिन्नित्यधिकरणस्यकर्तृत्वविवक्षा वृतुवर्तने॥जनपदः जनःपदंवस्तुयत्र जानपदोऽपि भवेज्जनपदोजानपदोऽपिजनदेशयोरितिविश्वमेदिन्यौ इतिद्वेजननिवासस्थानस्याभिधाने॥ देशः देशतीति दिश अतिसर्जने विषयः विसिनोति षिञ्बंधने॥उपवर्तनं उपवर्ततेऽत्र इतिचत्वारिग्रामसमुदायलक्षणस्यदेशमात्रस्याभिधेयानि ८ अथगोष्ठशब्दमभिव्याप्यवक्ष्यमाणात्रिषुलिंगेष्वित्यर्थः॥नड्वान् नडाःप्रायाःयत्र॥नड्वलः नडाःसंत्यस्मिन् इतिद्वेनडप्रायेनडबहुलदेशेअभिधाने।

तो कुमुद्वान् कुमुदानिसन्त्यत्र ॥ कुमुदप्राये कुमुद्वानिमाधाण्यलइत्येक ॥ वेतस्वान् वेतसा सन्त्यत्र ॥ बहुवेतसे बहव वेतसा यत्र इत्येकमभिधान ९ शाद्वल शीयत
शद्यतेशातने शीयतेयस्मिन्निति वा शादा बालतृणानिसन्त्यस्मिन्निति वा ॥ शादहरिते शादैबालतृणैः हरितदेशो शाद्वलइत्येकंनाम ॥ सजंबाल जंबालेनसहिते ॥ पंकि
ल पंकास्मिन्नस्तीत्येक ॥ जलप्राय जलप्रायंयत्र ॥ अनूप अनुगताआपोऽत्र इतिद्वेजलबहुलदेशस्यनामनी ॥ तथाविध अनूपसदृश कश्चिन्नद्यादेरुपान्तदेशो व कच्छ
त्यच्यते कच्छलछति परिछिन्नत्ति छोछेदने इत्येकनाम कच्छशब्दस्यपुंसीतिविशेषाच्चिल्लिंगपूर्वोक्तस्यबाधः १० शार्करा शर्करास्त्यत्र ॥ शर्करिल शर्करा विद्यतेयस्मि

कुमुद्वान्कुमुदप्रायेवेतस्वान्बहुवेतसे ९ शाद्वल शादहरितेसजंबालेतुपंकिल जलप्रायमनूपस्यात्पुंसिकच्छस्तथाविध १०
स्त्रीशर्करा शर्करिल शार्कर शर्करावति देशएवादिमावेवमुन्नेया सिकतावति ११ देशोनद्यंबुवृष्ट्यंबुसंपन्नव्रीहिपालित
स्यान्नदीमातृकोदेवमातृकश्चयथाक्रम १२ न् इतिद्वेवालुकायुक्तदेशस्यनामनी तत्रशर्करास्त्री ॥ शार्कर शर्करा विद्यतेयस्मिन्निति शर्करावा

न् इतिद्वेवालुकायुक्तस्यदेशस्य आदिमौशर्करा शर्करिलौदेशएव देशस्तुविलिंगोवर्ततिनियमात् एवंसिकतावत्सून्नेयाऊहनीया. तथाहि सिकता सिकतिलद्
ति इतिद्वेसिकतायुक्तदेशअभिधाने ॥ सैकत सिकतावान् इतिद्वेवालुकायुक्तस्यदेशस्य. तत्रसिकतानित्यस्त्रियाबहुलत्व अत्रशर्करासिकताशब्दौद्वावपि ब
हुवचनान्तावितिकश्चित् ११ देशइति नद्यंबुभि वृष्ट्यंबुभिश्च संपन्ने धान्ये पालित देश क्रमेण ॥ नदीमातृक नदीमाताऽस्य ॥ देवमातृकश्च देवोमाताऽस्य
वृष्ट्यंबुजातमस्यदिनोदेवमातृकइत्यर्थ इत्येकैकनाम १२

शोभनोराजायत्र तस्मिन्देशेराजन्वान् शोभनोराजवति इत्येकस्वधर्मपरराजयुक्तदेशस्यनाम॥ततःअन्यत्रराजमात्रयुक्तेदेशो राजवान् राजाविद्यतेयस्मिन् इत्येकनाम॥गोष्ठं गावस्तिष्ठंत्यत्र॥गोस्थानकं गवांस्थानं गोष्ठगोस्थानकगोष्ठीसभास्वापयोस्त्रिया इतिहैअभिधाने तत् गोष्ठं॥भूतपूर्वकं पूर्वंभूतभूतपूर्वकं चेत् पूर्वगोष्ठं इतिगोष्ठीनमित्युच्यते पूर्वंयत्रगावआसन् तत्स्थानंगोष्ठीनमित्यर्थः॥पर्यंतभूः॥परिसरः हेनदीपर्वतादीनासुपांतभुवः नामनी पर्यंतेभूः परितःसरंत्य त्र॥सेतु सिनोति सीयतेवा षिञ्बंधने॥आलिः आअलत्यंभः अलवारणे यद्वा अल्यतेऽनया इतिहैसेतोः पुलइतिख्यातस्यनामनी स्त्रीलिंगायामालौ सेतुःपुं गानित्यन्वयः॥ वामलूरः वांमे वामंवालूयते लूञ्छेदने॥ नाकुः नअकनी अकुकुटिलायागतैः यद्वा नम्यतेभूरनेन॥वल्मीकं वलंतेप्राणिनोऽत्र वलसंचरणे इतित्री

स्याद्राज्ञिदेशेराजन्वान्स्यात्ततोऽन्यत्रराजवान् गोष्ठंगोस्थानकंतत्तुगौष्ठीनंभूतपूर्वकं १३ पर्यंतभूःपरिसरःसेतुरालौस्त्रि यांपुमान् वामलूरश्चनाकुश्चवल्मीकंपुंनपुंसकं १४ अयनंवर्त्ममार्गाध्वपंथानःपदवीसृतिः सरणिःपद्धतिःपद्यावर्तन्येकपदीतिच १५

णि वल्मीकस्याभिधानानि १४ अयन अयते ईयतेवाऽनेन अयगतौ अयनंपथिगेहैर्कस्योदग्दक्षिणतोगताविति हैमः॥ वर्त्म वृ तगादिति वर्ततेऽनेनवा॥ मार्ग मृज्यते वितृणीक्रियते पदैरितिशेषः मार्ग्यतेवा मृजुशब्दो मार्गअन्वेषणेवा मार्गोमृगमदेमासेसेोम्यर्क्षे ऽन्वेषणेपथिरितिहैमः॥अध्वा भक्षोनिबलगितिशेषः अदभक्षणे॥ पंथा पथंतेऽनेन पथिगतौ पततत्यनेनेतिवा॥पथ वाटःपथश्चमार्गश्चेतित्रिकांडशेषात् अदंतोपि॥ पदवी पद्यतेऽनया॥सृतिः सरत्यनया सृगतौ॥ सरणि॥ पद्धति पादाभ्यांहन्यते हनहिंसागत्योः॥पद्या पदायहितापद्या॥ वर्तनी वर्ततेऽनया॥ एकपदी एकःपादोऽस्या इतिद्वादशमार्गस्यनामानि १५

अतिपथा अतिपूजाया सुपूजाया ॥सुपथः सचासौपथाश्च ॥सत्पथ सचासौपथाश्च ॥अर्चितध्वनि शोभनेमार्गे इतिचीणिशोभनमार्गस्यनामानि॥व्य ध विरुद्धोध्वा॥दुरध्व दुष्टोध्वा॥विपथः विरुद्ध पथा ॥कदध्वा कुत्सितोध्वा ॥कापथ कुत्सित पथा कुपथोपिइति पंचदुर्मार्गस्याभिधानानि तत्र कदध्वा नात ॥अपथ्या पथो भाव ॥अपथ नपुंसक रेमार्गाभावस्याभिधाने ॥ शृंगाटक शृंगप्राधान्य अटतीति अटगतौ ॥चतुष्पथ चतुर्णापथा समाहार द्वंद्व द्वाटादइतिख्यातस्यनामनी ॥दूरशून्य दूरमासौशून्यमदूरशून्य छायाजलादिवर्जितोदूरस्थोध्वामार्ग प्रांतर प्रकृष्ट अतर प्रांतरमित्युच्यते एकनाम

अतिपथा सुपथाश्चसत्पथश्चार्चितःध्वनि व्यध्वादुरध्वोविपथ कदध्वाकापथ समा १६ अपथास्त्वपथतुल्ये
शृंगाटकचतुष्पथे प्रांतरदूरशून्योध्वाकांतारवर्त्मदुर्गम १७ गव्यूति स्त्रीक्रोशायुगनल्व किष्कुचतु शत

कांतार कस्यसुखस्य जलस्यवा अत कांत कोतं कुछति कुगतौ यत् दुर्गमचोरकंटकाद्युपद्रवयुक्तवर्त्ममार्ग कांतारमित्युच्यते पुसिकांतार कांता तारोस्त्रीमहारण्येबिलेदुर्गमवर्त्मनीतिमेदिनी इत्येकनाम १७ क्रोशायुग गव्यूतिरित्युच्यते क्रोशोपदं सहस्रेद्वेधनुर्हस्तचतुष्टय द्वाभ्यांधनु सहस्राभ्या गव्यूति पुसिभाषितइतिशब्दार्णवात् पुस्यपि क्लीबेतुगव्यूत धन्वंतरसहस्रतुक्रोश क्रोशद्वयपुन गव्यूतस्त्रीतुगव्यूतिर्गोरुतगामतचतारीतिवाचस्प ति ॥किष्कूणाहस्तानाचतु शत चतु शतीवानल्वइत्युच्यते चतु शतहस्तमितस्थाननल्वसंज्ञकमित्यर्थ एकनाम

घंटापथ. घंटोपलक्षितः पंथाः शाकपार्थिवादिवत् यद्वा घंटानांपंथाः तद्वतांहस्त्यादीनांग्रहणं दशधन्वंतरोराजमार्गोघंटापथःस्मृतइतिचाणक्यः ॥ संसरण सम्यक्सरंत्यत्र अनेनवा सृगतो इतिद्वेराजपथमात्रस्याभिधाने ॥ तत् संसरणं पुरस्य नगरस्यचेदुपनिष्करमित्येकंनाम त्रुधैःसंसरणंबलगजादीनाम संकुल पुरस्योपस्करचोक्तमितिमुग्ध. ॥ उपनिष्करं उपनिष्कीयते सैन्यैर्हन्यते कृहिंसायां १८ द्यावित्यादि पंचद्विवचननामानिद्यावाभूम्योः ॥ गंजेत्यादि द्वयं क्षारसमुद्रस्य गंजाखनौसुरागृहे रुमासुग्रीवदाराषुविशिष्टलवणाकरइतिमेदिनी मंदारुमेस्त्रियां अंगोपांगापेक्षयाभूमिरेवात्रप्रधानमितिभूमिवर्गइति व्यपदेशः एवमन्यत्रापिमंतव्यं इतिभूमिवर्गः पूः पिपर्तीति पृपालनपूर्णयोः ॥ पुरी पूर्यते पुरिरित्यन्यत्र ॥ नगरी नगा सन्त्यस्यां ॥ पत्तन पतंतिजना-

घंटापथःसंसरणंतत्पुरस्योपनिष्करं १८ द्यावापृथिव्योरोदस्योद्यावाभूमीचरोदसी दिवस्पृथिव्योगंजातुरुमा-
स्याल्लवणाकरः १९ इतिभूमिवर्गः पूःस्त्रीपुरीनगर्योर्वापत्तनंपुटभेदनं स्थानीयंनिगमोऽन्यत्तुयन्मूलनगरात्पु
रं १ तच्छाखानगरंवेशोवेश्याजनसमाश्रयः यत्र ॥ पट्टनं ॥ पुटभेदनं पुटानिपत्राणिभिद्यंतेऽत्र भिदिरविदारणे ॥ स्थानीयं स्थानायहितं ॥ निगमः नितरांगच्छत्यत्र इतिसप्तनगरस्याभिधानानि ॥ पूःपुरौ पुरीनगर्योर्वास्त्रियां पक्षेपुरं ॥ नगर केचिदत्र भेदंचक्रुर्यथा यत्रानेकशिल्पिनोऽनेकवर्णकादि व्यवहारस्तत्पुरादि यत्रराजानतदनुचराश्चसंतितत्पुरंपत्तनादिसंज्ञं यत्प्राकारादिर्वोष्टितंविस्तीर्णंपुरंतत्स्थानीयादिनामकमिति यन्मूलनगरादन्यत्पुरंतच्छाखानगरमित्यन्वयः ॥ शाखानगरं शाखेवनगरं इत्येकंनाम ॥ मूलनगरंराजधानी १ वेशः विशंत्यत्र विशप्रवेशने ॥ वेश्याजनसमाश्रयः वेश्याजनस्यसमाश्रयोवास-
स्थानं वेशइत्युच्यते इतिद्वेवेश्यानिवासस्याभिधाने

आपण आसमंतात्पणायते। पण व्यवहारे॥ निषद्यायां निषीदंत्यस्यां जना षद्लृ विशरणगत्यवसादनेषु इति हेकः ष्यवस्तुशालायाअभिधाने॥ विपणि विपणत्यत्र पण व्यवहारे॥ पण्यवीथिका पण्यानां वीथिका इति हेकस्य वस्तुशालापंक्ते अभिधाने २ रथ्या रथवहतीति॥ प्रतोली प्रतोलयती तुल उन्माने॥ विशिखा॥ इति त्रीणि ग्रामाभ्यंतरमार्गस्य नामानि॥ चय चीयते चिञ् चयने॥ वप्र वप्रः आवरणे हृदे प्राकारे मूलबंधन इति धरणि इति हे प्राकारस्याभिधाने॥ प्राकार प्राक्रियते डुकृञ् करणे॥ वरण वृणोतीति वृञ् वरणे॥ शाल शल्यते शल गतौ सालो वरुणसर्जयो इति रभस इति त्रीणि प्र

आपणस्तु निषद्यायां विपणि पण्यवीथिका २ रथ्या प्रतोली विशिखा स्याच्चयो वप्रमस्त्रियां प्राकारो वरणः शालः
प्राचीनं प्रांततो वृति ३ भित्ति स्त्री कुड्यमेडूकं यदंतर्न्यस्तकीकसं गृहं गेहोदवसितं वेश्म सद्म निकेतनं ५

ष्टिकाकटकादिरचितवेष्टनस्य नामानि॥ प्राचीन प्राचीयते चिञ् चयते नगरादेः प्रांतभागे या इति वेष्टनं वेणुकटकादीनां तत्प्राचीनमित्यर्थः॥ प्रांतत॥ वृति व्रियतः नया वृञ् वरणे॥ भित्ति भिद्यते भिदिर् विदारणे॥ भित्ति कुड्ये प्रभेदे चेति हेम॥ कुड्य कुड्यां साधु कुड्यते वा कुडु कार्कश्ये द्वे भित्ते अभिधाने॥ एडूक इड्यते इड स्तुतौ॥ अंतर्न्यस्तकीकस अंतर्न्यस्तानि कीकसानि अस्थीनि दार्व्यार्थं यत्र तत् एडूकं कीकसं कठिनद्रव्यस्य उपलक्षणं एकनाम॥ गृह गृण्हाति गृहू उपादाने॥ गेह गेनगणेशेन ईह्यते काम्यते इह चेष्टायां गोगणेशो गंधर्वो वा॥ उदवसित ऊर्ध्वं अवसीयते स्म षिञ् बंधने॥ वेश्म विशत्यत्र विश प्रवेशने॥ सद्म सीदत्यस्मिन्॥ निकेतन निकेत्यते अस्मिन् कित निवासे ५

आवेशनं आविशन्त्यत्र विश्रामं वेशने आवेशनं शिल्पिशाले गृहावेशप्रवेशयोरिति विश्वमेदिन्यौ ॥ शिल्पिशाला शिल्पिनां शाला शिल्पशालेत्यपि पाठः तत्र शि
ल्पस्य शालेति मुकुटस्वामी इति द्वे स्वर्णकारादीनां शालाया अभिधाने ॥ प्रपा प्रपिबन्त्यस्यां पाने ॥ पानीयशालिका पानीयस्य शालिका इति द्वे पानीयस्य शालाया
पाणपोही इति प्रसिद्धाया अभिधाने ७ छात्रादिनिलयः शिष्यादीनां गृहं मठ इत्युच्यते मठन्त्यत्र मठ मदनिवासयोः यद्वा मठति निवासयतीति ॥ छात्रान्तेवास्यादिर्ये
षां परिव्राजकक्षपणकादीनां तेषां निलय इति वा आदिना कापालिकादिसंग्रहः ॥ गजा गजत्यस्यां गजिशब्दार्थः गजा खनोऽसुरागृहं गज स्यात्सुसिरालायां
भाण्डागारे तु न स्त्रियामिति विश्वमेदिन्यौ ॥ मदिरागृहं मदिराया गृहं इति द्वे मद्यस्थानस्य अभिधाने ॥ गर्भागारं गर्भ इवागारं ॥ वासगृहं वासस्य गृहं इति द्वे

आवेशनं शिल्पिशाला प्रपा पानीयशालिका ७ मठश्छात्रादिनिलयो गजा तु मदिरागृहं गर्भागारं वासगृहमरिष्टं सू
तिकागृहं कुट्टिमोऽस्त्री निबद्धा भूश्चन्द्रशाला शिरोगृहं ८ वातायनं गवाक्षोऽथ मण्डपोऽस्त्री जनाश्रयः

गृहमध्यभागस्याभि-
धाने ॥ अरिष्टं नास्ति अरिष्टमत्र यद्वा नीरिष्यतेऽस्य हिंसेति रिषु हिंसायां अरिष्टं लशुने निम्बे फेनिले काककङ्कयोः अरिष्टमशुभे तक्रे सूतिकागारआसवइति
विश्वमेदिन्यौ ॥ सूतिकागृहं सूतेर्वस्तु तस्या गृहं इति द्वे प्रसवस्थानस्याभिधाने चत्वारोऽपि पर्याया इत्यन्ये ॥ कुट्टिमं पाषाणादिनिबद्धा भूः स कुट्टिम इत्येक
भूमिगृह तळघर इति प्रसिद्धस्य नाम ॥ चंद्रादिहृय गृहोपरितनगृहस्य नाम ॥ वातायनं वातस्यायनं ॥ गवाक्षः गवां अक्षीव गवामीशा रुवा रुण्या गवाक्षीजालके
कपाटिनि विश्व इति द्वे गवाक्षस्य झरोका इति प्रसिद्धस्याभिधाने ॥ मण्डपः पारक्षणे मण्डिः भूषायां च ॥ जनाश्रयः जनानां आश्रय इति द्वे मण्डपस्याभिधाने ॥

धनिना धनवता वास गृहतत्हर्म्यादि हरतीतिमन. त्त्म्हरणे आदिनास्वस्तिकादूालिकादेर्गृहणं ॥ देवानांराज्ञान्चगृहंप्रासादः प्रसीदतिमनोत्र एकंनाम ॥ सौध· सुधान्लेपोऽस्यास्ति यद्वा सुधयालिप्त. ॥ राजसदनं राज्ञःसदनं योग्यत्वात् ॥ यद्वा सदनानांराजा इतिराजसदनं ॥ उपकार्या ॥ उपकारिका उपकरोतीति इतिचत्वारिराजगृहस्यनामानि ॥ स्वस्तिक· स्वस्तिक्षेमंकायति कैशब्दे ॥ सर्वतोभद्र· सर्वतोभद्रमत्र ॥ नद्यावर्तः नद्यतीतिनंदी आवर्तोऽत्र १० विच्छंदकः विशिष्ट· छिंदोऽत्र यद्वा विशिष्टान्छंदयति साभिलषवान्करोति ॥ प्रभेदाः प्रकर्षः भेदोयेषा स्वस्तिकादयईश्वरसद्मनांराजगृहाणांप्रभेदाःभवंति ॥

हर्म्यादिधनिनांवासःप्रासादोदेवभूभुजां ९ सौधोऽस्त्रीराजसदनमुपकार्योपकारिका स्वस्तिकःसर्वतोभद्रोनंद्यावर्तादयोपिच १० विच्छंदकःप्रभेदाहिभवंतीश्वरसद्मनां स्त्र्यगारंभूभुजामंतःपुरंस्यादवरोधनं ११ शुद्धांतश्चावरोधश्चस्यादट्टःक्षौममस्त्रियां प्रघाणप्रघणालिंदाबहिर्द्वारप्रकोष्ठके १२

भूभुजां स्त्र्यगारं स्त्रीणा भगार अंत.पुरं ॥ अवरोधनं अवरुध्यंतेऽत्र ११ शुद्धांतःशुद्धाः अंतेसमीपेयस्य ॥ अवरोध. अवरुध्यतेऽस्मिन् इतिचत्वारिनामानि ॥ अट्टः अस्यते अट्टअतिक्रमणे अट्टयतीतिवा ॥ क्षौमं क्षुवंत्यत्र टुक्षुशब्दे इति द्वेहर्म्यादिपृष्ठस्यउपरिगृहस्य माडीइत्यादिख्यातस्यअभिधाने ॥ प्रघाण· हन्यते नाड्यते आगारैकदेशो ॥ प्रघणः प्रघाणश्चेतिसाधु: प्रघणोलिंदकेताम्रेकलशेलोहमुद्गरइतिहैमः ॥ अलिंदः अल्यते भूष्यते अलभूषणादौ ॥ आलिंदोपि गृहैकदेशे आलिंदःप्रघाणःप्रघणस्तथाइत्यमरमाला इतित्रीणिद्वाराग्रवर्तिचतुष्कस्यनामानि १२

गृहावग्रहणी गृह्यते अवगृह्यतेऽनया गृह उपादाने ॥ देहली देहलातीति ला दाने इति द्वे गृहद्वाराधोभागस्य उम्बर इति प्रसिद्धस्याभिधाने ॥ अंगणं अंगम्यत्र
अगिगतौ अंगणं प्रांगणे यानकामित्याभगनामनेइतिनानार्थवर्गे विश्व ॥ चत्वर चत्यत चतेयाचने ॥ अजिर अजन्त्यत्र अज गतौ इति त्रीणि प्रांगणस्याभिधाना
नि ॥ शिला शिलति शिल उञ्छे इत्येकं द्वारस्याधोभागस्थितकाष्ठस्य नाम ॥ नासा नास्यते णास शब्दे इत्येकं नाम द्वारस्योपरिस्थितस्य दारुण इति १३ प्रच्छन्नं
प्रकर्षेण छन्नं ॥ अन्तर्द्वार अन्तःस्थितं द्वार अर्थकपार्श्वेचादिवत् इति द्वे गुप्तद्वारस्य खिड्कीसंज्ञस्य अभिधाने ॥ पक्षद्वार पक्षपार्श्वे द्वार ॥ पक्षक पक्ष इव इति द्वे पा

गृहावग्रहणीदेहल्यंगणचत्वराजिरे अधस्ताद्दारुणिशिलानासादारूपरिस्थितं १३
प्रच्छन्नमन्तर्द्वारंस्यात्पक्षद्वारंतुपक्षकं वलीकनीध्रेपटलप्रान्तेथपटलंछदिः १४

र्श्वद्वारस्याभिधाने प्रच्छन्नमन्तर्द्वारं स्यात्पक्षद्वारं तदुच्यते इति कात्यायनः पक्षद्वारपूर्वान्वयीत्यन्ये ॥ वलीकं वलति आवृणोति भित्त्यादि वल संवरणे ॥ नीध्र
नितरां ध्रियते धृङ् अवस्थाने नियमेन धरति जलमिति वा धृञ् धारणे इति द्वे गृहच्छादनस्य भित्तिबहिर्भागस्य वळचणपट्टी इति ख्यातस्याभिधाने ॥ पटल
प्रान्त पटलस्य छदिषः प्रान्ते ॥ पटल पटलाति ला आदाने पटलं तिलके नेत्ररोगे च्छदिषि सञ्चये परिवारे चेति हेम ॥ छदि छादयति छद अपवारणे
इति द्वे छादनस्य शाकार इति ख्यातस्य नामनी छदिः सान्तं स्त्रियां छदिषी १४

गोपानसी गोपायति गुपूरक्षणे यद्वा गवांगोभिर्वापानंगोपानंकिरणानांगृहण किरणैर्वातस्यातिनिवर्नयति ॥ वलभी वलति वलसंवरणे वलभि· वलभीइति
मूर्धन्यमध्योपि शब्दांतेवलभीचंद्रशालेसौधोर्ध्ववेश्मनीतिरभसः ओकोगृहंपटचालोवलभीचंद्रशालिकेतित्रिकांडशेषः॥ वक्रदारुणि वक्राणिदारू-
णि यस्मिन् इतिद्वेछादनार्थयद्वक्रदारुतत्रअभिधाने पटलाधारभूतवक्रकाष्ठइत्यर्थः पटलाधारवंशपंजरस्य ओमणकडणीवांसाइतिप्रसिद्धस्य सञ्ज्ञा
इत्यपिमतं॥ कपोतपालिका कपोतानांपालिका कपोतान्पालयतिवा॥ विटंके विशेषेणटंक्यतेऽत्र टकिबंधने इतिद्वेसौधादौकाष्ठादिरचितपक्षिगृहस्या
भिधाने १५ द्वाः द्वारयति द्ववरणे यद्वा द्वार्यते ॥ द्वारं॥ प्रतीहारः प्रतिह्रियते इतित्रयंद्वारस्यनामानानि तत्र द्वाः स्त्रियांरेफांतः॥ वितर्दिः विगतातर्दिर्हिं

गोपानसीतुवलभीछादनेवक्रदारुणि कपोतपालिकायांतुविटंकंपुंनपुंसकं १५ स्त्रीद्वार्द्वारंप्रतीहारःस्याद्वितर्दि
स्तुवेदिका तोरणोऽस्त्रीबहिर्द्वारंपुरद्वारंतुगोपुरं १६ कूटंपूर्द्वारियद्धस्तिनखस्तस्मिन्नथत्रिषु साऽस्या तर्दिर्हिंसायां ॥ वेदि

का विदंत्यस्यां॥ विद्लृलाभे इतिद्वेवेद्याःनामनी अंगणादिषु कृतस्योपवेशस्थानस्येतिवा वितर्दिः स्त्री वितर्दीइत्यपि॥ तोरणः तुरंत्यत्र तुरत्वरणहिंसयोः
तोलयंत्यत्रेतिवा तुलउन्माने रलयोरेकत्वं॥ बहिर्द्वारं बहिःद्वारं इतिद्वेतोरणस्य द्वारबाह्यभागस्याभिधाने ॥ पुरद्वारं पुरस्यद्वारं॥ गोपुर गोपायतीति गु-
पुरक्षणे यद्वा पुल्यते पुलमहत्वेरलयोरभेदः गोभिःपुरं इतिद्वेनगरद्वारस्याभिधाने १६ कूटं पुरद्वारि नगरद्वारेस्करवेनावतरणार्थकृतस्यकृत्रिमनिम्न
स्यमृत्तिकापुंजस्यप्रकूटंसहस्तिनखइत्युच्यते हस्तिनःनखइव हस्तिनानखन्यतइतिवा खलुअवदारणे इत्येकंनाम

कपाट कपाल शिनोत्यापटयति प्सगोंतो कवाटमित्यन्ये तत्र कवरनौ वटवेप्टने कवशब्दस्मर्लोनिपा कुशब्दे ॥कवाटस्थकपालस्मभिपुस्याददररननेतिवात्स्पति. कवाटस्थार रामितिनिकाडशेषः॥ अरर इतिद्वकवाटइतिख्यातस्याभिधाने॥तद्विष्कंभ तस्यकपाटस्यअवष्टंभकयन्मुसर्वलंतदर्गलमित्युच्यते १७ आरोहण आरूह्यतेऽनेन रुहमाद्युर्भा वे॥सोपानं इतिद्वेसोपानस्य पायरीइतिख्यातस्याभिधाने॥निश्रेणि नियताश्रेणि पंक्ति यस्या॥अधिरोहिणी अधिरुह्यतेऽनया इतिद्वयनिसणि शिडीइतिख्या तस्य॥संमार्जनी संमृज्यतेऽनया मृजशब्दे॥शोधनी शोध्यतेऽनया शुधशौचेइतिद्वेसारणीकेरसुणीइतिख्यातस्यअभिधाने॥सकर सर्वकीर्यते क्षिविक्षेपेइ सायाचा॥ अवकर अवकीर्यतेइतिद्वय १८ सुरव सुरवउपाये मारभेभेषनि सरणास्ययोरितिद्वेष ॥नि सरण निःसरत्यनेनसृगतो इतिद्वगृहादेर्मुखभूतस्य द्वार

कपाटमररतुल्येतद्विष्कंभोऽर्गलनना १७ आरोहणस्यात्सोपाननिश्रेणिस्त्वधिरोहिणी समार्जनीशोधनीस्यात्संकरोऽ वकरस्तथा १८ क्षिप्तेमुखनिःसरणसन्निवेशोनिकर्षण. समौसवसथग्रामौवेश्मभूर्वास्तुरस्त्रियां १९ ग्रामातउप शल्यस्यात्सीमसीमेस्त्रियामुभे प्रदेशास्य उसदार खुटीलदारइतिख्यातस्यनामनी॥सन्निवश सतिविशतेऽत्र विशप्रवेशने॥निकर्षण कर्षणान्निर्गत इतिद्वसमीचीनवासस्थानस्य पुरादौगृहादिरचनापरिछिन्नदेशस्येत्यर्थ॥सवसथ सवसत्यत्र वसनिवासे॥ग्राम ग्रसते ग्रस अदनेइतिद्वेग्रामस्य नामनी॥वश्मभू वेश्मनोभू॥वास्तु वसत्यत्रेति वास्तुरुच्यते इतिद्वेगृहरचनावच्छिन्नभूमे नामनी १९ ग्रामाते ग्रामस्यअंत तत्र॥उपशल्य शल्यमुपगतग्रामप्र त्यंतोपलक्षण अतएव उपकंठोपशल्येद्वेइतिनिकाडशेष ग्रामांतमुपशल्यमित्यपिपाठ ॥तत्रग्रामस्यांतसमीप॥सीम॥सीमा सीयते षिञ्बंधने नामन् सीम इत्यादिनानिपात इतिद्वेग्रामादेर्मर्यादायाअभिधाने॥पूर्वेनकारात उभेद्वेस्त्रियाम्

घोषः घोषंतिगावोऽत्र घुषिरविशब्दने अन्यमतेशब्देइति ॥आभीरपल्ली आभीराणापल्ली आभीरपल्लिरित्यपिपाठः कुटीग्रामकयोःपल्लिरितिशाश्वतः इतिद्वेगोपाल ग्रामस्यतद्वेहस्यवाअभिधाने ॥पक्कण. पच पचंतीतिपच क्किप् कणायत्र ॥शबरालय शवंति शवरा तेषामालयः इतिद्वेभिल्लग्रामस्य २० इतिपुरवर्ग. महीध्र महीधरति धृञ्धारणे ॥शिखरी शिखरमस्यास्ति शिखरीस्यादपामार्गेशैलपादपयो पुमान् ॥क्ष्माभृत् क्ष्माबिभर्ति डुभृञ्धारणपोषणयो. न्हियंते ह्लञ्हरणे ॥अहार्य. नहार्य. ॥धर. धरति धृञ्धारणे ॥धर.कूर्माधिपेगिरौ ॥पर्वत पर्वाणिसत्यत्र यद्वा पर्वति पर्वपूरणे ॥अद्रि. अत्ति अद्यतेवा अदभक्षणे ॥गोत्र गोत्रायते त्रैङपालने गोत्रंक्षेत्रेन्वयेछत्रेसंभाव्येबोधवर्त्मनो. वनेनाम्निचगोत्रोद्रौगोत्राभुविगवांगणेइतिहेमः ॥गिरिः गिरति गृणातिवा गृनिगरणे ॥ग्रावा ग्रस-

घोषआभीरपल्लीस्यात्पक्कणःशबरालयः २० इतिपुरवर्गः महीध्रेशिखरिक्ष्माभृदहार्यधरपर्वताः अद्रिगोत्रगिरिग्रा वाऽचलशैलशिलोच्चयाः १ लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत्समौ

ते ग्रसअदने ॥अचलः नच लति चलकंपने अचलस्तुगि रिकीलयो. अचलाभुवीतिहेम. ॥शैल. प्रचुराः शिलाःसंत्यत्र ॥शिलोच्चयः शिलाभिरुच्चीयते चिञ्चयने इतित्रयोदशपर्वतसामान्यस्याभिधानानि १ लोकालोक. लोकालोकौप्रकाशांधकारावत्रस्तः लोकृदर्शने अंतर्बहि सूर्यकिरणाभ्या स्पर्शास्पर्शाभ्यां ॥चक्रवाल. चक्रंमंडलंवलते वलवेष्टने डलयोरेक लस्मरणाच्चक्रवाडोऽपि यद्वा चक्राकारेणवाडते वाडआप्लाव्ये चक्रवालमस्यास्ति इतिवा चक्रवालोद्रिभेदेस्याच्चक्रवालंतुमंडलइतिहेम. इतिद्वेसप्तद्वीपवल्याभूमे प्राकारवत्स्थितगिरेर्नामनी ॥त्रिकूटः त्रीणिकूटान्यस्य त्रिकूटसिधुलवणेत्रिकूटः पर्वतांतरइतिहेमः ॥त्रिककुत् त्रीणिककुदसदृशानिशृंगाण्यस्य इति द्वेत्रिकूटाचलस्यनामनी

अस्त अस्यतिस्म अस्तदीप्ता यद्वा अस्यनेस्म अस्तक्षेपणे अस्तक्षितेप्यवसितेमिथुनाप्यश्चिमाचलेऽपीतिविश्वमेदिन्यौ ॥ चरमस्याग्रत् चरत्यत्र चरगतौ द्वे अस्ताचलस्य नाम्नी ॥ उदयः उयन्तिग्रहा अस्मात् इणगतौ उदय पर्वतोऽभ्युदयोऽरितिहैम ॥ पूर्वपर्वत इतिरेकउदयाचलस्यनाम्नी २ हिमवान् हिममस्त्यत्र ॥ निषध निषीदति निषध कठिनेदेशेतद्रजेपर्वतान्तरेइतिविश्वमेदिन्यौ ॥ विंध्य विरुद्ध्यापयति अर्थिनाया ॥ माल्यवान् माल्याकारतास्यास्ति ॥ पारियात्रक परितोयात्रा यस्यत पारियात्रिकइत्यपिपाठ ॥ गंधमादन गंधेनमादयति गंधमादनइतिसुर्लिंगोप्यन्यत्र स्याद्गंधमादनेमृगे गंधकेवानरान्तरे स्त्रीसरापानगेनस्त्रीदतिमेदिनी ॥ हेमकूटः हेम्न कूटोराशिः हिमवानिबादयःसप्तपर्वतविशेषा आदिशब्दान्मलयदर्दुरचित्रकूटमैनाकसह्यादिग्रहण ॥ पाषाण पिनष्टि पिष्लृसंचूर्णने च

अस्तरत्वचरमक्ष्माभृदुदय पूर्वपर्वत २ हिमवान्निषधोविंध्योमाल्यवान्पारियात्रक गंधमादनमन्येचहेमकूटाद

योनगा ३ पाषाणप्रस्तरग्रावोपलाश्मान शिलादृषत् कूटोस्त्रीशिखरश्रृंगंप्रपातस्त्वतटोभृगु ५ हा पघलनेन पषबाधेम

येन अणति अणशब्दे पाषश्चासौआणश्चपाषाण ॥ प्रस्तर प्रस्तृणाति स्तृञ्आच्छादने ॥ ग्रावा गिरति गृणातिवा गृनिगरणेशब्देवा यद्वा गिरति गृसेके अवतिअस्मरुणादौग्रन्मासावधान ॥ उपल उपलाति लाआदाने यद्वा पलति पलगतौ ओ शासा पल चोपक ॥ अश्मा अश्नुते अशूव्याप्तौसंघातेच ॥ शि ला शिलति शिलउंछे ॥ दृषत् दृणाति दृविदारणे इतिसप्तपाषाणस्य शिलादृषदौस्त्रियां ॥ कूट कुटयति कूटदाहे कूट्यतेवा ॥ शिखर शिखाऽस्यास्ति ॥ श्रृंग णाति शृहिंसाया श्रृंगप्रभुत्वेशिखरेचिन्हेक्रीडाम्बुयन्त्रके त्रयमपिपुन्नपुंसकलिंगमितित्रीणिपर्वताग्रस्याभिधानानि ॥ प्रपात प्रपतत्यस्मात् पत्लृगतौ प्रअ तट नतटमत्र ॥ भृगु भृज्जति भृज्यतेवा भ्रसजपाके त्रीणिपर्वतासत्ततटस्यानस्य ४

अद्रेर्नितंबोमध्यभाग कटकइतिप्रोच्यते कटति कस्यनेवा कटवर्षावरणयोः एकंपर्वतमध्यभागस्यनाम ॥ स्नु. स्नौतिजलं स्नातिवा ष्णुप्रस्रवणे ॥ प्रस्थः प्रतिष्ठ- तेऽत्र प्रस्थोस्त्रियामानभेदेसानावस्कच्चवस्तुनि ॥ सानुः सनोति षणुदाने त्रीणिपुंनपुंसकलिंगानि समभूभागे पर्वतैकदेशे ॥ उत्स उन्नतिजलेन उंदीक्लेद ने ॥ प्रस्रवणं प्रस्रवत्यापोऽस्मात् स्नुगतौ हृयत्रपानीयंनिपत्यवहुलीभवति तस्य स्थानस्याभिधाने ॥ वारिप्रवाह वारिणःप्रवाह ॥ निर्झर ॥ झरः ॥ त्रीणिनिर्ग तजलप्रवाहस्य झराइतिख्यातस्याभिधानानि ॥ दरी दृणाति दृविदारणे ॥ कंदरः कज्जलंदीर्यते ॥ इतिद्वेपर्वतस्यगृहाकारकृत्रिमाविवरस्यनामनी ॥ पाक्षिके

कटकोऽस्त्रीनितंबोऽद्रेःस्नुःप्रस्थःसानुरस्त्रियौ उत्सःप्रस्रवणंवारिप्रवाहोनिर्झरोझरः ५ दरीतुकंदरोवास्त्रीदेवखात
बिलेगुहा गह्वरंगंडशैलास्तुच्युताःस्थूलोपलागिरेः ६ खनिःस्त्रियामाकरःस्यात्पादाःप्रत्यंतपर्वताः उपत्यकाद्रेरा
सन्नाभूमिरूर्ध्वमधित्यका ७

कंदराभवति देवखातबिल देवैःखातंखनितनपतबिलंतस्मिन्बिलेद्वेअभिधाने ॥ गुहा गाह्यते गाहूवि- लोडने ॥ गह्वरं देवखातेबिलेगुहेति गह्वरबिलदंभयोरितिशाश्वतः ॥ गिरे. सकाशाच्च्युता पतितायेस्थूलपाषाणास्तेगंडशैलाइत्युच्यते गंडाइवशैलाः शैलानांगंडाइव ६ खनिःखन्यते खनुअवदारणे ॥ आकर आकुर्वत्यत्र आकीर्यतेनिधानवोऽत्रवा कृविक्षेपे खानिरित्यपिपाठः खनिरेवपतारवानिरिति द्विरूपकोश. द्वेरत्नाद्युत्पत्तिस्थानस्य ॥ पादाः पद्यंतेएभिः पदगतौ ॥ प्रत्यंतपर्वता प्रत्यंतेमहीध्राणांसमीपेयेक्षुद्राःपर्वताःइतिद्वेपर्वतसमीपस्थक्षुद्रपर्वता नामभिधाने ॥ अद्रेः अधःसन्निहिताभूमिरुपत्यकेत्युच्यते ॥ अद्रेःरूर्ध्वायाभूमिःसाऽधित्यका ७

।ना धातु भद्दर्यन्मन शिलादिमधातुरित्युच्यते धातवो हरितालमन शिलादिगैरिकान्तानि रूप्यताम्रादि हरितालमन शिला गरिकाञ्जनकासीससीसलोहाश्चदिशु
ला गधकाः भरत्यायाधानवोगिरिसंभवाइति दधतिशोभागिनिधातवः गैरिकतुविशेषणधातु धातुशब्देनैवप्रसिद्धत्वात् एकगारूवाविदतिरव्यातस्मा
म॥निकुञ्ज ॥कुंज कुञ्जन्ति कुजिअव्यक्तेशब्दे ह्येलतादिपिहितोदरेइति लताद्याच्छादितगर्भोअभिधाने विकल्पेनहृष्यंकुंजमपि आदिशब्देनतृणादीना
सग्रह ८ इतिशैलवर्ग अटवी अटत्यत्र अटगतौ॥अरण्य अर्यतेऋगतौ॥विपिन विशेषेणपिवत्यत्रपिगतौ॥गहन गाहते गाहृविलोडने ऋच्छ्रगहनयो

धातुर्मन शिलाद्यद्रेर्गैरिकंतुविशेषत निकुञ्जकुञ्जौवाक्लीबेलतादिपिहितोदरे ८ इतिशैलवर्ग
अटव्यरण्यंविपिनंगहनंकाननंवनं महारण्यमरण्यानीगृहारामास्तुनिष्कुटा १ आराम
स्यादुपवनंकृत्रिमंवनमेवयत् आमात्यगणिकागेहोपवनेवृक्षवाटिका २

रितिनिर्देशात्ह्रस्व ॥कानन कानयति दीपयतिस्मरादिकमितिशेष. यद्वा कजलं अननं जीवनमस्येति॥वन वनति वनसंभक्तौ वननपुसकेनोरी
सालयकाननेइतिषट्अरण्यस्यनामानि तत्राटवीस्त्रिया॥महारण्य महच्चतदरण्यञ्च॥अरण्यानी इतिद्वेमहारण्यस्यनामनी॥गृहारामा ॥निष्कुटा
कुटाद्गृहान्निष्क्रान्तानिष्कुटा १ यत्कृत्रिमकृत्यानिर्दिष्टवनतत्र आराम आरमत्यत्र॥उपवन इतिद्वेनामनी॥वृक्षवाटिकेत्येक वट्यते वट्वेष्टने आमात्या
नावेश्यानाञ्चयद्गृहोपवनंतस्मिन् २

यद्राज्ञ साधारणप्रमदाभिरन्यैर्वासहक्रीडाद्यर्थंवनतत्र आक्रीड आक्रीडत्यत्र क्रीडविहारे॥ उद्यान उद्यांत्यत्र यामापणे ज्ञेयमाक्रीडमुद्यानमित्यमरमालाया मार्क्रीडम्याापिक्रीाबलमुक्त उद्यानस्यान्निःसरणेवनभेदेप्रयोजने गतदुद्यान अतःपुरोचित राज्ञीनामेवक्रीडायामुचितंचेत्प्रमदवनस्यात् ङ्यापोरितिन्ह्र-स्व. ३ वीथी वीथ्यते विथृयाञ्चने॥ आलिः अलति अलभूषणादौ ॥ आवलि. आवलति वल्संवरणे॥ पंक्ति. पचते पचिविस्तारे ॥ श्रेणी श्रियते श्रिञ्से-वायां पनपक्तेः नामानि॥ लेखा रेखा लिख्यते लिख अक्षरविन्यासे ॥ राजि. राजति राजृदीप्तौ ङ्लेखानामनी॥ सांतरापंक्ति निरंतरालेखावा॥ वनसमूहे

सुमानाक्रीडउद्यानंराज्ञःसाधारणंवनं स्यादेतदेवप्रमद्वनमंतःपुरोचितं ३ वीथ्यालिरावलिःपंक्तिःश्रेणीलेखास्तु राजयः वन्यावनसमूहेस्यादंकुरोऽभिनवोद्भिदि ४ वृक्षोमहीरुहःशाखीविटपीपादपस्तरुः अनोकहःकुटःशालःप लाशीद्रुद्रुमागमाः ५ बनानासमूहेवन्या॥ अभिनवोद्भिदि उद्भिनत्तिभुव भिदिरविदारणे अंकुरइत्येक अक्यते अकिलक्षणे अकुरम्भाकु कुर.भोन्तइतिहलायुध ॥ वृक्ष. वृक्षति वृक्षवरणे॥ महीरुह मत्यांरोहति रुहबीजजन्मनिप्रादुर्भावेच ॥ शाखी शाखाऽस्यास्ति ॥ विटपी विटप·शाखाविस्तारोऽस्या-स्तीति अतइनिठनौ पादप पादे पिबति पापाने पादपोवृक्षपीठयोरितिहेम ॥ तरु. तरति तृप्लवनतरणयो ॥ अनोकह अनस शकटस्याकंगतिर्हति॥ कुट कुटति कुट-कौटिल्ये शालः सालइत्यपिपाठ साल सर्जतरौवृक्षमात्रप्राकारयोरपीति साल·पादपमात्रेस्यात्प्राकारइतिगोर्दनी विश्वप्रकाशौ॥ पलाशी पलाशानिसन्त्यत्र पलाशीवृक्षरक्षसोरितिविश्वमेदिन्यौ॥ द्रु ॥ द्रुम द्रुशाखास्त्यस्य ॥ अगम· गच्छति गम्लगतौ इतित्रयोदशवृक्षनामानि ५

कोे

पुष्पात्प्रजातैः फलैरुपलक्षितावृक्षोवानस्पत्यः वनस्पतेर्भाव इत्येकम् आम्रादेर्नाम॥ अपुष्पात्पुष्पंविनाप्रजातैस्तैः फलैरुपलक्षितोवृक्षोवनस्पति इत्येकम् पनसोदु
म्बरादेर्नाम॥ द्रुमपर्याये ऽपिवनस्पतिः वनस्पतिर्नाद्रुमान्तेविनापुष्पफलिद्रुमइतिमेदिनीकोशात्॥ फलपाकान्ता फलपाकान्तावसानायासांता ओषध्यः भवन्ति
ओष प्रोषादीभिर्धीयते ऽत्र दुधाञ्धारणपोषणयो इत्येकम् व्रीहियवादे नाम॥ अवन्ध्य नवन्ध्यः अवन्ध्य॥ फलेग्रहि फलानिगृह्णातिग्रहउपादाने इति
द्वेयथाकालफलधरस्यनामनी ५ वधेसाधु वन्ध्य॥ अफल नफलान्यस्य॥ अवकेशी अवसन्नाः केशायस्य सोऽस्तिदृश्यतत्वेनास्यसोऽवकेशीइत्याख्या इति

वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः ओषध्यः फलपाकान्ताः स्युरवन्ध्यः फलेग्रहिः ६ वन्ध्योफलोवकेशीचफलवान्फ
लिनःफली प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ७ फुल्लश्चैतेविकसितेस्युरवन्ध्यादयस्त्रिषु स्थाणुर्वानाध्रुवःश
कुर्ह्रस्वशाखाशिफः क्षुपः ८ त्रीणिऋतावपिफलरहितस्यनामानि॥ फलवान् फलानिविद्यन्तेयस्य॥ फलिन॥ फली फलादिनि इतित्रीणिस-
फलस्याभिधानानि॥ प्रफुल्ल प्रफुल्लति फुल्लविकसने॥ उत्फुल्ल॥ संफुल्ल॥ व्याकोश व्याकोशाव्यावृत्त कोशा सकोशास्यात्॥ विकच विगतःकचोऽस्मात्॥ स्फु
ट स्फुटति स्फुटविकसने स्फुटोव्यक्तप्रफुल्लयो ७ फुल्ल एते ऽष्टविकसितेपुष्पितेस्यु अवन्ध्यादय अवन्ध्योऽफलइत्यादयोविकसितान्तास्त्रिषुभवन्ति॥ स्था-
णु स्थाणु कीलेहरेपुमानस्त्रीध्रुवइतिहैम॥ वाना रूपभेदात्क्लीवत्व॥ ध्रुव ध्रुवति ध्रुवगतिस्थैर्ययो पाठान्तराभिप्राय॥ शङ्कु शङ्कते ऽस्मात् शङ्किशङ्कायांची
णि शाखापत्ररहितवृक्षस्यनामानि॥ ह्रस्वशाखाशिफ शाखाप्रसिद्धा शिफाहस्वमूल ह्रस्वेशाखामूलेयस्यसक्षुप स्यात् क्षौति टुक्षुशब्दे एकं ८

अप्रकांडे नविद्यतेप्रकांडोयस्यतत्र ॥ स्तंब स्तभ्नाति प्रागतिनिरोधयो ॥ गुल्म गुडति गुडरक्षायां गुडजयोरेकत्व इतिहैम रूपगस्मिन्नगुल्मस्यनामानी ॥ वल्ली वल्लते वल्लसंवरणे च लीतुवल्लि.सरणइतिवाचस्पति· वल्लिरिति पाठ इतिहैं०॥ व्रतति प्रतनोति तनुविस्तारे पम्यतु व्रततिर्व्रततीस्तथेतिहलायुध· व्रततिस्त्रस्तनानिन्याविस्तारेइति हला युध यद्वा व्रतमिव करोति ॥ लता लतति सौत्रोधातुर्वेष्टनार्थः त्रीणिलतामात्रस्यनामानि शाखापत्रप्रचयप्रतानः सोऽस्यास्ति ॥ वीरुत् विरुणद्धि रुधिरआवर णे ॥ गुल्मिनी गुल्मः प्रतानोऽस्त्यस्याः ॥ उलपः उलति उल सौत्र आवरणार्थोदाहार्थोवा शाखापत्रप्रचय प्रतानः सोऽस्त्यस्याः सा प्रतानिनी वीरुदादिन्त्रयवा—

# अप्रकांडेस्तंबगुल्मौवल्लीतुव्रततिर्लता लताप्रतानिनीवीरुद्गुल्मिन्युलपइत्यपि ९ नगाद्यारोहउच्छ्रायउत्सेधश्चो च्छ्रयश्चसः अस्त्रीप्रकांडःस्कंधःस्यान्मूलाच्छाखावधिस्तरोः १० समेशाखालतेस्कंधशाखाशालेशिफाजटे

न्या ॥ शाखादिभिर्विस्तृतालता तवेत्यर्थः ९ नगाद्यारोह. नगस्यतरो आरोहण उच्चत्व आरोहोदैर्घ्यउच्छ्रायेस्त्रीकट्यांमानाभ्याप आरोहणोगजारो हइतिहैम· आदिशब्देनगिरिदेवालयादितत्र ॥ उच्छ्राय उच्छ्रयण श्रिञ्सेवायां ॥ उत्सेध उत्सेधनं षिधुगत्यां उत्सेधस्तूच्छ्रयेनरस्योर्द्ध्वावस्थानेपिनोतितमे मिश्री इतित्रीणि वृक्षादिदैर्घ्यस्यनामानि ॥ प्रकांड प्रकाडयते कडिभेदने प्रकाडोविटपेशस्तेमूलस्कंधांतरेतरोरितिहैम· ॥ स्कंध स्कन्दति आरूढाने स्कंदिगति शोषणयो इतिद्वेतरोर्मूलमारभ्यशाखापर्यंतोयोभागस्तस्यनामानी १० शाखा शाखति शाखृव्याप्तौ ॥ लता द्वेशाखायाः अ० ॥ स्कंधशाखा ॥ शाला शा लते शालृचलने द्वे प्रधानशाखायाः अभि० स्कंधात्प्रथमोत्पन्नशाखायाइत्यर्थः ॥ शिफा शंभेर्गोशोडस्तासे शिफाजटायांमात्रितिस्यांगनायांतमातरि ॥ जटा जटति जटसंघाते द्वेतरुमूलस्य नामनी

का शाखाशिफा शाखाया शिफामूल अवरोहइतिकथ्यते पारोगा पारवा इतिप्रसिद्धस्यैकनाम॥मूलादृक्षमूलमारभ्याग्रपर्यंतगतलतागुडूच्यादिरप्यनगह्वइत्यस्यतएव मूलाद्यग्रगताशिफालतास्यादित्यपि ११ शिरोग्र श्रीयते श्रिञ्सेवायां शिराग्रशिखरम्प्रान्त॥शिखरवाना शिखाराति गच्छने॥मूल मूलति मूलमतिष्ठाया॥बुध्न बध्नाति बध्यतवा बधबधने॥अभिनामक अग्नेर्नामयस्य अग्निर्नापादमूलया इतिनोणिदृक्षादेर्मूलस्यनामानि॥सार सरति कान्तात्म्यगता॥मज्जा मज्जति तत्रमज्जानात नीरपुंसि क्वचिदाबन्ताःपिदृश्यते मागम ज्वामभीत्वक्स्त्रीइतिपाठ द्रुमस्त्वोषक्त्रीइतिहूपदृक्षाद स्थिरांशेगाभार्दतम्व्यातम्यनामनी॥त्वक्॥वल्क॥वल्कल वलति वलसवरणे इतिगोणित्वच अभिधानानि तत्रवल्कादिहृयक्लीबपुंसो १२ काष्ठ काश्यते काशृदीप्तौ काष्ठदारूणि

शाखाशिफाऽवरोहस्यान्मूलाचाग्रगतालता ११ शिरोग्रशिखरवानामूलबुध्नोऽभिनामक सारोमज्जानरित्वक्स्त्री
वल्कवल्कलमस्त्रियां १२ काष्ठदार्विधनलेधइध्ममेध समित्स्त्रिया निष्कुह कोटरवानावल्लरिमंजरिस्त्रियो १३

काष्ठातुधनपर्यन्तमानकइतिदृम॥दारुदीर्यतेइतिदारु पुन्नपुंसकयोर्दारुरितिनिकाडशेष इतिदृयाष्पमानस्यनामनी॥इंधन इंधेःग्निनेनञिइंधिदीप्तौ॥एध एधनेःनेन॥इध्म इध्यनेःनेन॥एध ञिइंधिदीप्तौ॥समित समिध्यतःनया इतिपचशुष्ककाष्ठादर्गास॰ आद्यनयअग्निसंदीपनतृणकाष्ठादे ज्वलनइतिप्रसिद्धस्यापि॰ अन्यहृययानादोहूयमानसमिदादेरितिपाक्त तत्र आद्यग्ध शब्द मान क्लीबे अन्यस्त्वदत पुंसि समित्शब्दोड्स्त्रान॥निष्कुह निष्क्रयेनकुहयन कुहविस्मापने॥कोटर कोटराति गच्छने इतिदृक्ष गतबिलस्यनामा॰॥कोटरवाना॥वल्लरि वल्लति वल्लसंवरण॥ऋच्छति ऋगतौ यद्वा वल्लमृच्छति॥मंजरि मंजुलमृच्छति क्वदिकागदक्तिनइतिसूत्रात् वल्लरी मंजरी इत्यपिदृतुलस्यादेर्गर्भनवाङ्कुरादि केसरइतिख्यातस्या॰ १३

पत्र पतति पतॢगतौ पत्रंतुवाहनेपर्णेस्यात्पक्षेशरपक्षिणोः॥ पलंसुन्मानमांसयो ॥ पलाश पलंमांसं अश्नाति अश्‌भोजने पलाशंच्छदनेक्लीबमितिहेमः॥ छदन छाद्यतेऽनेन छदअपवारणे॥ दल दलतीति दलविदारणे॥ पर्णं पिपर्ति पृपालनपूरणयोः यद्वा पृणाति पृणप्रीणने पर्णास्त्रीपत्रेपर्णंतुपत्रेइतिहेम ॥ छद: छद्यतेऽनेन छाद्यतेऽनेनवा॥ पल्लव पल्यतेलूयते पलगतौ लूञ्छेदने॥ किसलयं किंचित्सलति षल्गतौ किशलयमपीति हूपर्वादिषुनशाखायाःपर्वणि अभिधाने तत्र किसलयं मेक्लीबेच पुंसिक्लीबेचपल्लवइतितुव्याडिः॥ विस्तारः विस्तरणमस्त्यस्य स्तृञ्आच्छादने॥ तस्यैवशाखापल्लवसमुदायलक्षणआभोग विटपः प्रोच्यते विटान् पाति पारक्षणे इत्याद्यूह्य विटपोनस्त्रियांस्तंबशाखाविस्तरपल्लवइतिमेदिनीकोशः शाखायांपल्लवेस्तंबेविस्तारेविटपोस्त्रियामितिरभसश्च पल्लवादिचतुष्टय

## पत्रंपलाशंछदनंदलंपर्णंछदःपुमान् पल्लवोऽस्त्रीकिसलयंविस्तारोविटपोऽस्त्रियां १४ वृक्षादीनांफलंसस्यंवृंतंप्रसव बंधनं आमेफलेशलाटुःस्याच्छुष्केवानमुभेत्रिषु १५ क्षारकोजालकंक्लीबेकलिकाकोरकःपुमान्

मेकार्थकंवा अत्रैवं स्कंधादूर्ध्वंतरो.शाखाकटकोविटपोमतइतिकात्यात् १४ केचित्तु वृक्षादीनामिति पूर्वेणापिसबध्नन्ति॥ वृक्षादीनांफलं फलति फलनिष्पत्तौ सस्यमित्यप्युच्यते षपसस्तिस्वप्ने तालव्यपाठेशसुहिंसायां॥ शस्यते एवं॥ प्रसव.पुष्पादिःबध्यतेयेनतत्वृंतमुच्यते॥ वृणोति वृञ्वरणे एकदेशडेरवइतिख्यातस्यनाम॥ आमे अपक्वेफलेशलाटुरितिप्रोक्तंनाम शलति शलचलने अटति अट्गतौ शलश्चासावटुश्च॥ शुष्केफलेवानमित्येकंनाम॥ वायतिस्म पैओवैशोषणे वानंशुष्कफलेशुष्केसौवनेगमनेकटे जलसंप्लुतवातोर्मिसुरंगासौरभेषुचेतिहेमः उभेशलाटुवानेत्रिषु १५ क्षारक. क्षरति क्षरसञ्चलने जालक जालमिव इतिहेनवकलिकायाः अ०॥ तद्वंतस्यैत्यैकं॥ कलिका कलगतौ॥ कोरकः कुर्यते कुरशब्दे हेअविकसितकलिकायाः नामनी॥

गुच्छक गुध्यत गुधिपरिवेष्टने स्तबकेहारभेदेचगुच्छस्तबे।पिकीर्तितइतिरुद्र॥स्तबक स्तूयते एभ्यस्तकौ वुनप्रत्ययः यद्वा निपाति इतिविग्रह देकविकारिभि रार्कार्णस्यपल्लवग्रंथ नामनी केचित् विकसात्पुरवकलिकाया पुष्पादिस्तबकेगुच्छइतिनान्यातेरातिदेक॥कुड्मल कुड्यते कुडनिवा कुडच्छेदने कौटिल्येवा मु कुल मुचति कलिकाल मुच्लमोक्षणे इतिदेर्षद्विकसितकलिकाया नामनी १६ सुमनस सुष्ठुमन्यते आभि॥पुष्प पुष्यति पुष्पविकसने प्रसून प्रसूयतेसा॥कु- सुम कुस्यति कुससश्लेषण उमप्रत्यय कुसुमस्त्रीरजोनेत्ररोगयोरित्यक्त॥सुम सर्वसाधुसमानेषुसर्मस्यादभिधेयवत् इतिमेदिनी कुसुमसुममित्यपिपा ठ भूम्निस्त्रियासुमनसइतिरत्नकोश सुमना पुष्पमालत्योस्त्रियामितिमेदिनीकोश॥मकरद मकरमपि द्यति कामजनकत्वात् दोअवखडने यद्वा मकरम

स्याद्गुच्छकस्तुस्तबक कुड्मलोमुकुलोऽस्त्रिया १६ स्त्रियःसुमनस पुष्पप्रसूनकुसुमसुम मकरद पुष्परस पराग
सुमनोरज १७ द्विहीनेप्रसवेसर्वहरीतक्यादय स्त्रिया आश्वत्थवैणवप्लाक्षनैयग्रोधैंगुदफले १८

प्यदनि अदिबधने॥पुष्पर स पुष्पस्यरस इतिद्वे पुष्पस्यमधुनामनी॥पराग परागच्छति गम्लगतौ पराग कौसुमेरेणौधूलिस्नानीयकेऽपि गिरिप्रभेदेविख्यातावुपरागेचचदने॥सुमनोरज सुमनसारज द्वेपुष्परेणो १७ द्विहीन इत्यारभ्यापुंसाद्याद्वीन सर्ववक्ष्यमाणसकलौषधिजातीयस्त्रीपुल्लिंगहीनमश्वत्थकपित्थादिषुवर्तमानप्रसवेपुष्पेफलेषु च वर्तमाननपुंसकलिंगज्ञेयमित्यर्थ यथा चंपकसूरणमित्यादि नस्मिन्नविशेषमाह हरीतक्यादय स्त्रिया स्त्रीलिंगे हरीतक्या फलहरीतकी आदिशब्दान्द्रा क्षाकदलीकोशातक्यादीनासग्रह॥अश्वत्थस्यफलआश्वत्थ॥वेणो फलवैणव॥प्लक्षस्यफलप्लाक्ष॥न्यग्रोधस्यफलनैयग्रोध॥इंगुद्या फलऐंगुद॥बृहत्याःफलबार्हत॥ एकैकपुंसादिभ्याणिनिपुनरणविधानान्नलुक् १८

जनू जम्बा·फल जमति जमुअदने एवमेव जंबु जांबवं इतित्रीणिजम्बा फलनामानि ॥पुष्पेवर्तमानाः जातिप्रभृतयः प्रभृतिशब्दात् यूथिकामल्लिकेत्यादीना
ग्रहण स्वलिंगाएवभवति नतुक्लीबे तद्यथा जात्या.पुष्पंजातीस्त्री ॥व्रीहय फलेस्वलिंगा. यथा व्रीहीणा फलानि व्रीहयःपुंसि एवंमाषमुद्गयवादयोपिऊह्याः
१९ विदारी वृहती अंशुमती इत्याद्यामूलेऽपिस्वलिंगा· तद्यथा विदार्या· मूलविदारी ॥ अपिशब्देनपुष्पेऽपिस्वलिंगा· ॥ पाटलापुष्पेवर्तमानाक्लीबे यथा पा
टलाया पुष्पं पाटल अपिशब्दात्स्वलिंगा पाटल·कुसुमेवर्णेप्याशुव्रीहिश्चपाटल इतिशाश्वतकोशात्पुल्लिंगोपि ॥ बोधिद्रुमः बोधिश्चासौद्रुमश्च ॥ चल-

लाईतंचफलेजम्बाजंबूःस्त्रीजंबुजांबवं पुष्पेजातिप्रभृतयःस्वलिंगाव्रीहयःफले १९ विदार्याद्यास्तुमूलेऽपिपु
ष्पेक्लीबेपिपाटला बोधिद्रुमश्चलदलःपिप्पलःकुंजराशनः २० अश्वत्थेथकपित्थेस्युर्दधित्थग्राहिमन्मथाः त
स्मिन्दधिफलःपुष्पफलदंतशठावपि २१

दलः चलानिदलानियस्य ॥पिप्पल. पिप्पलंजलंअस्तियस्य मूलेसिक्तत्वात् पिप्पलंसलिलेव
स्त्रच्छेदभेदेचनातरौ इत्युक्तत्वात् ॥कुजराशनःकुंजरेणाश्यते अश्भोजने कर्मणिल्युट् २० अश्वत्थं नश्वश्चिरंतिष्ठति यद्वा अश्वत्थंजलमस्यास्ति
आप प्रज्ञाहितशीतमश्वत्थंपवनंविषमितिरत्नकोशः अश्वत्थःपिप्पलद्रोस्यादश्वत्थापिप्पलामताइत्युक्तत्वात् पंचपिप्पलवृक्षस्याभिधानानि ॥ कपि
त्थ अमरमालायांपवर्गतृतीयमध्योपि ॥ दधित्थः दधिवर्णास्तिष्ठत्यस्मिन् ॥ ग्राही गृण्हाति ग्रहउपादाने ॥मन्मथः मनोमथ्नःमन्मथः मनज्ञानेसंपदादित्वा-
त् क्विप् नलोपेतुक् मथतीतिमथेरच् ॥ दधिफलः दधिअस्तिफलेयस्य ॥पुष्पफल पुष्पयुक्तंफलमस्य ॥ दंतशठः दंतानांशठइव समकपित्थस्यकंवठइति
ख्यातस्याभिधानानि २१

को उदुंबर उद्धूपितमंबरमनेन उदतिशयेनाबतेवा अंबिशब्दे उदुंबरस्तुदेहल्यांवृक्षभेदेचषंडक कुष्टभेदेऽपिचपुमांस्ताम्रेपिस्यान्नपुंसकमितिविश्व मेदिन्यादवर्ग तृतीयमध्य बिकाडशाधप्येवमेव॥ जंतुफल जंतवःफलःस्य॥ यज्ञांग यज्ञमंगमिति अंगिगत्यर्थ॥ हेमदुग्धक हेमवर्णदुग्धमस्य चत्वारिउदुंबरस्य उंब रइतिख्यातस्यनामानि॥ कोविदार कुमपिविदारयति दृविदारणे॥ चमरिक चमरअस्यास्ति अतइनिठना॥ कुद्दाल कुउद्दालयति दलविदारणे॥ यु गपत्रक युगयुग्मपत्रमस्य चत्वारिकांचनइतिख्यातस्यनामानि २२ सप्तपर्ण कांडेकांडेसप्तपर्णान्यस्य॥ विशालत्वक् विशालात्वगस्य॥ शारद शा रदिपुष्प्यति शारदीनोयपिपल्यांसप्तपर्णेचविदस्तांतेपुरुद शारदोऽब्दस्तिपातायपिप्पलीसप्तपर्णयोरितिमेदिनी॥ विषमच्छद विषमा छदायस्य चत्वारिसा

उदुंबरेजंतुफलोयज्ञांगोहेमदुग्धक कोविदारेचमरिक कुद्दालोयुगपत्रक २२ सप्तपर्णेविशालत्वकुशारदोविष मच्छद आरग्वधेराजवृक्षशम्याकचतुरंगुला २३ नवणइतिख्यातस्याभिधानानि दुरधिगमवस्तून मात्रनसंज्ञयापिव्याख्याने नदोष तत्रैव प्रयोजनार्थवचनमहतिर्यत्नस्तत प्राकृतमित्यदोषइति किंच रसवीर्यविपाकेभ्योमूलाद्युष्पात्फलाद्दलात् आकारेद्देशकालावर्णैरोषध्य र्थमुन्नयेदिति आरग्वध आरगरोगशकामपिहंति इत्याद्युक्त आरग्वध आर्वधः इत्यादिरपि आरग्वधोपसंपाक कृतमालस्तथाऽग्वधइतिरत्नकोश। राजवृक्ष राजाचासौवृक्षश्च वृक्षाणाराजावा राजदंतादिरोगणाराजानवृक्षनीतिवा ओव्रश्चूछेदने॥ शम्याक शकल्याणपाकाऽस्य संपाक शंपाकश्च तदु- क्त संपाकस्तर्ककेधवेनिपुणाचतुरंगुलइतिमेदिनी॥ चतुरंगुल चतस्र अंगुल्य प्रमाणायस्य २३

आरेवत· आरेवयति निःसारयति मलसारकत्वात् रेवृप्लुवगतौ अतसातत्यगमने आरेवचासौअनश्च ॥ व्याधिघातः व्याधीनहंतीति ॥ कृतमालः कृतामालाऽ स्य पुष्पैरितिशेष. ॥ सुवर्ण. शोभनोवर्णोऽस्य ॥ सुपर्णकइतिवापाठः ॥ अष्टौबाहुवाइतिख्यातस्यनामानि ॥ जंबीर जभ्यते जभु अदने जंबीरःप्रस्थपुष्पे- स्यात्तथादंतशठद्रुमइत्युक्तत्वात् ॥ दंतशठ· दंतानाशठइव ॥ जभ· ॥ जंभीरः ॥ जंभल· पंचजांबेर लघुइडनिंबु इतिख्यातस्याभिधानानि २४ वरुणः वृ- ।नि वृञ्वरणे करणेवा ॥ वरणः ॥ सेतुः सिनोति सीयतेवा षिञ्बधने सेतुर्नालीकुमारकेइत्युक्तत्वात् ॥ तिक्तशाकः तिक्तःशाकोऽस्य तिक्तशाकस्तु

आरेवतव्याधिघातकृतमालसुवर्णकाः स्युर्जंबीरेदंतशठजंभजंभीरजंभलाः २४ वरुणोवरणः सेतुस्तिक्तशाकःकुमारकः पुन्नागपुरुषस्तुंगःकेसरोदेववल्लभः २५ पारिभद्रेनिंबतरुर्मंदारःपारि जातकः

खदिरेवरुणेपत्रसुंदरइत्युक्तत्वात् ॥ कुमारक· कुमारयति कुमारक्रीडायामित्यादि चिरतरुणत्वात् पंचवायवर्णाइतिख्या तस्य ॥ पुन्नाग. पुमान् नागइव ॥ पुरुषःपूरयति पुरअग्रगमने ॥ तुंग. तुंज्यते तुजिर्हिंसायां घञ् ॥ केसरः प्रशस्ताःकेसरायस्य अर्शआद्यच् केसरो नागकेसर. केशरइत्यपिपाठः ॥ देववल्लभः ॥ पचसंदसराइतिख्यातस्य २५ पारिभद्रः पारिमस्यास्तीति अतइनिः पारिपारंगलं भद्रंयस्य ॥ निंबतरुः नेयमयति यमउपरमे पृषोदरादि. निबति निविसेचने वर्णयोगैक्यं निंबसंज्ञकस्तरुः शाकपार्थिवादिः ॥ मंदारः मंदाःआराःयस्यवा मंदंऋच्छति ऋगतौ इ त्याद्यूह्यं ॥ पारिजात· पारि पारंगतजातं जन्मयस्य समुद्राज्जातोवा स्वार्थेक चत्वारि निंबतरो· कडूनिंबइतिख्यातस्याभिधानानि

तिनिश अतिशयेननेशति णिश्समाधौ यद्य अतिक्रान्तोनिशा निनिश पृषोदरादित्वात् अकारलोप ॥स्यदन स्यदते स्यंदूप्रस्रवणे॥ नेमि हस्वात संहितायां कृतादीर्घापदकाले निवर्तते॥ नयति णीञ्प्रापणे॥ नेमिः पुल्लिगस्त्विनिशोनेमिश्चक्रप्रान्तेस्त्रियामपीतिरुद्र ॥ रथद्रु रथस्यद्रु तनोपयुक्तत्वात्॥ अतिमुक्तक अतिशायितोमुक्तोविस्तारोऽस्य २६ वञ्जुल वच्यते वञ्चुगतौ॥चित्रकृत् चित्रकरोति ससन्तिचसइतिख्यातस्य॥ पीतन पीतकरोति तत्करोतीतिणिजन्तात् व हुलमन्यत्रापीतियुच्॥कपीतन तनोति तनुविस्तारे कपीनाकपेर्वर्णस्यवातन इत्याघूत्य॥आम्रातक आम्रमतति अतसातत्यगमने कपिचूताऽम्रात

तिनिशोस्यदनोनेमीरथद्रुरतिमुक्तक २६ वञ्जुलश्चित्रकृच्चाथद्वौपीतनकपीतनौ आम्रातकेमधूकेतुगुडपुष्पमधुद्रु
मौ २७ वानप्रस्थमधुष्ठीलौजलजेत्रमधूलक पीलौगुडफल स्रसीतस्मिन्स्तुगिरिसंभवे २८ कोस्यफलेपथकहरीतकीतिनि

काइशाघ त्रीणिअंबाडाइतिख्यातस्य॥मधूक मत्यते मन्यतेवा महपूजायां मनज्ञानेवा॥ मधुक ॥मधूल ॥मधुल ॥गुडपुष्प गुडइवपुष्पमस्य॥ मधुद्रुम मधुनामाद्रुम २७ वानप्रस्थ वानप्रस्थैवनेकदेशोभव वानप्रस्थोमधूकेपिस्यात्तृतीयाश्रमेपुमानितिरुद्र ॥मधुष्ठील मधुष्ठीवति ष्ठिवुनिरसने मधु लेगर्भःस्येतिवा पञ्चमोहाइतिख्यातस्यनामानि जलजेत्रमधूकेमधूलकइत्येकनाम मधुलाति लादाने गिरिजेत्रमधूलकइत्यपिपाठ गौरशाकामधूकोऽन्यागिरिजस्तो ऽन्यपत्रकइतिमाधव ॥मधूकोऽन्योमधूलस्तुजलजोदीर्घपत्रकइतिस्वामी॥ पीलु पीलति पीलप्रतिष्टंभे॥गुडफल गुडइवफलमस्य॥स्रसी स्रंसयति मल स्रंसु ८ पतन त्रीणिगुर्जरदेशपीलुवृक्षस्य अक्रोडइतिप्रसिद्धस्य तस्मिन्पीलौगिरिजे २८

अक्षोट अक्ष्णोति अक्षू व्याप्तौ अक्षस्येवउदाःपर्णान्यस्येतिवा ॥ कर्पराल: कर्परमलति अलभूषणादौ यद्वा कर्परारव्याऽस्ति कंदरालइतिवापाठः पूर्ववत् द्वे पर्वतपीलो अक्रोडइतिरव्यातस्य ॥ अंकोटः अक्यते अकिलक्षणे ॥ अकोट· अंकोल. इत्यपिपाठौ ॥ निकोचः निकुच्यते कुचशब्दे निकोटइत्यपिपाठः द्वे अंकोटस्यपिस्तेइतिरव्यातस्य ॥ पलाशः प्रशस्तानिपलाशानियस्य अर्शआद्यच् यद्वा पलंमांसमश्नाति अश्भोजने ॥ किंशुकः किंचित्शुकइव शुकतुंडाभपुष्पत्वात् ॥ पर्ण पृणाति पृणप्रीणने तौदादिकः यद्वा प्रशस्तानिपर्णानियस्य अर्शआद्यच् यद्वा पिपर्ति पृपालनपूरणयोः पर्णपत्रेकिंशुकेनाइतिप्रोक्त

अक्षोटकर्परालोद्वावंकोटेतुनिकोचकः पलाशेकिंशुकःपर्णोवातपोथोऽथवेतसे २९ रथाभ्रपुष्पविदुलशीतवानी
रवंजुलाः द्वेपरिव्याधविदुलोनादेयीचांबुवेतसे ३०

त्वात् ॥ वातपोथः वातंपोथयति पुथहिंसायां इतिचत्वारिपलाशस्य ॥ वेतसः नयते वेञ्तंतुसंताने २९ रथ· रम्यतेऽत्र रमुक्रीडायां रथःस्यंदनवानीराविल्यजय· ॥ अभ्रपुष्प: अभ्रमिवाभ्रसमयेवापुष्पमस्य ॥ विदुलः वेत्तिविद्यते वा ॥ शीत. शीतमस्यास्ति शीतमित्यपि शीतंतुपार वानीरबहुवारद्रुमेषुचेत्यजयात् ॥ वानीरः वायति ओवैशोषणे वंशुष्कं आसमंतान्नीरंयस्य ॥ वंजुल. वजति वजगतौ सप्तवेतसस्य वेतइतिरव्यातस्य ॥ परिव्याधः परिविध्यते व्यधताडने परिव्याधस्तुपुंसिस्याद्वेतसेचद्रुमोत्पले ॥ विदुलः ॥ नादेयी नद्यांभवा नद्यादिभ्योढक् नादेयीशब्दःस्त्रियां नादेयीनागरंगेस्याज्जायांयांजलवेतसे इत्युक्तत्वात् ॥ अंबुवेतसः अंबुनिजातोवेतसो शाकपार्थिवादि. इतिचत्वारिजलोत्पन्नवेतसस्य ३०

अरोसोभाजनोरक्तोरक्तपुष्पश्चत् मधुशिग्रुरिक्तच्यते गक॥सोभाजन शोभामनक्ति शोभाञ्जनइत्यपिपाठ शिनोति शिग्रुनिधान शिग्रुर्नाशाकमात्रेचशोभाञ्जन महीरुहः॥तीक्ष्णगन्ध तीक्ष्णागन्धोऽस्य॥आक्षीव आक्षीवति आक्षीवयनिवा क्षीवमदे अक्षीवइत्यपिपाठ ॥मोचक मोचयति मुच्ल्मोक्षणे पञ्चशिग्रुल शाखा शाखइतिख्यातस्य॥अरिष्ट नरिष्टमस्मात् अरिष्टोलशुनेनिम्बेफेनिलेद्राककेकया रिष्टक्षमात्वभावेपुसिस्वद्वेचफेनिलेइतिमेदिनी॥फेनिल फेनाःसन्त्यस्मिन् ॥रीठाइतिख्यातस्य ३१ बिल्व बेलयति बिल्वभेदने॥शाण्डिल्य शाण्डिल्यस्यगोत्रापत्यपुमान् शाण्डिल्यइवेतिवा॥शैलूष शिलूषस्यअपत्य शैलूषइवेतिवा॥ मालूर मालस्रीपरधार्द्धुलाति॥श्रीफल श्रीमत्फलश्रीप्रियत्वाफलमस्य शाकपार्थिवादित्वात् श्रीफल पुंसिमालूरेधात्रीनीलिकयाःस्त्रियां॥इतिपञ्चबिल्वस्य॥

सोभाञ्जनेशिग्रुतीक्ष्णगन्धकाक्षीवमोचका रक्तोसौमधुशिग्रुः स्यादरिष्टःफेनिलःसमौ ३१ बिल्वेशाण्डिल्यशैलूषौ मालूरश्रीफलावपि प्लक्षोजटीपर्कटीस्यान्न्यग्रोधोबहुपाद्वटः ३२ गालवःशाबरोलोध्रस्तिरीटस्तिल्वमार्जनौ

प्लक्ष प्लक्षइति सरसचलने यद्वा प्लक्षन प्लक्षभक्षणे प्लक्षत्यधोगच्छतीतिवा॥जटी जटति जटमधात॥पर्कटी पृच्यते एनासपर्क॥पर्कटीनूतनफलेपुणादौप्लक्षपादपइत्युक्तत्वात् इतिनीणिपिपर्यानामा॰॥न्यग्रोध न्यक्रुणद्धि रुधिरआवरणे न्यग्रोधस्तुसुमान्व्यामवटयोश्वशमीतरौ॥बहुपात् बहव पादाअस्य॥वट वटति वटवेष्टने॥ त्रीणिवटतरो ३२ गालव गालवस्यापत्य गालवामुनिभेद स्याल्लोध्रवृक्षचक्रीति ॥शाबर शबरगणामय॥लोध्र रुणद्धि रुधिर् आवरणे लोध्रोवरपकरेपुंसिका- र्तिकेयेगणाधिपइति ॥तिरीट तीर्यतेमनमनेन॥तिल्व तिल्यतःस्नेहात तिलस्नेह॥मार्जन मार्जननद्वयामार्जितैपुंसिस्याल्लोध्रशाखिनि इतिषट्लोध्रस्यनामानि न्यासो श्वेतलोध्रे शबरक्तलोध्रेइतिस्वामी॥

आम्र अम्यते अमगत्यादौ॥ चूत· चूष्यतेस्म चूषपाने पृषोदरादि· च्योततिरसमितिवा च्युतिरक्षरणे॥ रसाल रसमलति अलभूषणादौ इतित्रय आम्रस्यवाचका शब्दा. असौ आम्रःअति शयेनसौरभ· अतिसौरभश्चेत् सहकार· सहकारयति मेलयति इत्येकनाम ३३ कुम्भ. कउभाति उभभूषणे शकंध्वादिश्च कुंभेतिसघातविगृहीत कुंभ. क्लीबंतुगुग्गुलाविनिरभस. कुंभोलू खलक कुंभोलूखलकं कुंभोलूखलाकाराहृस्वकोशान्निर्यात कुंभोलूखलककुभंकुंभोलूखलकवरमितिवाचस्पति कुंभंत्रिवृत्तिगुग्गुलाविनिविश्वप्रकाशः॥ उलूखलकं उलूखलाति लादाने ततःस्वार्थेकः उलूखलेगुग्गुलेचक्लीबमुत्तमुदूखलमितिरुद्रः अस्मिन्पक्षेकुभंचोदूखलमितिपाठः उदूखलगुग्गुलेस्यादुलूखलेपिनद्वयोरितिमेदिनी॥ कौशिक· कोशेभव· कौशिकोनकुलेव्यालग्राहेगुग्गुलुशक्रयो कौशेयोलूकयोर्यःस्याद्विश्वामित्रमुनावपि कौशिकीचंडिकायांचनदीभेदेचयोषितीति॥ गुग्गुल· गोजति गुजस्ते-

**आम्रश्चूतोरसालोसौसहकारोऽतिसौरभः ३३ कुंभोलूखलकंक्लीबेकौशिकोगुग्गुलुःपुरः शेलुःश्लेष्मातकःशीतउद्दा लोबहुवारकः ३४ राजादनंप्रियालःस्यात्सन्नकद्रुर्धनुःपटः**

ये गुडति गुडरक्षणे डलयोरेकत्वं पुरःपुरति पुरअग्रगमने पंचगुग्गुलवृक्षस्य॥ शेलु शिलति शिलउंछे॥ श्लेष्मातकः श्लेष्माणमतति अतसातत्यगमने॥ शीत· श्यायतेस्म श्यैङ्गतौ॥ उद्दालः उद्दालयति दलविदारणे॥ बहुवारकः बहून्वारयति वृञ्वरणे पञ्चशेलटभोंकरीइतिख्यातस्य ३४ राजादनं राजभिरद्यते अदभक्षणे राजादनक्षीरिकायाप्रियाले किंशुकेपिन्वेतिप्रामाण्यं द्वितीयंतु राजादनप्रसरकोराजातनइतिवाचस्पतिः राजानमततीतिवाराजादनं॥ पियाल· पीयते पीयुःसौत्रोधातुः पियालश्चप्रियालकइतिमाधवः॥ सन्नकद्रु· सन्नःलीन· कद्रुर्वर्णोस्य॥ धनु· धनु प्रियालकद्रुमइ-तिरत्नकोशः धनु पुमान्प्रियालद्रौराशिभेदेशरासनइतिमेदिनी॥ धनुःप्रियालेनानस्त्रीराशिभेदेशरासनइति॥ पटः पटति अत्र पट प्रियालवृक्षेनास्त्येवेळपुंनपुंसकमितिरभस. समस्तनामतु मतांतरे धनु.पटः धनुषइवपटोविस्तारोस्येति चवारिचार इतिख्यातस्य॥

भा

कश्मारी कजलविमर्नि डुभृञ्धारणपोषणयोः गभारीत्यपिपाठ ॥सर्वतोभद्रा सर्वतोभद्रयस्या काश्मरी काशते काशादीसी ॥मधुपर्णिका मधूनीवपर्णान्यस्या ३५ श्रीपर्णी श्रीयुक्तानिपर्णान्यस्य श्रीपर्णस्त्वग्निमथेऽब्जेश्रीपर्णाशाल्मलोहलइतिहेम ॥ श्रीपर्णीकाश्मरीकुम्भोक्ष्वेपद्याग्निमथयो ॥भद्रपर्णी भद्राणिपर्णान्यस्या ॥काश्मर्य काश्मरीशब्दोस्त्यस्य अन्येभ्योपिदृश्यतइतियप् काश्मर्य अदत पुंसि समधिवर्णाइतिरव्यातस्य॥ कर्कन्धू कटकदधाति डुधाञ्धारणपोषणयो अदुदुभूइनिसूत्रेणनिपातित कर्कधुरित्यपिपाठ ॥वदरी वदति वदस्थैर्ये॥कोलि कोलति घनीभवति कुलसंस्त्याने तत्रक

कश्मारीसर्वतोभद्राकाश्मरीमधुपर्णिका ३५ श्रीपर्णीभद्रपर्णीचकाश्मर्यश्चाप्यथद्वयो कर्कन्धूर्बदरीकोलि कोलंकु वलफेनिले ३६ सौवीरबदरघोंटाप्यथस्यात्स्वादुकंटक विकंकत स्रुवावृक्षोग्रथिलोव्याघ्रपादपि ३७ कर्कन्धुशब्दस्त्रिद्वयो

स्त्रीपुंसयो त्रीणिबोर इतिरव्यातस्यनामानि कोल कोलफल कैवल्तीति वल्मपाणन॥कुवल॥फनिल फेनोऽस्यास्ति ३६ सौवीर सुवीरदेशेभव स्रोतोजनेतुसौवीरबदरेकांजिकेपिचेतिदत्यादौरभस ॥बदर बदर्याफल॥घोंटा घोणते घुणभ्रमणे घोंटातुबदरीपूगवृक्षयोरपियोषिति घोंटानामकशब्द.बदरीतुल्येत्यैवृक्षपिस्यात् बदरीसदृशाकारोवृक्ष-सूक्ष्मफलोभवेत् अरण्याभेवसाघोंटागोपघंटेतिचोच्यतइतिसुभूति इतिषट्बदरीफलस्य॥स्वादुकंटक कंटकोऽस्यास्ति अच्प्रत्यय स्वादुश्चासौकंटकश्च॥विकंकत विकंकते कंकिगत्यर्थ वैकंकनइत्यपिपाठ ॥स्रुवावृक्ष स्रुवाया वृक्ष स्रुवावृयोर्होमपात्रेशल्लकीमूर्वया स्त्रियां॥ग्रथिल ग्रथिरस्यास्ति॥व्याघ्रपात् व्याघ्रस्यवपादामूलान्यस्य पर्यायविकंकतस्यदेहठोइतिरव्यातस्य ॥अयंयज्ञोपयोगीवृक्ष ३७

ऐरावत ऐरावतोऽभ्रमातंगेनारंगेलकुचद्रुमे नागभेदेचपुंसिस्याद्विद्युत्त्वंदयां स्त्रियां नपुंसकेमहेंद्रस्यऋजुदीर्घशरासने नागरंग: नागारंजंत्यत्र रंजरागे इत्याद्युक्तं
नागरंगेतुनारंगोनार्यगस्तत्रवामनइतिवाचस्पति.॥ नादेयी नद्याभवा नादेयीनागरंगेस्याज्जपायांजलवेतसइतिविश्वप्रकाश.॥ भूमिजंबुका चत्वारिनागरंगस्य ॥
तिंदुक. तिम्यति तिमआर्द्रत्वे ॥ स्फूर्जक: स्फूर्जति स्फूर्जवज्रनिर्घोषे ॥ कालस्कंध कालस्कंधोयस्य कालस्कंधस्तमालेस्यात्तिंदुकेजीवनद्रुमइतिविश्व:॥ शितिसा
रक. शिति·काल.सारोमज्जायस्य चत्वारितेंडूटेंभुरणीइतिख्यातस्य ३८ काकेंदु काकवर्णोतिंदु: पृषोदरादि·॥ कुलक· कुलकंतुपटोलेस्यात्संबद्धश्लोकसंहतौ ॥
पुंसिवल्मीककाकेंदुकुलश्रेष्ठेषुकथ्यतइतिविश्वमेदिन्यौ॥ काकतिंदुक:॥ काकपीलुक काके· पील्यते पीलप्रतिष्टंभे काकानांपीलुरिवेतिवा चत्वारिकाकतेंडूनाम

**ऐरावतोनागरंगोनादेयीभूमिजंबुका तिंदुक:स्फूर्जक:कालस्कंधश्चशितिसारके ३८ काकेंदु:कुलक:काकतिंदुक:का**
**कपीलुके गोलीढोझाटलोघंटापाटलिर्मोक्षमुष्ककौ ३९ तिलक:क्षुरक:श्रीमान्समौपिचुलझावुकौ** काकटेंभुरणी कडूटेंभुर

णीइतिख्यातस्य॥ गोलीढ: गोभिर्लिह्यतेस्म लिह्आस्वादने ॥ झाटल. झाटंसंघातंलाति॥ घंटापाटलि: पाटंलाति घंटाचासौपाटलिश्च स्वामीतुनामद्वयमाह घंटा
पाटलिश्च॥ मोक्ष मोक्षयति रोग मुचे:सन्नंतादकर्मकाण्णिजनादच्॥ मुष्कक. मुष्ककोमोक्षवृक्षेस्यात्संघातेवृषणेपिच पंचघंटापाटले· मोरवाइतिप्रसिद्धस्यना-
मानि ३९ तिलक तिलति तिलस्नेहे ॥ क्षुरक· क्षुरविलेखने क्षुरक कोकिलाक्षेस्यात् ॥ श्रीमान् श्रीरस्त्यस्य श्रीमान्तिलकवृक्षेस्यान्मनोज्ञेधनिकेत्रिषु इति
त्रयंतिलकपुष्पस्य॥ पिचुल: पिचुंतूलंलाति पिचु:स्यात्तूलकर्षयोरिनिभार्गण ॥ झावुक झामितिशब्दंवेत्ति गच्छतिच द्वेझावुकस्यनामनी सचतिलकभेद:स्यात् ॥

को

श्रीपर्णिका श्रीःपर्णसुयस्या ॥ कुमुदिका कौमोदत सुदीहर्ग ॥ कुंभी कुंभीवकुंभी अगाधाग्रकत्वात् पृभिकायानकुंभीस्यागरत्वा फदफल पिचेतिदन कुंभीन्ची ॥ कटर्य कोटरानि किरचासे भ्रंमतिक्रत्वात ॥ कट्फल स्फदति वदनपावरणया कट्फलमस्य पचकुमन कुंभ्यादीनि कायफकइतिचत्वारस्य ५० क्रमुक चामति भ्रगुपादविक्षप क्रमुक पट्टिकालोधेनुवाकभद्रमुस्तक ॥ पट्टिकारव्य पट्टिकाआरव्यायस्य ॥ पट्टी पट्टोऽस्यास्तीति इनन पट्ट पयणपाषाणव्रणार्वनाचबधन ॥ च नु पथेऽधराज्ञादिशासनातरपादया यदा पट्ट स्त्रीपटभेदस्याल्लत्वादेकुंभिकाद्वुमरत्ककत्वाच ॥ लाक्षाप्रसादन लाक्षाप्रसीदत्यनेन चत्वारिल्वाहिनलोध्रभद स्य ॥ नूद नुदतिपाप नुदप्रेरणे तुदस्त्यपिपाठ नभत्य तुदति तुदव्यथने ॥ यूप युवत्यनन यूभिश्रणामिश्रणया रत्यायूत्य ब्रह्मण्य ब्रह्मणिवेदिकसाधु ॥

श्रीपर्णिकाकुमुदिकाकुंभीकैटर्यकट्फलौ ४० क्रमुक पट्टिकाख्यस्स्यात्पट्टीलाक्षाप्रसादन नूदस्तुयूप क्रमुकोब्रह्मण्योब्र
ह्मदारुच ५१ तूलञ्चनीपप्रियककदंबास्तुहलिप्रिये वीरवृक्षोऽरुष्करोग्निमुखोभल्लातकीत्रिषु ४२

ब्रह्मदारु ब्रह्मणोब्रह्मणि वादारु ४१ तूल तूलयति तूल्यतेवा तूलनिष्कर्षे तुलइत्यपिपाठ पुंल्लिंगस्त्कपिचातूल क्लीवस्याद्ब्रह्मदारुणीतिरुद्र पस्कअश्वत्थाकारेहृसभेदपारसापिप वदतिमहाराष्ट्रभाषायारव्याते ॥ नीप णीञ्प्रापणे मीणाति मीञ्तर्पणे ॥ कदंब कदति कद सौत्रोधातुर्हिसार्थ ॥ हलिप्रिय हलिन प्रिय सुरायाञ्भ मनात चत्वारिकदंबइतिरव्यातस्य ॥ वीरवृक्ष वीरश्चवृक्षोद्द स्पर्शत्वात् वीरवृक्षस्त्कभल्लातकार्जुनहुमयो पुमान् ॥ अरुष्कर अरुव्रणकरोति ॥ अग्निमुखी अग्निरिवमुखमस्या भवेदग्निमुखीदेवेभिभेभल्लातकेस्त्रिया ॥ भल्लातकी भल्लवातति अतसातत्यगमने गौरादि चत्वारिविबवाभिलावाइतिरव्यातस्य ४२

गर्दभांड· गर्दभ अमति अमगत्यादिषु अमनाड्डु·॥कंदराल· कंदरालाति कदरालःपुमान्गर्दभांडेप्लक्षतरावपि॥कपीतन या. लक्ष्म्या. तनःईतनः कपीनांतन कपीतनः कपील
नांगर्दभाडशिरीषाम्रातंकेषुच॥सुपार्श्वकः शोभनंपार्श्वमस्य॥प्लक्ष· प्रक्षरति क्षरसंचलने प्लक्षोद्दीपेगर्दभांडेऽश्वत्थेजटिनिपक्षकइतिहैमः पचगजहड ग्वालीपिंपगेइ
तिरव्यातस्य॥तिंतिडी तिम्यति तिमआर्द्रीभावे तिंतिडिस्ताम्लिकाचिंचातितिडीकाकपिप्रियेतिवाचस्पतिः चिंचा चिमित्यव्यक्तशब्दंचिनोति चिञ्चयने॥अम्लिका
अम्लोऽस्यास्ति अम्लिकाचाम्लिकाचिंचातितिडीकाचतिंतिलाइतिचद्रः अयचिंचाया·॥पीतसारक· पीतःसारोऽस्य ४३ सर्जकः सृजति सृजविसर्गे यद्वा स
र्ज्यते षर्जभर्जने असनः अस्यति असुक्षेपणे प्रियकोजिवकोसनइतिरत्नकोशः आसनंक्षेपणेक्लीबंपुसिस्याज्जीवकद्रुमे पीठेभस्कंधयोःक्लीबमासननानुजी

## गर्दभांडेकंदरालकपीतनसुपार्श्वकाः प्लक्षश्चतिंतिडीचिंचाम्लिकाऽथोपीतसारके ४३ सर्जकासनबंधूकपुष्पप्रियक
## जीवकाः सालतुसर्जकार्श्याश्वकर्णकाःसस्यसंवरः ४४ नदीसर्जोवीरतरुरिंद्रद्रुःककुभोऽर्जुनः

वकइतिरुद्रःभसौ॥बधूकपु-
ष्प बंधुकस्येवपुष्पाण्यस्यप्रियक. प्रीणाति प्रीञ्तर्पणे॥जीवकः जीवयति जीवप्राणधारणे षट्कंअसपाइतिरव्यातस्य॥सालः सल्यते सल्गतौ पुंसिभूरुहमा
त्रेऽपिसालोवरणसर्जयोरितिदंत्योदोरभसः शालइत्यपिपाठः॥सर्जः॥कार्श्यः कृशातनूकरणे कृषति कृषविलेखने कार्ष्यइत्यपिपाठः॥अश्वकर्णकः अश्वस्यकर्णइव
पत्रमस्य ॥सस्यसंवरःसस्ये संव्रीयते व्रिञ्वरणे पंचशालवृक्षस्य सालईइतिप्रसिद्धस्य ४४ नदीसर्जः नद्याःसर्जः॥वीरतरुः वीरश्चासौतरुश्च दृढकाष्ठत्वात्॥
इंद्रद्रुः इंद्रस्यइंद्रइववाद्रुः॥ककुभ ककुभोदिशः संत्यस्य बहुविस्तरत्वात् ककुभोरागभेदःपिवीणांकेऽर्जुनपादपे॥अर्जुनःअर्ज्यते अर्जअर्जने पार्थस्तुककुभोजिष्णौ
विनिचिश्वकोशः पच अर्जुनवृक्षस्यनामानि॥

। राजादन राजभिरद्यते अदभक्षणे राजादनः क्षीरिकायामित्यन्ये किंशुकेपि प्रियालेपीति भरतेन ॥ फलाध्यक्ष फलानामध्यक्षः ॥ क्षीरिका क्षीरमस्त्यस्याः क्षीरिण्यीति
गौडे इतिख्यातस्य ४५ इंगुदी इंगद्यति दोषांश्च खंडन इंगिगतौ पत्रपुष्पादशादि जातोंगित्विडीष् ॥ तापसतरु तापसप्रियतरु तपस्विन उपयुक्ततरुत्वात् हिंगु
द्या हिंगणवृद्ध इतिख्याताया इयोरिक्षुकल्पासुसिलुइंगुद ॥ भूर्ज ऊर्जबलप्राणनयाः भूरूर्जोस्य ॥ चर्मी प्रशस्तचर्मास्यास्ति ॥ मृदुत्वक् मृदुस्त्वगस्य भो
जपत्रवृक्षस्य ॥ पिच्छिला पिच्छा शाल्मलीनिर्यासोऽस्यास्ति ॥ पुरणी पुरयति पूरी आप्यायने क्लीबपिष्टप्रभेदेत्व पूरणी शाल्मलीद्रुम ॥ मोचा मुंचतिरस
मुत्सृजति मोच शोभाजनेपुंसि मोचाशाल्मलिरुभयो स्थिरायु स्थिरमायुर्यस्याः षष्टिवर्षसहस्राणि वने जीवति शाल्मलिरितिवचनात् ॥ शाल्मलि

राजादनः फलाध्यक्षः क्षीरिकायामथद्वयो ४५ इंगुदीतापसतरुर्भूर्जेचर्मिमृदुत्वचौ पिच्छिलापूरणीमोचास्थिरा
युःशाल्मलिर्द्वयो ४६ पिच्छातुशाल्मलीवेष्टेरोचनःकूटशाल्मलिः चिरबिल्वोनक्तमालःकरजश्चकरंजकः ४७

शालयति शलचलने मलते मलधारणे शाल्मलिश्च शाल्मलि शाल्मल इत्यपिपाठो ४८ शाल्मल्यावेष्टेनिर्यासेपिच्छेत्येकं पतितुमिच्छति पत्नगनो पृषोदरा-
दित्वात्सन सस्यच इत्यादूत्व काथःकषायोनिर्यूहोनिर्यासोवेष्टकस्तथेतिरभस मोचरसोविडिकइतिख्यातस्यनाम ॥ रोचन रोचते स्वरूपमा रोचनःकूटशाल्म-
ल्याप्रभिस्याद्रोचककश्चि ॥ कूटशाल्मलि कूटश्चासौशाल्मलिश्च इकाटोसावरीइतिख्यातस्य ॥ चिरबिल्व चिरबिलति बिलभेदने चिरिबिल्वइत्यपिपाठ ॥ न
क्तमाल नक्तमालमडति नक्तमालोधारणमस्यवा ॥ करज कस्रव जल्वारजयति ॥ करंजक करजयति चत्वारिकरजवृक्षस्यनामानि ४७

प्रकीर्य. प्रकीर्यते रुविक्षेपे ॥ प्रकीर्यःपूतिकरजेविषकार्येतुवाच्यवत् ॥ पूतिकरजः पूतिश्चासौकरजश्च ॥ पूतीकरजइत्यपिपाठः ॥ पूतीकरंजःक्रम नाम्नतथाकलहना
शनइतिरुद्रः ॥ पूतीकः पूनाति पुञ्पवने ॥ कलिमारकः कलिंमारयति चत्वारिकांटेकरंज घाणेरा करंजइतिरव्यातस्य ॥ षड्ग्रंथः षट्ग्रंथयोयस्य अजितियोगवि
भागादच् इत्याद्यूत्वं ॥ मर्कटी मर्कति मर्कसौत्रोधातुः ॥ अगारवल्लरी अंगार वर्णावल्लरीयस्याः एतेत्रय. करंजभेदाः ४८ रोही आवश्यकेणिनिः अवश्यंरोहति
रोहीरोहितकेन्वेत्यवटपादपयोःपुमान् ॥ रोहितकः रोहितोवर्णोऽस्यास्ति रोहितंकुंकुमेरक्तेऋजुशाक्रशरासनइतिमाधवः ॥ प्लीहशत्रुः प्लीहःशत्रु ॥ दाडिमपुष्पकः दा
डिममिवपुष्पमस्य चत्वारिरक्तरोहिडाइतिरव्यातस्यनामानि ॥ गायत्री गायंतंत्रायते त्रैङ्पालने गायत्रीरवदिरेस्त्रीस्यादितिरभसः वन्हिगायत्रिणांतथेतिवैद्य

प्रकीर्यःपूतिकरजःपूतीकःकलिमारकः करंजभेदाःषड्ग्रंथोमर्कट्यंगारवल्लरी ४८ रोहीरोहितकःप्लीहशत्रुर्दाडिमपुष्पकः
गायत्रीबालतनयःरवदिरोदंतधावनः ४९ अरिमेदोविट्रवदिरेकदरःरवदिरेसिते सोमवल्कोप्यथव्याघ्रपुच्छगंधर्वहस्तकौ ५०

कादिन्नंतोपि ॥ बालतनयः बालास्तनयाःपत्राण्यस्य ॥ रवदिरः रवदति रवदस्थैर्येहिंसायांच रवदिरोरक्तसारश्चगायत्रीदंतधावन. कंटकीबालपत्रश्चजिह्मशा-
ल्यःशतिक्षयइतित्रिकांडशेषः रवदिरीशाकभेदस्त्रीनानचंद्रेदंतधावने ॥ दंतधावनः दंतान्धावति धावुगतिशुद्ध्योः चत्वारिरवदिरस्य ४९ अरिमेदः अरिरिवमेदो
स्नेहोस्य ॥ विट्रवदिरः विट्गंधिःरवदिरोविट्रवदिरः द्वेदुर्गंधरवदिरस्य ॥ सितेरवदिरे कदरः कस्यजलस्यदरः कदर रवदिरेश्वेतेक्रकचव्याधिभेदयोः ॥ सोमव-
ल्कः सोमइववल्कोऽस्य इतिद्वेनामनी ॥ व्याघ्रपुच्छः व्याघ्रपुच्छमिवपुच्छमस्य ॥ गंधर्वहस्तक. गंधर्वस्यहस्तइवपत्रमस्य ५०

गरुड आरयति वायुमिति शेष ईरगतौ कंपनेच ॥ उरुबूक उरुमहान्तवायति ओवैशोषणे उलूकादिषु निपातितः ॥ रुचक रोच्यते रुचदीप्तौ बुन्प्रत्यय ॥ चित्रक चित्रयति चित्रअद्भुतादौ ॥ चञ्चु चञ्चति चञ्चुगत्यर्थे ॥ पञ्चाङ्गुल पञ्चअङ्गुलयोयस्य ॥ मंड मंडयति मंडिभूषायां आमंडस्याः स्त्रियामंडएरंडसोत्वा पिच्छयोरितिरभस मंड पञ्चाङ्गुलेशाके पुंसिक्लीबेतुवस्तुनि कश्चिदमंडमाह आमंडइत्यपि गंधर्वहस्तकोमंडआमंडोव्यामयुच्छकइतितारपाल ॥ वर्धमान वर्धन वर्धच्छेदनपूरणयो व्यडंबक व्यडमलमवयति अविभासने व्यडंबनइतिस्वामी इत्येकादशएरंडस्यनामानि याल्पास्वल्पाकाराशमीसशमीरइत्यक ॥ शमी शमयतिरो

गारुडउरुबूकस्त्वरुचकश्चित्रकश्चसः चञ्चुपञ्चाङ्गुलोमंडवर्धमानव्यडंबकाः ५१ अल्पाशमीशमीरः स्याच्छमीसक्तुफला
शिवा पिंडीतकोमरुबकः श्वसनः करहाटकः ५२ शल्यश्चमदनेशक्रपादपः पारिभद्रकः भद्रदारुद्रुकिलिमंपीतदारुचदा
रुच ५३ गान् शमीसक्तुफलायाञ्चशिविकायाञ्चगुग्गुले ॥ सक्तुफला सक्तुवत्फलमस्या ॥ शिवा शिवकरोति त्रपशम्या ॥ पिंडीतक पिंडीतनोति
अन्येष्वपीतिड कन् पिंडीतकः स्यान्मगरमदनाख्यमहीरुहे ॥ मरुबक मरुवाति कुन् आकारलोप ॥ श्वसन श्वसनश्वसितेपुंसिमारुतेमदनद्रुमे ॥ करहाटक करहाटयति हटदीप्तौ ५२ शल्य शलति शलगतौ ॥ मदन मदयति मदीहर्षग्लपनयोः पञ्चगौणाइनिस्यात्तस्य ॥ शक्रपादप शक्रस्यपादप ॥ पारिभद्रक पारिनिश्चयात्भद्रमस्य पारिभद्रस्तु निम्बद्रौमदारेदेवदारुणि ॥ भद्रदारु भद्रदारु भद्रदारुणिनक्लीबमित्यमरमाला ॥ द्रुकिलिम किलति किलश्वेत्य-क्रीडनयोः बाहुलकात्किमच् द्रुमवासौकिलिम ॥ पीतदारु पीतञ्चतत् दारुचपीतदारु ॥ दारु दीर्यते दृविदारणे सुनपुंसकयोर्दारवितित्रिकाण्डशेष ५३

अभया नभयमस्या अभयास्त्रीहरीतक्यामुशीरेत्वनपुंसकं अभयामलकीगौरीफेरुभक्तुफलास्त्वेतिमेदिनी॥ अव्यथा नव्यथायस्या· अव्यथोनिर्व्यथेसर्पे
चारटीपथ्ययो·स्त्रियामित्युक्तत्वात्॥ पथ्या पथोऽनपेता॥ कायस्था कायस्तिष्ठत्यनया अत्रवयस्थेत्यपिपाठः॥पूतना पूतंकरोति पूतनातुहरीतक्यांदानवी
रागभेदयोरित्युक्तत्वात्॥अमृता नमृतंयस्याः॥ हरीतकी हरिर्वर्णइतोयस्या॥हैमवती हिमवतिजाता॥ चेतकी चेतयति चितिसंज्ञाने॥ श्रेयसी अतिप्रशस्ता
शिवा शिवकरोति शिवोमोक्षेमहादेवेकीलेचग्रहयोगयोरितिविश्वः एकादशहिरडाइतिख्यातस्य ५९ पीतद्रुः पीतश्चासोद्रुश्च॥ सरलः सरति सृगतौ॥ पूतिका
ष्ठ पूतेःपावनस्यकाष्ठपूतिकाष्ठं त्रयसरलस्य सरलदेवदारइतिख्यातस्य॥ द्रुमोत्पलः द्रुमेउत्पलमिवपुष्पंयस्य॥ कर्णिकारः कर्णिकाभियर्ति ऋगतौ॥ परिव्याधः

अभयात्वव्यथापथ्याकायस्थापूतनामृता हरीतकीहैमवतीचेतकीश्रेयसीशिवा ५९ पीतद्रुःसरलःपूतिकाष्ठंचाथद्रु
मोत्पलः कर्णिकारःपरिव्याधोलकुचोलिकुचोडहुः ६० पनसःकंटकिफलोनिचुलोहिज्जलोंऽबुजः परिविध्यति व्यधताडने परिव्या

धस्तुपुंसिस्याद्वेतसेचद्रुमोत्पले त्रीणिकर्णिकारस्य पागाराइतिख्यातस्य॥ लकुचः लक्यते लकआस्वादने॥ लिकुचः पृषोदरादिः॥ डहुः दहति दहभस्मीकरणे डहू
रित्यपीतिस्वामीचरणाः त्रयओटइतिख्यातस्य क्षुद्रपनसस्येत्यपिमतं ६० पनसः पनाय्यतेस्तूयतेपनस पनसः कंटकिफलेकंटकेवानरांतरे॥स्त्रियांरोगप्रभेदेस्यात्
पणसइत्यपिपाठ॥ कंटकिफलः कंटकाःसंत्यस्य कटकिफलमस्येतिवा द्वेपनसइतिख्यातस्य॥ निचुलः निचोलति चुलसमुच्छाये निचुलस्तुनिचोलेस्याद्दिज्जला
ख्यमहीरुहे निचुलज्जलहिज्जलाइतिरभसः॥ हिज्जलः हिनोति हिगतोवृद्धौच क्विपतुक् हितंजलमस्येतिवा इज्जलइत्यपिपाठः एति इणगतौ इतंजलमस्य॥ अंबु
ज अबुनिजातः जनीप्रादुर्भावे त्रयंइजरइतिख्यातस्य स्थलवेतसस्येत्यपिकेचित् निचुलस्थलवेतसइतिशब्दार्णवात् समुद्रफलस्येत्यपिकेचित्॥

मडूकपर्ण मडूकस्वपर्णमस्य ॥पत्रोर्णः पत्रेऊर्णाऽस्य पत्रोर्णपीतकेऽशेयेक्लीबस्याछोणकेपुमान् ॥नट नटति नटनृतौ ॥कट्वङ्ग कटूम्यगान्यस्य ॥टुंटुक टुटु इति कायति केशब्दे आतोनुपसर्गक ५६ स्योनाक सीव्यति षिवुतंतुसंताने तेनाकनि अक्यतेवा अककुटिलायागतो स्योन किरणसूर्ययो श्यानाकइत्यपिपा-ठ ॥शुकनास शुकनासेवपुष्पमस्यास्ति ॥ऋक्ष ऋषति ऋषीगतो ऋक्षःपर्वतराजेस्यात्भल्लुकेशोषणेपुमान् दीर्घवृन्त दीर्घवृन्तमस्य ॥कुटन्नट कुटन् वक्रीभ वन् नटति नटस्पदने ॥ शोणक शोणति शोणवर्णे गुरुत्वरणास्तु शोनकइत्याहु नत्वेवशावति ॥अरलु द्वादशादडिका दिडाइनिख्यातस्य ॥तिष्यफलाति-

मडूकपर्णपत्रोर्णनटकट्वङ्गटुंटुकाः ५६ स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः शोणकश्चारलौतिष्यफलात्वामल
कीत्रिषु ५७ अमृताचवयस्थात्रित्रिलिंगस्तुविभीतक नाक्षस्तुष कर्षफलोभूतावास कलिद्रुम ५८

कलियुगेफलमस्य ॥आमलकी आमलते मलधारणे ५७ अमृता नम्रियतेऽनया अमृतामागधीपथ्याशुडूच्यामलकीषुच ॥वयस्था वयोयौवनंतिष्ठत्यनया व यस्थातुस्त्रियाब्राह्मीगुडूच्यामलकीषुच सूक्ष्मैलायान्चकाकोल्यापथ्यायातरुणेषुचेत्युक्तत्वात् त्रिष्वित्युक्ते आमलक आमलक चत्वारिआमलक्या ॥विभीतक विगतरोगभयमस्मात् ॥अक्ष अक्षति अक्षूव्याप्तौ अक्षोज्ञानात्मशकटव्यवयवेषु सूपाशके रुद्राक्षइद्राक्षयो सर्पेविभीतकतरावपि चक्रेकर्षेपुमान्क्लीबमक्षसौव र्चलेइंद्रियइतिहेम ॥तुषः तुष्यति तुषतुष्टौ ॥कर्षफल कर्षफलमस्य ॥भूतावास भूतानामावास ॥कलिद्रुम कलेर्द्रुम षट्धादिगइनिख्यातस्य कचिद यवेहडाइनिख्यात ५८

अभया नभयमस्या. अभयास्त्रीहरीतक्यांमुशीरेन्चनपुंसकं अभयामलकीगौरीफेरुसक्तुफलास्त्वेतिमेदिनी ॥ अव्यथा नव्यथायस्या· अव्यथोनिर्व्यथेसर्पे चारटीपथ्ययो.स्त्रियामित्युक्तत्वात् ॥ पथ्या पथोऽनपेता ॥ कायस्था कायस्तिष्ठत्यनया अत्रवयस्थेत्यपिपाठः॥ पूतना पूतंकरोति पूतनातुहरीतक्यांदानवी रागभेदयोरित्युक्तत्वात् ॥ अमृता नमृतंयस्याः॥ हरीतकी हरिर्वर्णइतोयस्या ॥ हैमवती हिमवतिजाता ॥ चेतकी चेतयति चितिसंज्ञाने ॥ श्रेयसी अतिप्रशस्ता शिवा शिवंकरोति शिवोमोक्षेमहादेवेकीलेचग्रहयोगयोरितिविश्वः एकादशाहिरडाइतिख्यातस्य ५९ पीतद्रु. पीतश्चासौद्रुश्च ॥ सरल. सरति सृगतौ ॥ पूतिकाष्ठं पूते.पावनस्यकाष्ठंपूतिकाष्ठ त्रयसरलस्य सरलदेवदारुइतिख्यातस्य ॥ द्रुमोत्पल. द्रुमेउत्पलमिवपुष्पंयस्य ॥ कर्णिकारः कर्णिकामियर्ति ऋगतौ ॥ परिव्याधः

## अभयात्वव्यथापथ्याकायस्थापूतनामृता हरीतकीहैमवतीचेतकीश्रेयसीशिवा ५९ पीतद्रुःसरलःपूतिकाष्ठंचाथद्रुमोत्पलः कर्णिकारःपरिव्याधोलकुचोलिकुचोडहुः ६० पनसःकंटकिफलोनिचुलोहिज्जलोंऽबुजः

परिविध्यति व्यधताडने परिव्याधस्तुपुंसिस्याद्रुतसेन्चद्रुमोत्पले त्रीणिकर्णिकारस्य पागाराइतिख्यातस्य ॥ लकुचः लक्यते लकआस्वादने ॥ लिकुच· पृषोदरादिः॥ डहुः दहति दहभस्मीकरणे डहूरित्यपीतिस्वामीचरणा. त्रयओंटइतिख्यातस्य क्षुद्रपनसस्येत्यपिमतं ६० पनसः पनाय्यतेस्तूयतेपनस पनस·कंटकिफलेकंटकेवानरांतरे ॥ स्त्रियांरोगप्रभेदेस्यात् पणसइत्यपिपाठ.॥ कंटकिफल· कंटकाःसंत्यस्य कंटकिफलमस्येतिवा हेपनसइतिख्यातस्य ॥ निचुलः निचोलति चुलसमुच्छाये निचुलस्तुनिचोलेस्याद्दिज्जलाख्यमहीरुहे निचुलज्जलहिज्जलाइतिरभसः॥ हिज्जल· हिनोति हिगतोवृद्धौच क्विपतुक् हितंजलमस्येतिवा इज्जलइत्यपिपाठ· एति इणगतौ इत्जलमस्य ॥ अंबुजः अंबुनिजातः जनीप्रादुर्भावे त्रयंइजरइतिख्यातस्य स्थलवेतसस्येत्यपिक्वचित् निचुलस्थलवेतसइतिशब्दार्णवात् समुद्रफलस्येत्यपिकेचित् ॥

काकोदुंबरिका काकप्रिया उदुंबरी संज्ञायां कन् ॥ फल्गु फलति फलनिष्पत्तौ ॥ मलयू मलयवति जुगुप्सायां यद्वा मलते मलधारणे मलयू मल्लपूरित्यपि पाठो ॥ जघनेफला जघनेफलं यस्याः चत्वारि काकोदुंबर्याः ॥ सर्वतोभद्र ... इति ख्यातस्य पाश्चात्तनपुरातनसाहचर्यात् फल्गुशब्दस्त्रीलिंगे ६१ अरिष्ट नरिष्यते अस्मात् ॥ सर्वतोभद्र सर्वतो भद्रं यस्मात् सर्वतोभद्रस्त्वक्त काव्यचित्रे गृहांतरे निंबे ना सर्वतोभद्रा गंभारी नटयोषितोः इत्युक्तत्वात् ॥ हिंगुनिर्यास हिंग्वाकारो हिंगुगंधो वा निर्यासोऽस्य हिंगुनिर्यासस्त्वेष निर्यासे हिंगुरसेपि चेति मेदिनी ॥ मालक मलते मलधारणे ॥ पिचुमर्द पिचुं मर्दयतीति ॥ निंब निर्वाति स्वास्थ्यं ॥ णिवि सेचने वचये रिकल पर्णनिंबस्य ॥ पिच्छिला पिच्छास्त्यस्याः ॥ अगुरु न गुरुर्यस्मात् अगुरुः क्लीबे शिंशपायामिति रुद्रः अगुरु स्याच्छिंशपायामिति विश्वप्रकाशः अगुरुपदस्तु

**काकोदुंबरिका फल्गुर्मलयूर्जघनेफला ६१ अरिष्टः सर्वतोभद्रहिंगुनिर्यासमालकाः पिचुमर्दश्च निंबेथ पिच्छिलाऽगुरु शिंशपा ६२ कपिला भस्मगर्भा सा शिरीषस्तु कपीतनः भंडिलोप्यथ चांपेयश्चंपको हेमपुष्पकः ६३**

पुल्लिंग मक ॥ शिंशपा शिंमित्यव्यक्तशब्दशब्देन वा शायति इत्यायूत्य अगुरुशिंशपेत्येकपदस्वामीत्याह याकपिला कपिलवर्णपुष्पा सा भस्मगर्भेत्युच्यते भ स्मगर्भो यस्याः शंकुसारत्वादित्येके चत्वारि शिसव इति ख्यातस्य ॥ शिरीष शृणाति शीर्यते वा शृ हिंसायां ॥ कपीतन तनोति तनु विस्तारे कपीनां कपेर्वर्णस्य वा तनः कपीतनः लक्ष्मीविस्तारकः ॥ भंडिल भडने कल्याणं करोति भंडिः कल्याणं लयोरेकत्वाद्भंडिरोपि भंडिलो भंडिरो नेति वानस्पति त्रयं शिरस इति ख्यातस्य ॥ चांपेय चंपायां भवत्वादक् चांपेयश्चंपके स्वर्णे किंजल्के नागकेसरे ॥ चंपक चंपयति चंप्यते वा ॥ हेमपुष्पक हेमवर्णपुष्पमस्य त्रयं कुडचांपा सोनचांपा इति ख्यातस्य ६३

एतस्य चंपकस्य कलिकायाः गंधफलीइत्येकं गंधः फलंसाध्यमस्याः॥ केसर केसराः संत्यस्य मत्वर्थेअच् केसरहिंगुनिक्लीबंकिंजल्केनस्त्रियांपुमान् सिंहेच्छटा-
यांपुन्नागेबकुलेनागकेसरइत्युक्तत्वात्॥ बकुल· बंकते बंकिगत्यर्थः द्वेओंवळ बकुळइतिख्यातस्य॥ वंजुल. वजति वजगतो॥ अशोक· नशोकोऽस्मात् अशोक
स्त्रिषुनि शोकेपुंसिकंकेलिपादपे .स्त्रियातुकटुरोहिण्यांपारदेस्यान्नपुंसकमित्युक्तत्वात् इतिद्वेअशोकस्यनामनी॥ करकः करोतिदोषाभावं वुन्प्रत्ययः करक-
स्तुपुमान्पक्षिविशेषेदाडिमेपिच द्वयोर्मेघोपलेनस्त्री करकंचकमंडलावित्युक्तत्वात्॥ दाडिम· दलन दालः दलविशरणे दालेननिर्वृत्त· डलयोरेकत्वं दाडिबइत्यन्यत्र दा
डिवमारपिंडीरस्वाद्वम्लशुकवल्लभाइतिरभसः दाडिमइत्यपि द्वेदाडिमस्य डाळिबइतिख्यातस्य ६४ चांपेयः चंपायाअपत्यं चांपेयश्चंपकेस्वर्णेकिंजल्केनागकेसरे॥

एतस्यकलिकागंधफलीस्यादथकेसरे बकुलोवंजुलोशोकेसमौकरकदाडिमौ ६४ चांपेयःकेसरोनागकेसरःकांचनाव्हयः
जयाजयंतीतर्कारीनादेयीवैजयंतिका ६५ श्रीपर्णमग्निमंथःस्यात्कणिकागणिकारिका

केसरः केसराः संत्यस्य मत्वर्थेअच्॥ नागकेस
र. नागाख्य केसर॥ कांचनाव्हय· कांचनस्यआव्हयइवआव्हयोयस्य चत्वारिनागचांफाइतिख्यातस्यनामानि कांचनाव्हयः हेमपर्यायनामकइत्यर्थः॥ जया जय
ति॥ जयती जयंतीवृक्षभिद्योर्यामिंद्रपुत्रीपताकयो.॥ तर्कारी तर्कमृच्छति ऋगतौ॥ नादेयी नद्यांभवा॥ वैजयंतिका विजयंतस्येदं तस्येदमित्यण् स्वार्थेकन् पंचटांहा-
कळ थोरऐरणइतिचख्यातायाः ६५ श्रीपर्ण श्रीःपर्णेषुयस्य॥ अग्निमंथः अग्निमश्नाति मंथविलोडने॥ कणिका कणति कणशब्दे कणाः संत्यस्यांवा इत्याद्यूह्यं॥
गणिकारिका गणिंकरोति कर्मण्यण् स्वार्थेकन्॥

जय जयतीतिपचाद्यच् पचनरवेलइतिरव्यातस्य दशाव्येकस्यपर्यायाइतिस्वामीचरणा ॥कुटज कुटेइगेजायतेस्म पृषोदरादित्वात्ह्रस्व ॥शक्र शक्नोति शक्रशक्रो शक्रःपुमान्देवराजेकुटजेऽर्जुनद्रुमइत्यरूकत्वात् ॥वत्सक वदति वरव्यक्तायावाचि समत्ययेस्वार्थेकन् ॥गिरिमल्लिका इवार्थेकन् चत्वारिकु डाइतिप्रसिद्धस्य ६६ एतस्यैवकुटजस्यफलेकलिग कलिगच्छति अतर्भावितण्यर्थोगमि ॥इंद्रयव इंद्रसज्ञस्यवृक्षस्ययव यवाकारबीजत्वात् ॥भद्रयव भद्रंचतत्यवश्च कलिगेद्रयव पुमानित्यमरमाला ॥कलिगा तंत्रैवस्त्रीकांडेपाठात् ॥कृष्णपाकफल कृष्णपाकफलमस्य अविग्न ओविजीभयचलनयोः आ

**जयोःथकुटज शक्रोवत्सकोगिरिमल्लिका ६६ एतस्यैवकलिगेंद्रयवभद्रयवफले कृष्णपाकफलाविग्नसुषेणा कर मर्दके ६७ कालस्कधस्तमाल स्यात्तापिछोप्यथसिदुके सिंदुवारेंद्रसुरसौनिर्गुंडींद्राणिकेत्यपि ६८**

ङ्पूर्व आविग्नइत्यपि ॥सुषेण शोभनासेनायस्य ॥सुदुसिनोति षिञ्बंधने ॥करमर्दक करमृद्गाति मृदक्षोदे चत्वारिकरमर्दकस्य करवदइतिरव्यातस्य ६७ कालस्कध काल स्कधोऽस्य कालस्कधस्तमालेस्यात्तिदुकेजीवकद्रुमइत्यरूकत्वात् ॥तमाल ताम्यति तमुग्लानौ तमालस्तिलकेखड्गेतापिछेवरुणद्रुमे ॥तापिच्छ तापि नच्छादयति छदअपवारणे त्रयतमालस्य ॥सिंदुक स्यंदते ॥सिंदुवार श्वेतपुष्प सिंधुक सिंधुवारित ॥इंद्रसुरस इंद्रस्यसुरस ॥निर्गुंडी निर्गुंडति गुडरक्षायानो दादिक इगुपधेविकेपृषोदरादि निर्गुंडीनीलशेफाल्यासिंदुवारद्रुमेपिचेतिहैम ॥इंद्राणिका इंद्रमाणयति इंद्राणीकरणेस्त्रीणापोलोमीसिंदुवारयोः पचसिंदु वारस्य सिंधुआरी निगडी निर्गुंडी इतिरव्यातस्य ६८

वेणी वेणीव देवताडेपिवेणीस्यात्म्रवेण्यामपियोषितीतिरभसः॥ गरा गृण्हाति गृशब्दे खराइत्यपिपाठः देवताडेखरातीक्ष्णेत्रिषुस्यात्क्रूरेभेपुमानितिरभसः॥गरी अगरीइत्यपिपदं खरागरीइतिसमस्तमपिपदं मूषिकाविषघ्नत्वात् गरागरीइत्येकंपदं गरमागिरति तत्रैवं जीमूतकोदेवदाडोदन्त्रकेशोगरागरीइति॥ देवताड देवइंद्रियंताडयति तडअघाते देवोमेघेसुरेराज्ञिस्यान्नपुंसकमिंद्रिये॥ जीमूतः जीमूतइव जीमूतोद्रोध्ननिकरेदेवताडेपयोधरे पंचदेवतालस्यदेवताली देवडांगरी इतिरव्यातस्य॥ श्रीहस्तिनी श्रीहस्तोविद्यतेयस्याः इत्याद्यूह्यं॥ भूरुंडी भुवंरुंडयति आच्छादयति हेहस्तिकर्णाभपत्रस्यशाकभेदस्य भिरिहस्तिनी थोर— कुरडूइतिरव्यातस्य॥ तृणशून्यं तृणशून्यंमल्लिकायांतथास्यात्केतकीफलइतिविश्वमेदिन्यौ तृणशून्येगुल्मेसाधु तत्रसाधुरितियत्॥ मल्लिका मल्लते गं

वेणीगरागरीदेवताडोजीमूतइत्यपि श्रीहस्तिनीतुभूरुंडीतृणशून्यंतुमल्लिका ६९ भूपदीशीतभीरुश्चसैवास्फोटावनोद्भवा शेफालिकातुसुवहानिर्गुंडीनीलिकाचसा ७०

धंमल्यतेवा मल्लधारणे मल्लिकोहंसभेदेस्यात्तृणशून्येपिमल्लिकेतिरुद्रः ६९ भूपदी भुविपदमस्याः॥शीतभीरुः शीताद्भीरुः शीतभीरुरित्यपिपाठः मल्लिकाशतभीरुश्चगवासीभद्रमल्लिका शीतभीरुर्मदायंतीभूपदीतृणशून्यकमि[illegible] तिः चत्वारिमल्लिकायाः मोगरीइतिरव्यातायाः॥ सैवमल्लिका वनोद्भवा वनेउद्भवोयस्याः आस्फोटेत्युच्यते एकंरानमोगरीइतिरव्यातस्य आस्फोटयति स्फुटविकसने आस्फोटाविष्णुक्रांतायांवनमल्लार्कपर्णयोरितिरभसः आस्फोटस्तुपुमानर्कपर्णेस्यात्कोविदारके आस्फोतेत्यपि आस्फोतागिरिकार्णग्यांवनमल्यात्त्वयोषितीतिमेदिनी॥ शेफालिका शेरतेशेफाःअलयोस्यां स्वार्थेकन्॥ सुवहा सुष्ठुवहत्यामोदं वहप्रापणे निर्गुंडी॥ नीलिका नीलादोषधौङीष् कन् चत्वारि ण्यापुष्पायाः निर्गुंड्याः राननिर्गुंडीइतिरव्यातायाः ७०

ग्यश्वेतपुष्पा असौनिर्गुंडीसिता श्वेतसुरसा शोभनोरसोऽस्या श्वेताचासौसुरसाचेति भूतवेशीइत्यप्युच्यते भूतानिविशति विशमवेशने इयकानरी॥नपुं३॥ इतिव्याख्याता ॥मागधी मगधदेशेभवा मागधेमगधोद्भूतोजकुजीरकवदिनो वैश्यत क्षत्रियापुत्रमागधीस्यात्तुपिप्पली ॥गणिका विचापह्यारित्वाद्गणि-कासादृश्य॥यूथिका यूथमस्त्यस्या यूथिकास्यानकेपुष्पविशेषभित्त्ययोषिति॥अबष्ठा अबष्ठमानेवतिष्ठति अंबापोरितिन्हस्व पत्वन अबष्ठादेशभेदेपि विभाद्दश्यासकृतेपिन अबष्ठाम्यष्ठाम्यास्यातयागयूथिकयोरपि इतिविश्व चत्वारियूथिकाया जूई इतिख्याताया ॥ सायूथिकापीतपुष्पाचेद्धेमपुष्पिका स्यात् इत्येक ७१ अतिमुक्त मुक्तान् विरक्तान् अति॥पुंड्रक पुंडति पुंड्यतेवा पुंडिरखंडन रक्प्रत्ययस्वार्थेकन्॥वासन्ती वसंतेपुष्प्यति कालादित्तिअण्‌ङी॥

सितासौश्वेतसुरसाभूतवेश्यथमागधी गणिकायूथिकाबष्ठासापीताहेमपुष्पिका ७१ अतिमुक्त पुंड्रक स्याद्वास
न्तीमाधवीलता सुमनोमालतीजाति सप्तलानवमालिका ७२

प॥माधवी मधौपुष्प्यति पूर्ववत्॥लता पंच कुंदभेदस्य कुसरीइति कस्तूरमोगरा मधुमाधवीइतिख्यातस्य ॥ अतिमुक्तादिद्वयमल्लिकाभेदस्येत्येके माधवीलताइत्येकपदमपि॥सुमना सुष्ठुमन्यते मनज्ञाने यद्वा शोभनमनोऽस्या स्त्रियासुमनसोसुस्पिपुष्पेजातीतुभेदत तत्रसुमना सात ठाबतोपि तत्रैव सुमनायाभ्वपनणेतिस्मृतेर्दर्शनात्॥मालती मालस्था लतति लतुसात्रावसनार्थ ॥ जाति जायत जनीप्रादुर्भावे जातीइत्यपिपाठ जातीफलेचमालत्यामितिमेदिनी त्रीणिजात जाईचमेलीमोठीश्वेतजाईपीतवर्णजाईइतिख्याताया ॥सप्तला स [illegible]रियाणिलाति लाआदाने नवमालिका नवामालायस्या द्वेनवाली थोरमोगरा बटमोगरा वेलमोगराइतिख्याताया ७२

माघ्यं माघेसाधु माघेभवदिगादित्वाद्यदितिमांच.॥कुंदं कुं भुवदायतिद्यतिवा दैप्शोधने दोअवखंडनेवा माघ्य·कुंद·करंदकइतिपुस्कांडेरत्नकोशात् कुंदोमाघ्येस्त्रीमुकुंदकनिमि
निध्यंतरेष्वुचेतिमेदिनी द्वेकुंदस्य॥रक्तकः रक्तपुष्पत्वात्स्वार्थेकन्॥बंधूकः बध्नाति चित्तं बंधबंधने बंधुकंबधुजीवेस्यात्बंधुकःपीतसारके॥बधुजीवकः बंधुरिव जीवंजलंय
स्य समासांत.कप् त्रीणिबंधुकस्य भुपारीइतिख्यातस्य॥सहा सहते आतपं षहमर्षणे॥कुमारी कुमारक्रीडायां अच् गौरादिः कामयते कसुकालो इत्याद्यूह्यं॥तरणिः त
रत्यनया तृप्लवनतरणयो॥द्युमणौतरणि पुंसिकुमारीनौकयोःस्त्रियां त्रीणिकुमारी इतिकांदेशेवंती शेवतीगुलाबइतिचख्यातायाकुमार्याःनामानि॥अम्लानः नम्लायतिस्म
अम्लानस्त्वमलेपिंडीभेदइतिहैमः॥महासहा महतीचासौसहा महासहामाषपर्ण्यामम्लानेपिचयोषिति द्वेआबोलीइतिख्यातायाः तस्मिन्अम्लानइत्येकंकुरंटकमात्र-

माघ्यंकुंदंरक्तकस्तुबंधूकोबंधुजीवकः सहाकुमारीतरणिरम्लानस्तुमहासहा ७३ तत्रशोणेकुरबकस्तत्रपीतेकुरंटकः नी
लाझिंटीद्वयोर्बाणादासीचार्तगलश्चसा ७४ सैरीयकस्तुझिंटीस्यात्तस्मिन्कुरबकोऽरुणो
स्य कादेशोवती थोरशानशेवंतीइत्याख्या

तायाइतिसिद्धः ७३ तत्राम्लाने शोणे रक्ते कुरबकइत्येकं आलीनाकुत्सितईषद्रवोत्राल्पमकरंदत्वात् उरुबकइत्यपिपाठः॥तत्राम्लानेपीतवर्णेकुरंटकइत्येकं को
रंटक एवुल् रुटिस्तेये कुर्यते कुरछेदने॥नीली नीलवर्णायाझिंटी तत्रबाणा वण्यते वण्शब्दे कर्मणिघञ् बाणातुबाणमूल्येस्त्रीनलछिद्यांपुनर्द्वयोः॥दासी दस्यते दसु
उपक्षयंदासीबाणेतिकोशाः कर्मणिघञ् गौरादिः॥आर्तगलः आर्तःक्षीणेगलति गलअदने इतित्रयं॥द्वयोरित्युक्तेर्बाणइत्यपि नीलाझिंटीनीलझिंटीचेत्यपिपाठः॥सैरी
यकःसीरेभवः कर्षः तत्रभवइत्यण् ततोदन्द्वाछ. स्वार्थेकन् सैरीयक·सहचरइतिकोशांतरात्॥झिंटी झिमितिरटति पृषोदरादिः द्वयंझिंटीमात्रस्य कोरांटीइतिख्या०
तस्मिन्सैरीयकेऽरुणे रक्तवर्णे कुरुबकइत्येकं॥

या पीतपुष्पा झिंटी सा कुरंटक इत्युच्यते तस्मिन्कुरंटके सहचरीत्यपि सहचरति पचाद्यच् टित्वात् ङीप् द्वयोरित्युक्ते सहचर इत्यपि ७५ ओड्रपुष्प आरेघत् उनत्ति उदी रेदन स्फायितचीतिरक् बाहुलकात् स्यडल ओड्रपुष्पं यस्य ओड्रपुष्पोपि वृक्षोपि जपापुष्प प्रकीर्तितइति त्रिकाण्डशेष॥ जपापुष्प जपाया पुष्प द्वेजासदइतिख्याते ॥जा त्यपि जवायातु जपाप्रियामिति धर्मदास ओड्रपुष्पस्य वृक्षस्यापि च जवेत्यभिधान॥ यत तिलस्य पुष्पत द्वज्रपुष्प एक वज्रमिव पुष्प॥ प्रतिहास प्रतीपो हासोस्य प्रतीहास इत्यपि पाठ ॥शतभास शतभासा पुष्पाणि यस्य इत्याद्युत्य॥ चण्डात चण्डमतति अतसातत्यगमन॥हयमारक हयानामारक ७६ करवीर

पीताकुरंटकोझिंटीतस्मिन्सहचरीद्वयो ७५ ओड्रपुष्पजपापुष्पवज्रपुष्पातिलस्ययत् प्रतिहासशतभासचण्डातह
यमारका ७६ करवीरकरीरेतुक्रकरग्रथिलावुभौ उन्मत्त कितवोधूर्तोधत्तूर.कनकाह्वय ७७

करवीरयति वीरविक्रान्तो कर वीर कृपाणस्याद्देत्यभेदाश्वमारयो पञ्चककरवीरस्य कण्हेरइतिख्यातस्य॥ करीर कॄ्ग्णईरयति वशाकुरेकरीरोम्भोरक्षभिद्वयो पुमान्॥ क्रकर ग्रथि ल ग्रथिरस्यास्ति ग्रथिलातिशा नौणिकरीरस्य॥ उन्मत्त उन्मत्तयति॥ कितव कितवा सत्यस्य इत्याद्युत्य॥ धूर्त धूर्व्यतस्म धुर्वीहिंसायां इत्याद्युत्य॥ धत्तू र धत्तूरस्तस्मृतोधूर्तोदेविताकितव शठइतिस्वामी धूसति धूसकान्तिकरण तुरगतित्वरणयो इत्युपधेतिक धू क्किप् इत्याद्युत्य॥ (धुस्तूर । धुस्तूर । धूस्तूर । धुत्तूर । धुस्तूररक्तपुण्डरीकोधुस्तूर.कनकाह्वयइतिशब्दार्णव ॥उन्मत्त उन्मादवनिधुत्तूरमुचुकुन्दयोरितिविश्वप्रकाश ॥ मदन स्मरवसंतद्रुमि-द्धूस्तूरसिक्थकइतिमेदिनी ) कनकाह्वय कनकमाह्वयोयस्य कनकहेम्निपुंसिस्यात्किशकेनागकेसरे धत्तूरेकाञ्चनारेचकालीयेपञ्चकेपिच ७७

मातुल मास्ति नास्तितुलाऽस्य माश्रीतुलास्येतिवा कनकनामकत्वात् मातुलोव्रीहिभिन्मातृभ्रातोश्चमदनद्रुमे॥ मदन· मदयति मदोहर्षग्लेपनयोः समधत्तूर
स्यनामानि अस्यधत्तूरस्यफलेमातुलपुत्रकइत्येकं॥ फलपूरः फलेनपूर्यते पूरिआप्यायने एवंबीजपूरः॥ रुचकः रोचते रुचदीप्तौ अभीप्सितोच रुचकोबीजपूरे
चनिष्कदत्तकपोतयो·॥ मातुलुंगक. मातुश्चासौलुंगश्च चत्वारिमातुलुंगस्यमहालुंगइतिरख्यातस्य ७८ समीरण. सम्यक् ईरयति ईरगतौ समीरणस्तकपवने
पथिकंचपणिज्जके॥ मरुबकः मरौवाति आनइनिकेस्वार्थेकन्॥ प्रस्थपुष्पः प्रस्थेसानौपुष्प्यति पुष्पविकसने॥ फणिज्जकः फणोर्जातोऽस्मात् पृषोदरादिः

मातुलोमदनश्चास्यफलेमातुलपुत्रकः फलपूरोबीजपूरोरुचकोमातुलुंगके ७८ समीरणोमरुबकःप्रस्थपुष्पःफणि
ज्जकः जंबीरोप्यथपर्णासिकठिंजरकुठेरकौ ७९ सितेर्जकोत्रपाठीतुचित्रकोवन्हिसंज्ञकः

इत्याद्यूह्य॥ जबीर· जम्यते जमुअदने वीरयति वीरविक्रांतौ जम्चासौवीरश्च जंबीर·प्रस्थपुष्पेस्यात्तथादंतशठद्रुमइति जंभीरइत्यपि पंचदेशांतरेजंबीरइ
तिरख्यातस्य स्वल्पपर्णस्य पर्णासभेदस्य श्वेतमरवाइतिचरख्यातस्य॥ पर्णासः पर्णान्यस्यति असुक्षेपणे यद्वा पर्णैरसति असदीप्तौ॥ कठिंजर· कठिणंजरय
ति पृषोदरादि.॥ कुठेरकः कुंठति कुंठप्रतिघाते एरक्प्रत्ययः कन्च त्रीणिपर्णासस्य आजवलेतिबाबरीइतिरख्यातस्य ७९ अत्रपर्णासेसितेकांडपुष्पाभ्यांश्वेते
अर्जकइत्येकं॥ अर्जयति अर्जअर्जने ण्वुल्॥ पाठी पाठोऽस्यास्ति॥ चित्रकः चित्तंबुद्धिंत्रायते त्रैङ्पालने कप्रत्ययेस्वार्थेकन्॥ वन्हिसंज्ञकः वन्हिःसंज्ञा
यस्य॥ तत्रपाठीइत्यंतः वन्हिपर्यायनामकइत्यर्थ· त्रयंचित्रकस्य चिताइतिरख्यातस्य॥

अर्काह्व अर्कआह्वयस्य अर्कोर्कपर्णस्परिकेरवोनायेरिवस्यनो॥वसुक. वसति वसनिवासे उमत्ययेस्वार्थकन् वसुकःोमकेधुसिशिवमल्यर्कपर्णायो ॥ आस्फोट आस्फोटय
ति स्फुटिरविकसने आस्फोतइत्यपि टकारस्यतकार एषादशादित्वात् आस्फोतस्तुपुमानर्कपर्णेस्यात्कोविदारके आस्फोतामिरिपर्ण्याचवनमल्यान्तयापितीतिमेदिनी॥गणरू-
प. गणःबहूनिरूपाण्यस्य मनात्वात्॥विकीरण- विकीरति कृविक्षेपे विविधा किरणा यस्येत्यन्ये अन्येषामपीतिदीर्घः ८० मदार मदयतियर्ति कर्मण्यण्॥अर्कपर्ण- अर्कवस
र्णानियस्य इतिसप्तअर्कस्यरुईइतिप्रसिद्धस्यनामानि॥अत्रशङ्कुः अर्क अलति अलभूषणादौ क्विप् अलत्वासावर्कश्च॥प्रतापस प्रतापस्तपस्तस्तज स्यति कप्रत्यय इत्या
गृत्य इतिदेवेतरुईइतिरव्यातस्यनामनी॥शिवमल्ली शिवप्रियामल्ली॥पशुपतेरय अणप्रत्यय॥एकाष्ठील एकाअस्थिप्लाति सूषामादित्वातपत्व॥बुक बुकइत्यपि वाधा

अर्काह्ववसुकास्फोटगणरूपविकीरणा ८० मदारश्चार्कपर्णोत्रशुक्लेऽलर्कप्रतापसौ शिवमल्लीपाशुपतएकाष्ठीलोबुकोवसु ८१
इदारक्षादनीरक्षरुहाजीवन्तिकेत्यपि वत्सादनीछिन्नरुहागुडूचीतन्त्रिकाऽमृता ८२ जीवन्तिकासोमवल्लीविशल्यामधुपर्ण्यपि

तो कन् वकस्तबकपुष्पेस्यात्केश्रीदेवरक्तसीतिविश्वप्रकाश॥वसु. वसते वसनिवा पत्रबुकस्यरुईमदारइतिरव्यात. ८१ वृदा इयत वरिअभिवादनस्तुत्यो॥ वृ-
क्षादनी वृक्षमत्ति अदभक्षणे॥वृक्षरुहा वृक्षरोहति॥जीवन्तिका जीवति चत्वारिवृक्षोपरिजातलताविशेषस्यबेदर्ले बेराशुंडी बांधेइतिरव्यातस्य॥वत्सादनी वत्सैरद्यते
अदभक्षणे॥छिन्नरुहा छिन्नासति रोहति इगुपधेतिक॥गुडूची गुडति गुडरक्षणे॥ तन्त्रिका तन्त्रयति तन्त्रिकुटुंबधारणे॥अमृता नमृतमस्याः अमृतामागधीपथ्यागुडू-
च्यामलकीषुच ८२ जीवन्तिका जीवन्तिकागुडूच्यांचजीवाख्याशाकवद्योरितिविश्व ॥सोमवल्ली सोमस्यवल्ली ॥विशल्या विगतशल्ययस्या विशल्याग्निशिखादं
तीगुडूचीत्रिजटासुच मधुपर्णी मधुमयानिपर्णान्यस्याः नवगुडूच्या गुळवेलइतिरव्यातायाः॥

मूर्वा मुरति मुरसवेष्टने तुदादिः ॥ देवी दीव्यति ॥ मधुरसा मधुःरसोयस्या. ॥ मोरटा मुरति मुरसंवेष्टने ॥ तेजनी तेजति तेजपालने ॥ स्रवा स्रवति स्रुगतौ ८३ म-
धूलिका मधुलाति ॥ मधुश्रेणी मधुनः श्रेणी ॥ गोकर्णी । गोः कर्णइव ॥ पीलुपर्णी पीलोरिव पर्णान्यस्याः पीलुपर्णीमेचिकायांमूर्वायामोषधीभिदि संपदादि-
त्वाच्छिदः क्विप् षष्ठीतत्पुरुषः दशमूर्वाया. मूरइतिरव्याताया. इयंधनुर्गुणोपयोगिनी ॥ पाठा पठ्यते पठव्यक्तायांवाची कर्मणिघञ् ॥ अंबष्ठा अंबशब्दपूर्वकात्
स्थाधातोः कप्रत्ययेअंबांबेतिषत्वेसाधुः अंबष्ठाप्यम्ललोण्यास्यात्पाठापुष्पिकयोरपि ॥ विद्धकर्णी विद्धोकर्णोयस्या ॥ अविद्धकर्ण्यपि तत्रैव अविद्धो अछिद्रो

**मूर्वादेवीमधुरसामोरटातेजनीस्रवा ८३ मधूलिकामधुश्रेणीगोकर्णीपीलुपर्ण्यपि पाठांबष्ठाविद्धकर्णीस्थापनीश्रेयसी
रसा ८४ एकाष्ठीलापापचेलीप्राचीनावनतिक्तिका कटुःकटंभराशोकरोहिणीकटुरोहिणी ८५**

स्थापनी स्थापयति स्थापनंरोपणेपुंसिवनेपाठौषधौस्त्रिया ॥ श्रेयसी अतिशयेनप्रशस्ता श्रेयसीकरिपिप्पल्यामभयापाठयोरपि ॥ रसा रस्यते रसआ-
स्वादने ८४ एकाष्ठीला एकबीजा ॥ पापचेली पापेचलति चलविलसने ॥ प्राचीना स्वार्थेरवः ॥ वनतिक्तिका वनेतिक्तास्वार्थेकन् दशपाठाया. पाडवळी पाहा
डमूळइतिरव्याताया: ॥ कटुः कटति कटेवर्षावरणयो: कटुःस्त्रीकटुरोहिण्यांलताराजिकयोरपि ॥ कटंभरा भरेतिपाठेभृधातो. ॥ कटति कटंवृणोति वृञ्वरणे
कटंवराइत्यपि ॥ अशोकरोहिणी अशोकइवरोहति आरोहणंकरोति व्यक्तमपीदंनाम अशोकाकटुरोहिण्यामशोकोवंजुलद्रुमइतिरभसः ॥ रोहिणीकटुरोहिण्या
मितिरुद्रः कटुरोहिणी कटुश्चासौरोहिणीच ८५

मत्स्यपित्ता मत्स्यानांपित्तमिव तिक्तत्वात् ॥ कृष्णभेदी कृष्णोनवर्णंभेदछेदोऽस्याः यद्वा कृष्णानामभक्तभिनत्ति कृष्णभेदेकृष्णभेद्यन्वररुहेतिनिघण्टु ॥ चक्रांगी चक्राकारमंगमस्याः चक्रांगीकटुरोहिण्याभिनिर्देश ॥ शकुलादनी शकुलैरद्यते अर्शोकेदारकुटकीइतिख्याताया ॥ आत्मगुप्ता आत्मनागुप्ता दुःस्पर्शत्वात् ॥ अजहा नजहातिश्वकान् ॥ अडेत्यपिपाठः नंत्रिक्तजडयति ॥ अव्यण्डा नविगतमण्डमस्याः अव्यण्डाहृषभीगुप्तेनीदु ॥ कण्डूरा कण्डूंराति रादाने कण्डूरेतिपाठ कपिकच्छूश्चकण्डूरकण्डूरा शूकशिंबिकेतीदु प्रावृषायणी प्रावृषामेति अयनेवा प्रावृषातुजल्पार्णवदर्शितिकाण्डशेष ८६ ऋष्यप्रोक्ता ऋष्येश्रृंगे प्रोक्ता ऋषिभिरप्रोक्तावा ऋष्यप्रोक्ता शतावर्यामलाशूकशिंबिषु ॥ शूकशिंबि शूकयुक्ताशिंबि शश्वच्छाकशिंबिराणिनश्शूकशिंबि इत्यूष्मविवेकादितालव्यादि शूकशिंबिश्चमर्कटी मर्कटी

मत्स्यपित्ताकृष्णभेदीचक्रांगीशकुलादनी आत्मगुप्ताऽजहाऽव्यण्डाकण्डूराप्रावृषायणी ८६ ऋष्यप्रोक्ताशूकशिंबि
कपिकच्छुश्चमर्कटी चित्रोपचित्रान्यग्रोधीद्रवन्तीशंबरीवृषा ८७ प्रत्यक्श्रेणीसुतश्रेणीरण्डामूषिकपर्ण्यपि

शूकशिंबिवोचेतिवाचस्पति ॥ कपिकच्छुः कपीनांकच्छु कण्डूहेतुत्वात् ॥ मर्कटी मर्कटीव विविधचेष्टाहेतुत्वात् नवकुवली कुहिरीइतिख्याताया मर्कटतुल्यलोमयुक्तत्वान्मर्कटी ॥ यत्स्पर्शेनकण्डूउत्पद्यतेऽत कण्डूरा ॥ चित्रा चित्ररूपमस्त्यस्याः मत्वर्थेअच् ॥ चित्रास्सुपर्णीगोडवासाभद्रादंतिकासुच ॥ माषायासर्पनस्त्रभन्नदीदे विषुचर्ल्लिया ॥ उपचित्रा चित्रमुपगता ॥ न्यग्रोधी न्यक्रुणद्धि बहुमूलत्वात् ॥ द्रवन्ती द्रवति द्रुगतौ लट् शतृ ॥ शंबरी शंवृणोति इञ्वरणे शमिधातोरिरन् ॥ वृषा वर्षति वृषुसेचने इगुपधेतिक ८७ प्रत्यक्श्रेणी प्रतीचीश्रेणीयस्या ॥ सुतश्रेणी सुतानाम्श्रेणीयस्या ॥ रण्डा रमतेऽत्र रमुक्रीडाया स्यामीतुच

डेत्याह तत्रतुचंड्यते चडिकोपेघञ् ॥प्रत्यश्रेणीवृषाचंडापुत्रश्रेण्यारखुपर्णिकेतिनिघंटु.॥मूषिकपर्णी मूषिककर्णाकारंपर्णमस्याः दशामूषिकपर्ण्याः उंदीरकानी
इतिरव्यातायाः ॥अपामार्गः उपसर्गस्यघञीतिदीर्घः अपमार्ज्यतेऽनेन अपकृष्टः आसमंतान्मार्गोस्येतिवा ॥शेरवरिकः शिरवरेप्रायेणभवति अध्यात्मादिः॥धामार्गवः
धाम्नोर्ग धामार्गः तवाति अधामार्गवइत्यपि अधामार्गवोपामार्ग कोशातकीत्वेतिद्यर्थे॥मयूरकः मयूरप्रतिकृतिःकन् मयूरकोप्यपामार्गेक्लीबतुत्थांजनेपुनः ८८ प्र
त्यक्पर्णी प्रत्यचीपर्णान्यस्य केशपर्णी केशाइवपर्णान्यस्याः कीशपर्णीइतिगुरुचरणाः तत्रेत्थं कपिलोमतुल्यानिलोमशानिपर्णान्यस्याः कपिलोमतुल्यत्वंलोम
कशिग्वीध्वस्तइतिवत् ॥किणिही किणिनोव्रणान्जिहीते ओहाङ्गतौ आतइतिकप्रत्ययेगौरादित्वात्ङीष्हंहिरितिपक्षे अन्येषामितिङः खरमंजरी खरामंजरि

अपामार्गःशेरवरिरवरिकोधामार्गवमयूरकौ ८८ प्रत्यकूपर्णीकेशपर्णीकिणिहीरवरमंजरी हंजिकाब्राह्मणीपद्माभा
र्गीब्राह्मणयष्टिका ८९ अंगारवल्लीबालेयशाकबर्बरवर्धकाः मंजिष्ठाविकसाजिंगीसमंगाकालमेषिका ९० रस्याः अष्टअपामा

र्गस्य आघाडाइतिरव्यातस्य ॥ हंजिका हंतिरोगान् पृषोदरादिः॥फंजिकेतिस्वामी ॥ब्राह्मणी ब्रह्मण·इय ॥ पद्माकारपुष्पत्वात्॥भार्गी भर्गोस्त्यस्या. प्रज्ञादित्वादण्
ङीप् ॥ ब्राह्मणयष्टिका ब्राह्मणस्ययष्टिरिवताद्दशप्रकांडत्वात् ८९ अंगावल्ली अंगारवतवल्ल्यस्याः ॥वालेयशाकः वालेयस्यशाकः ॥ वर्वरः ववर्ति वृञ्वरणे॥वर्धकः
वर्धते वृधुछेदने नवभार्ग्या भारगीइतिरव्यातायाः ॥मंजिष्ठा मंजेःशोभनेवर्णेतिष्ठति इत्याद्यूत्यं॥विकसा विकसति कस्गतौ ॥विकषेतिस्वामी तत्रविकषति कषहिं-
साया ॥जिंगी जिंगतीतिजिंगी ॥समंगा समंततोऽंगति पचाद्यच् शकंध्वादिः॥कालमेषिका कालंवर्णमिषति भिषस्पर्धायां मजिष्ठाकालमेषिकेतिनिघंटुः ९०

मण्डूकपर्णी मण्डूकस्येव पर्णमस्याः ॥ भण्डीरी भडिगतौ बाहुलकादीरन् ॥ भंडी भदन्ति भण्डिभाषणे भडिगतौ शोविशरव. रक्तमञ्जिष्ठिरिकाचेतीड् ॥ योजनवल्ली योजनगामिनी वल्ली योजनपर्ण्यपीतिपाठ नवकमजिष्ठायाः ॥ यास यसुप्रयत्ने भावेघञ् मत्वर्थेअच् सुमिम्मणामिम्मणयो· यीतीतियवास ॥ दुःस्पर्शः दुःखेनस्पृश्यते स्पृशासस्पर्शने ॥ धन्वयास धन्वनायास मरूभवत्वात् धनुर्यासइत्यपिपाठ ॥ कुनाशक. कुं नाशयति णश अदर्शने ९१ रोदनी रोदयति रुदिरश्रुविमोचने चोदनीइतिगुरुपादा ॥ कच्छुरा कच्छुराति रादाने ॥ अनन्ता नान्तोस्या ॥ समुद्रान्ता समुद्रान्तोस्त्यस्या अच् मत्वर्थे दुरालभा दुःखेनालभ्यते दुलभषपासो दशाधन्वयासस्य पमासाइतिख्यात

मण्डूकपर्णीभण्डीरीभण्डीयोजनवल्ल्यपि यासोयवासोदुःस्पर्शोधन्वयासःकुनाशक ९१ रोदनीकच्छुरानन्तासमुद्रान्तादुरालभा
पृश्निपर्णीपृथक्पर्णीचित्रपर्ण्यङ्घ्रिपर्णिका ९२ क्रोष्टुविन्नासिंहपुच्छीकलशीधावनीगुहा निदिग्धिकास्पृशीव्याघ्रीबृहती
कण्टकारिका ९३

स्य ॥ पृश्निरल्पपर्णमस्याः ॥ पृथक्पर्णी पृथक्असक्तपर्णमस्या ॥ चित्रपर्णअस्त्यस्याः मत्वर्थेअच् ॥ अङ्घ्रिपर्णिका अङ्घ्रावस्यापर्णान्यस्या अग्निवल्लिकेतिकेचित् ९२ क्रोष्टुविन्ना क्रोष्टुभिर्विन्ना विदलाभे ॥ सिंहपुच्छी सिंहपुच्छवत्पुच्छमस्या सिंहपुच्छाकारपुच्छत्वात् ॥ कलशी कलश्यति शोतनूकरणे इन्प्रत्ययेबाहुलकाराकारलोप ॥ धावनी धावति धावुगतिशुद्ध्यो बाहुलकात् गुहा गूहति गुहूसंवरणे नवसिंहपुच्छ्या उक्तापिरुत्वणइतिख्याताया ॥ निदिग्धिका निदिह्यतेस्म दिहउपचये कर्मणिक्तेटाप् स्वार्थेकन् ॥ स्पृशी स्पृशति स्पृशस्पर्शने इगुपधेतिकेगौरादित्वाङ्ङीष् ॥ व्याघ्री व्याजिघ्रति आतश्चोपसर्गेइतिकप्रत्यय जातित्वात्ङीष् ॥ बृहती वर्तमानेइतिनिपातित ङीप्च ॥ कण्टकारिका कण्टकानिर्यति ऋगतौ ९३

प्रचोदनी प्रचोदयति चुदसंचोदने कर्तरिल्युट् ॥ कुली कोलति कुलसंस्त्याने इगुपधेकप्रत्ययेगौरादित्वान्ङीष् ॥ क्षुद्रा क्षुणत्ति क्षुदिरसंपेषणे रक्प्रत्ययः ॥ दुःस्पर्शा दुःखेन स्पृश्यते ॥ राष्ट्रिका मत्वर्थेठन् टाप् राष्ट्रमस्त्यस्याः दशाकटकारिकायाः रिंगणीइतिख्यातायाः ॥ नीली नीलादोषधौइतिङीष् ॥ काला काल्यते ॥ क्लीतकिका क्लीतकंक्रयो स्त्यस्याः क्रीइतिरेफस्यलत्वंअत ठन् ॥ ग्रामीणा ग्रामेभवा ग्रामाद्यखञौइतिखेईनादेशः णत्वंटाप् ॥ मधुपर्णिका ग्रामीणानीलिकायांरूढ़ोग्रामोद्भूतोभिधेयवत् ॥ मधुप- र्णिका मधुराणिपर्णान्यस्याः ९४ रंजनी रंजयति कर्तरिल्युट् णिलोपस्यस्थानिवद्भावान्नलोपोन ॥ श्रीफली श्रीमत्फलमस्याः ॥ तुत्था तुद्यते तुदव्यथने तुत्थयतिवा

प्रचोदनीकुलीक्षुद्रादुःस्पर्शाराष्ट्रिकेत्यपि नीलीकालाक्लीतकिकाग्रामीणामधुपर्णिका ९४ रंजनीश्रीफलीतुत्थाद्रो णीदोलाचनीलिनी अवल्गुजःसोमराजीसुवल्लिःसोमवल्लिका ९५ कालमेषीकृष्णफलावाकुचीपूतिफल्यपि

तुत्थआवरणे तुत्थाश्रीफलिकाभेलासारवाह्नीचरजनीतितिनिघंटुः तुत्थमंजनभेदेस्यान्नीलीसूक्ष्मैलयोः स्त्रियां ॥ द्रोणी द्रवति द्रुगतौ तूणीइतिप्रांचः ॥ तूणीनील्यांनिषं गेन्वेतिमेदिनी तूणीतुनील्यातूणानिषंगकइतिविश्वप्रकाशः ॥ दोला दोलयति दुलउत्क्षेपे पचेतिस्वामी ॥ नीलिनी नीलोवर्णोस्त्यस्याः मत्वर्थेइनिः एकादशानील्याः इ- यंवस्त्रादिरंजनकारिणीकृष्णवर्णा ॥ अवल्गुज अवल्गो र्जातः ॥ सोमराजी सोमइव सोमेनवाराजति राजृदीप्तौ सोमराजिशब्दः ङीबंतइन्नंतश्च ॥ सुवल्लिः शोभ नावल्लिरस्याः ॥ सोमवल्लिका सोमस्यवल्लिःस्वार्थेकन् ९५ कालमेषी कलंमिषति मिषस्पर्धायां कालमेशीत्यपि ॥ कृष्णफला कृष्णंफलमस्याः ॥ वाकुची वातंकोच यति पृषोदरादित्वात्तलोपः कुचशब्दे ॥ पूतिफली पूतिफलेषुअस्याः अष्टौवाकुचीबावचीइतिख्यातायाः ॥

कृष्या कृष्णोवर्णोऽस्त्यस्या कृष्णास्याद्ग्रैपदीनीलीकणाद्राक्षासुयोषिति ॥ उपकुल्या उपकालति कुलसंस्त्याने ॥ वैदेही विदेहेभवा वैदेहीरोचनासीतावाणीस्त्रीपिप्पलीषुच ॥ मागधी मागधेषुभवा मागधीस्त्रीकणायूथ्योर्वाच्यवन्मागधोऽन्यवे शुक्लजीरेस्यात्स्त्रियाजेशकुजीरकयदिनो ॥ चपला चपति चपसान्त्वने इत्यादिल्वातकलच् ॥ कणा कण-ति कणशब्दे कणाजीरककुम्भीरयक्षिकापिप्पलीषुच ९६ उषणा ओषति उषदाहे उषणाइत्यपि नन्दुषति उष्रुजायां ऊषणेमरिचेक्लीबकणायामूषणास्त्रिया ॥ पि-प्पली पिपर्ति पृपालनपूरणे पृषोदरादि पिप्पलसलिलेवस्त्रेच्छेदेभेदेचनानर्थे ॥ निरर्गलेपक्षिभेदेकणायांपिप्पलीस्मृता पिप्पलिरित्यपि ॥ शौंडी शुण्डायांभवा मद्य-पानगृहभवत्वात् शौंडोमत्तेचविख्यातेपिप्पल्यांतुभवेत्स्त्रिया ॥ कोला कोलति कुलसंस्त्याने कोलंकोलफलेक्लीबंपिप्पलीचव्ययो स्त्रिया दशपिप्पल्या ॥ करि

कृष्णोपकुल्यावैदेहीमागधीचपलाकणा ९६ उषणापिप्पलीशौंडीकोलाऽथकरिपिप्पली कपिवल्लीकोलवल्लीश्रेयसीवशि-
र:पुमान् ९७ चव्यंतुचविकाकाकचिंचीगुंजेतुकृष्णला पलंकषात्विक्षुगंधाश्वदंष्ट्रास्वादुकंटक ९८ पिप्पली करीवपिप्पली बृह-त्वात् ॥ कपिवल्ली कपिरिववल्ली ॥ कोलवल्ली कोल इवच ल्ली ॥ श्रेयसी अतिशयेनप्रशस्ता ॥ वशिरः वस्ते तालव्यपाठेव शकान्तेवष्टि वसआच्छादने वशिर पुमान् पं-चगजपिप्पल्या ९७ चव्य चवति चर्वअदने यत् पृषोदरादि एवंचविकेत्यत्र अकारेशेरेफलोप चव्यंतुचविकेक्लीबवचायामपियोषिति चव्येत्यपि चव्याकोलान्तचवि-केतिहेमचंद्र चविका चविकइत्यपिपुंसिवर्तते केचिच्चव्यादिद्वयपूर्वान्वियौत्याहुः अत्रपक्षेतुस्थानेच पाठ ॥ इयचव्यस्य चवक इतिख्यातस्य ॥ काकचिंची काकवर्णा-चिंचा काकचिंचि काकचिंचेत्यपि भवति ॥ गुंजा गुंजति गुंजिअव्यक्तशब्दे गुंजातुकाकचिंचायांपटहेचकलध्वनावितिमेदिनी ॥ कृष्णला कृष्णवर्णलाति त्रीणिगुंजायां।

पलंकषा पलंमांसकषति कषहिंसार्थः पलंकषागोक्षुरकेस्त्रियांरास्नापलाशयोरितिरभसः ॥ इक्षुगंधा इक्षुगंधइवगंधोऽस्याः इक्षुगंधाकोकिलाख्येक्रुष्यांशाकेचगो
रइत्युक्तत्वात् ॥ श्वदंष्ट्रा शुनोदंष्ट्रेव ॥ स्वादुकंटकः स्वादुःकंटकोऽस्य ९८ गोकंटकः गोः धेनोः पृथिव्याः वाकंटकः गोकंटकोगोक्षुरकेस्थपुटेचगवांखुरे ॥ गोक्षुरकः क्षुरा
ने इगुपधेतिकः ॥ वनशृंगाटः वनस्यशृंगाटइव सप्तगोक्षुरस्य गोखरू सराटाइतिख्यातस्य ॥ विश्वा विशति विशप्रवेशने विश्वंक्रुत्स्नेचभुवनेविश्वेदेवेषुनागरे विश्वाम्पि
विषायांस्यादित्युक्तत्वात् ॥ विषा कप्रत्ययः वेवेष्टि विष्लृव्याप्तौ विषंजलेऽतिविषायास्त्रियांक्ष्वेडेतुनस्त्रियामित्युक्तत्वात् ॥ प्रतिविषा प्रतीपंविषमस्याः ॥ अतिविषा विषं
अतिक्रांता ॥ उपविषा विषमुपगता ॥ अरुणा अरुणोवर्णोऽस्या मत्वर्थेप्रत्ययः अरुणाऽतिविषाश्यामामंजिष्ठात्रिवृतासुच ९९ शृंगी शृणाति शृहिंसायां ,शृंगी

गोकंटकोगोक्षुरकोवनशृंगाटइत्यपि विश्वाविषाप्रतिविषाऽतिविषोपविषाऽरुणा ९९ शृंगीमहौषधंचाथक्षीरावीदुग्धिका
समे शतमूलीबहुसुताऽभीरुरिंदीवरीवरी १०० ऋष्यप्रोक्ताभीरुपत्रीनारायण्यःशतावरी

यामृषभेस्वर्णमीनविशेषयोरितिविश्वः ॥
महौषधं महच्चतदौषधंच महौषधंचशुंठ्यांस्याद्विषायांलशुनेपिच अथोअतिविषायाः अतिविखइतिख्यातायाः ॥ क्षीरावी क्षीरमवति कर्मण्यण् ङीप् अवर
णार्थे ॥ दुग्धिका दुग्धमस्त्यस्याः मत्वर्थेठन् दूधीदुग्धीइतिख्यातायाः ॥ शतमूली शतंमूलान्यस्याः ॥ बहुसुता बह्वःसुतायस्याः ॥ अभीरुः नभीरुः स्थिरपत्रत्वात
॥ इंदीवरी इंदीवरमस्त्यस्याः इंदीवरंकुवलयेशतावर्यांचयोषिति इत्युक्तत्वात् नीलोत्पलाकारपुष्पत्वात् ॥ वरी वृणोति अच् प्रत्ययेगौरादित्वात् ङीष् १०० ऋ
ष्यप्रोक्ता ऋष्येःप्रोक्ता ॥ अभीरुपत्री अभीरूणि पत्राण्यस्याः ॥ नारायणी नारायणोऽस्त्युतेभीरुगौर्योर्नारायणीमता ॥ शतावरी शतेनावृणोति गौरादिः
शतावरीतुशच्यांस्यादिंदीवर्यामपिस्त्रियां ॥

अहेरु नहिनस्ति द्विगतो ऽस्ताकस्त्रीलिंग शतमूल्या सहस्रमूली शतावरीइतिख्यातायाः ॥ पीतद्रुः पीतद्रवति द्रुगतौ ॥ कालीयक कालस्याय छातात्स्वार्थेकन् काल यकइतिवापाठ अग्निकालाभ्यामितिढकिस्वार्थेकन् ॥ मतिदिष्टथैकटिनीसचकालेयकःस्मृत कालीयकोदारुनिशेतिरुद्र ॥ हरिद्रु हरि पिंग पीताबाद्रुरस्य द्रु शा स्त्रा हरिद्रु पीतचंदनमितिनिघंट १०१ दार्वी दर्पते दविदारण दारुभ्याद्यधिषयण दार्वीदारुहरिद्रास्तथागोजिह्विकौषधौ ॥ पचंपचा पचति एषोदरादि पीत दारुपचंपचेतिनिघंट पचबचेत्यपि ॥ दारुहरिद्रा दारुभ्यासौहरिद्राच ॥ पर्जनी पिपर्ति एपालनपूरणयो विचूर्णपर् नजनपतिण्यतात्कर्मण्यण् समकब्दारु हल्दइतिख्यातस्य ॥ वचा वचेरतमावितण्यर्थात्सचाद्यच् ॥ उग्रगंधा उग्रोगंधोऽस्याः उग्रगंधाःजमोदायांवचायांछिक्किकौषधौ ॥ षड्ग्रंथा षट्ग्रंथाः ग्रंथयोऽ

अहेरुरथपीतद्रुकालीयकहरिद्रव १०१ दार्वीपचंपचादारुहरिद्रापर्जनीत्यपि वचोग्रगंधाषड्ग्रंथागोलोमीशतपर्विका १०२

शङ्खाहैमवतीवैद्यमातृसिंह्योतुवाशिका वृषोऽटरूषःसिंहास्योवासकोवाजिदंतक १०३

स्याः षड्ग्रंथातुवचायास्त्रीस्यात्करञ्जातरेपु मान् स्यकन्द ॥ गोलोमी गोर्लोमास्याः गोशब्दोगोलोमसदृशोलाक्षणिक ॥ शतपर्विका शतपर्वाण्यस्याः ॥ शतपर्विकान्वदूर्वायांवचायामपियोषिति पचवचाया वेखंड इतिख्यातायाः १०२ याशङ्खाकवासाहैमवतीस्येक हिमवति भवा ॥ वैद्यमाता वैद्यस्यमातेव ॥ सिंही हिनस्ति हिंसिहिंसायाः ॥ वाशिका वाश्यते वाशृशब्दे गुराश्चेतिअप्रत्यये स्वार्थेकन् इत्वदत्वमध्यापि वासिकेत्यपि तत्रैवं वासयति वासोगृहेव्यवस्थानेवतास्यावाटरूषकइतिरुद्र ॥ वृष वर्षति मधु वृषुसेचने इगुपधेतिक वृष स्याद्राभवेधर्मेसौरभे येन्यशङ्कुकेइतिमूर्धन्यान्तेविश्व अटरूष अटन्गच्छतोरुष्यति रुषहिंसायां मूलविभुजादि इत्यात्कत्य ॥ सिंहास्य सिंहआस्यमस्य सिंहास्यसदृशपुष्पत्वात् ॥ वासक वासयति ॥ वाजिदंतक वाजीदंतोस्य वाजिदंताभकेसरत्वात् अष्टौअटरूषस्य अडूसाइतिख्यातस्य १०३

आस्फोटा आस्फोटयति स्फुटिरविकसने आस्फोतात्यपि आस्फोतागिरिकर्ण्यांचवनमल्यांचयोषितीतिमेदिनी ॥ गिरिकर्णी गिरिर्बालमूषिकाकर्णोऽस्या नकर्णतुल्यमात्रत्वात् विष्णुक्रां
ता विष्णुनाक्रांता ॥ अपराजिता नपराजिता चत्वारिविष्णुक्रांताया ॥ इक्षुगंधा इक्षुगंधोऽस्याः इक्षुशब्दइक्षुगंधसदृशेलाक्षणिकः इक्षुगंधाकोकिलाक्षेक्रोष्ट्र्यांकाशेचगोक्षुरे ॥ कांडे
क्षुः कांडेनेक्षुरिव ॥ कोकिलाक्षः कोकिलोऽक्षियस्य कोकिलशब्दः कोकिलाक्षिसदृशेलाक्षणिकः ॥ इक्षुरः इक्षुरिवगंधंराति ॥ क्षुरः क्षुरइव क्षुरःस्याच्छेदनद्रव्येकोकिलाक्षेचगो
क्षुरइतिविश्वः पंचकोकिलाक्षस्य कोळसंदा तालिमखान्याने बीं कोलिस्ताइतिख्यातस्य १०४ शालेयः शालीनांभवनंक्षेत्रं शालेयं तदस्यास्ति मत्वर्थेअच् ॥ शीतशिवः शीत
मस्यास्ति शिवमस्यास्ति शीतश्चासोशिवश्च ॥ छत्रा छत्रमस्यास्ति छत्राकारस्तबकत्वात् ॥ मधुरिका मधुरोरसोस्त्यस्याः अतइनिठनौ ॥ मिसिः मस्यते मसीपरिमाणे इन्बा

आस्फोटागिरिकर्णीस्याद्विष्णुक्रांताऽपराजिता इक्षुगंधातुकांडेक्षुकोकिलाक्षेक्षुरक्षुराः १०४ शालेयःस्याच्छीतशिवश्छत्रा
मधुरिकामिसिः मिश्रेयाप्यथसीहुंडोवज्रः स्नुक्स्त्रीस्नुहीगुडा १०५ समंतदुग्धाथोवेल्लममोघाचित्रतंडुला

हुल्कादितइत्वं मिसिःस्त्री
मधुरामांस्योः शतपुष्पाजमोदयोः मिशिः मिशशब्देरुदिकारादितिङीषि मिशी मिशीरितितालव्यांत आहसोमनंदी ॥ मिश्रेया मिश्राचासोएया शकंध्वादिः षट्मधुरिका-
याः बडिशेपइतिख्याताया ॥ सीहुंडः सीतिहुडते हुडिवरणे वज्रद्रुम. सिहुडोऽथेतिरभंसात् ह्रस्वादिरपि शीहुंडइतितालव्यादिरपि ॥ वज्रः वज्रागुडूचिकायांचवज्रोस्त्रीधनुर्
स्मृत ॥ स्नुक् स्नुही स्नुक्हकारांतःस्त्री स्नुत्यानि स्नु'हउद्गिरणे स्नुहीस्नुहास्नुगित्यमरदत्तः ॥ गुडा गुडति गुडवेष्टने ॥ गुडोगोलेक्षुविकृतीस्नुहीगुडिकयोर्गुडेतिरुद्रः वज्र
द्रुः स्नुक्स्नुहीगुडेतिपाठ. १०५ समंतदुग्धा समंतात् दुग्धमस्या. षट्वज्रद्रुमस्य शेरनिवडुंगइतिख्यातस्य ॥ वेल्लं वेल्लति वेल्लचलने अथवेल्लंकृमिघ्नंतत्तंडुलइतिरभस. ॥
अमोघा नमोघा मोघापीत्यन्यत्र कृमिघ्नंतंडुलंमोघेतिवाचस्पतिः ॥ चित्रतंडुला चित्राःतंडुलाअस्याः ॥

खराश्वा खरमश्नुते अशूव्याप्तौसंघातेच खरैरश्यतेवा एनसखेभशभोजने ॥ कारवी केनजलेनरौति रुशब्दे कवस्यमयूरस्यय ॥ दीप्य दीप्येसाधु ॥ मयूर मीनातिरोग मीञ्हिंसाया मयूरोनीलकठेपि स्यान्मयूरशिखोषधौ इतिरभस ॥ लोचमस्तक लोचयति लोचृभासने लोकदर्शने लोचोदर्शनीयोभासमानो वामस्तकोऽस्य लोचमर्कटइत्यपि पचमयूरशिखाया मोरशेडाइतिख्याताया अजमोदाइत्यपिमत ११ गोपी गोपायति गुपूरक्षणे गोपाइत्यपि गोपी-श्यामागोपवल्लीगोपागोपालिकाचसेतिवाचस्पति ॥ श्यामा श्यायते श्यैङ्गतौ मक्प्रत्यय ॥ सारिवा सरणसारि अचइ सोस्तियस्या शॄहिंसाया शारिवे

## खराश्वाकारवीदीप्योमयूरोलोचमस्तक ११ गोपीश्यामासारिवास्यादनतोत्पलशारिवा योग्यमृद्धि सिद्धिलक्ष्मौ वृद्धेरप्याह्वयाइमे १२

त्यपिपाठ अनता नास्त्यतोऽस्या अनतान्त्रिशाल्यायामित्युक्तत्वात् उत्पलशारिवा उत्पलमस्त्यस्या उत्पलाकारपुष्पत्वात् यद्वा उत्पतपत्त्रमनया उत्पला चासौशारिवाच पचउत्पलशारिवाया उपरसाल्व उपलसरीइतिख्याताया ॥ योग्य युज्यते युजिरयोगे ण्यत् यद्वा योगायप्रभवति योगाद्यश्च ॥ ऋद्धि ऋध्नोति ऋधुवृद्धौ ऋद्धिस्यादोषधीभेदेसमृद्धावपियोषिति ॥ सिद्धि सिध्यति षिधुसराध्द्यौ यद्वाकरणे सिद्धिस्तमोक्षेनिष्पत्तियोगयोरितिहैम ॥ लक्ष्मी लक्षते लक्ष्यतेवा लक्षदर्शने लक्ष्मी सपत्तिशोभयोरित्युक्त चत्वारिऋद्धिनामकस्य ओषधिविशेषस्यकेचणी मुरडशींगइतिचख्यातस्य इमेयो-ग्यादयश्चत्वारोवृद्धेर्वृद्धिनामकौषधेरप्याह्वयाःस्यु १२

कदली कदते कंपतेवा कदिआह्वानेरोदनेच रंभावृक्षेऽश्वकदलीपताकामृगभेदयोः अजादित्वाट्टापिकदला कदलोऽपि कदलश्च कदल्यसावितिव्याडिः ॥ वारणबुसा वारणा नांबुसा बुस्यतेवा बुसउत्सर्गे बुषेतिमूर्धन्यांतइतिकेचित् ॥ रंभा रभ्यते रंभाकदल्याप्सरसोरिति ॥ मोचा मुंचति मुच्यतेवा मुच्लृमोक्षणे ॥ अंशुमत्फला अंशुमंति सू क्ष्मावयवंतिफलान्यस्या यद्वा अंशुमानिवफलान्यस्याः ॥ काष्ठीला ॥ षट्कदल्याः ॥ मुद्गपर्णी मुद्गपर्णवत्पर्णं यस्याः ॥ काकमुद्गा काकेनेषज्ज्वलेनमुदं गच्छति इत्याद्यूह्यं ॥ स ह्वा त्रयंकाकमूगरानमूगइतिख्यातायाः काकमुद्गायाः ११३ वार्ताकी वार्तमारोग्यमाकयति अकुटिलायांगतौ यद्वा वार्तंफल्गु अकंदुःखयस्याः पुंस्यपिवार्ताकइति वार्ता वार्ताकुरि त्यन्यत्र पतिंगणस्तुवार्तागोवार्ताकुःशाकबिल्वकइतिरभसः ॥ वार्तावातिगणेवृत्तावितिविश्वः वार्ताकुरेषागुणसमयुक्तेतिवैद्यकाद्वार्ताकुरपि ॥ हिंगुली हिंगुल्माति हिंगुलोवर्णकद्रव्येना

कदलीवारणबुसारंभामोचांशुमत्फला काष्ठीलामुद्गपर्णीतुकाकमुद्गासहेत्यपि ११३ वार्ताकीहिंगुलीसिंहीभंटाकीदुष्प्रधर्षिणी ना कुलीसुरसारास्नासुगंधागंधनाकुली ११४ नकुलेष्टाभुजंगाक्षीछत्राकीसुवहाचसा

भंटाक्यांतुहिंगुली ॥ सिंही हिनस्ति हिंसिहिंसायां ॥ भं टाकी भट्यते भण्यतेवा भटभृतौ भणशब्दे ॥ दुष्प्रधर्षिणी दुःखेनप्रधर्षितुमशक्या त्रिषुपापागल्भे पंचवार्ताक्याः रानवांगीडोरली इतिख्याताः ॥ नाकुली नकुलानां प्रियं नआकुलत्वंयथावा नाकुलीकुक्कुटीकंदरास्नायांचंपकेस्त्रियामित्युक्तं ॥ सुरसा शोभनोरसोऽस्याः सुरसंतुत्रिषुस्वादौपर्णासिनानपुंसकं ॥ रास्ना राति रायतेवा रस्य तेवा रादाने रसआस्वादने रास्नातुस्याद्भुजंगाक्ष्यामेलापर्ण्यामपिस्त्रियां ॥ सुगंधा सुगंधोस्त्यस्याः मत्वर्थेऽच् इत्याद्यूह्यं गंधनाकुली गंधवतीनाकुली ११४ नकुलेष्टा नकुलानामिष्टा ॥ भुजंगाक्षी भुजंगानक्षति अक्षूव्याप्तौ कर्मण्यण् यद्वा भुजंगोऽक्षियस्याः भुजंगशब्दस्यभुजंगाक्षिसदृशेलक्षणातः ॥ छत्राकी छत्रमकति छत्रा कारपर्णत्वात् अककुटिलायांगतौ ॥ सुवहा सुष्ठुवहति नवरास्नायाः सुंगसी सुंगसवेल इतिख्यातायाः ॥

रारुमासकगधयो स्थानेनागसकगधेतिपाठ ॥विदारिगधा विदार्यागध स्यापोरिनिह्रस्व षष्ठीतत्पुरुषात्त्व् ॥अशकमती अशान सत्यस्या दीर्घमूलत्वात् अंशु मान्भास्करेशालपर्ण्यामंशुमतीस्मृता ॥शालपर्णी शाल पर्णमस्या शालशब्दस्य शालपर्णसदृशोलक्षणा ॥सालपर्णीइत्यपि ॥स्थिरा तिष्ठति स्थिरा सूशालपर्ण्यां नीशानोमोक्षेचलेत्रिषु ॥ध्रुवा ध्रुवति ध्रुवस्थैर्ये कपतय पत्र्शालपर्ण्याः नावस्वला सालवणइतिरव्यातायां ॥तुंडिकेरी तुडिकान् शरीराणिईरयति ईरगतिमेरणयो ॥समु द्राता समुद्रो तोयस्या यद्वा मुद्रयासहवर्तमानो ॥नः सामीप्यमस्या आछादकत्वात् ॥कार्पासी करोति क्रियतेवा रुक्ष पास कर्पासीइत्यपिपाठ ॥बदरा बदति बदस्थैर्ये चत्वारिकार्पास्या साम्प्रर्षशीवन्यावनोद्भवा चेत्यारद्वाजीसुच्यते भरद्वाजमुनेरिवनेननिर्मितत्वात् एक ॥श्रृगी शणाति गर शृहिंसायां श्रृणातेर्न्हस्वश्चेति गन्नुमत्र श्रृगी शब्दस्भत ॥रुषभ रु-

विदारिगधांशुमतीशुमतीशालपर्णीस्थिराध्रुवा ११५ तुंडिकेरीसमुद्रांताकार्पासीबदरेतिच भारद्वाजीतुसावन्याश्रृगीतुरु षभोदृष ११६ गांगेरुकीनागबलाझषान्हस्वगवेधुका धामार्गवोघोषकस्यात्महाजालीसपीतक ११७ षति रुषीगतो ॥दृष व र्षति वृषुसेचने नयरुषभास्त्वौ षधिवि शेषस्य वेलपाटीइतिरव्यातस्य ११६ गांगेरुकी गांगजलमीरयति ईरगतो कपेन्त्र मृगय्यादिकश्चेतिसाधु ॥नागबला नागा नाहस्तिनावला ॥झषा झषतिवात झषृ हिंसार्थ ॥हस्वगवेधुका गविषुसावेधते एधवृद्धौ हस्वाचासौसकगवेधुकाच चत्वारिबलाविशेषस्य हस्वचिकणाइतिरव्या तस्य ॥धामार्गव धामऋछति रुगतो क्विप् धामारश्चासौगोश्च समासात टच् धामार्गवस्तुपुंसिस्यादपामार्गेचघोषके ॥घोषक घोषति सुषिरविशब्दने घोष- आभीरपल्यास्याद्घोपलक्षमिघोषके इघोषवल्ल्या घोसाबीदोडकीइतिरव्यातायां ॥सघोषक पीतक पीतपुष्पश्चेत्महाजालीसुच्यते ॥जालयति जलआछादने म नीचासौजालीच एक स्त्रीलिंग ११७

ज्योत्स्नी ज्योत्स्नाऽस्त्यस्याः ज्योत्स्नादिभ्यउपसंख्यानं इत्यण् सञ्ज्ञापूर्वकत्वाद्वृद्ध्यभाव ज्योत्स्नाइत्यपिपाठः ज्योत्स्नीपटोली ज्योत्स्नीतिहेम॰॥ पटोलिका पटति पटगतौ ओलच्प्रत्यय. स्वार्थेकन् पटलंवस्त्रभेदेनोषधौज्योत्स्नातुयोषिति॥ जाली जलति जलधान्ये जालंगवाक्षआनायेक्षारकेदंभवृंदयोः त्र्यंपटोलिकाया. पडवळीइति ख्या॰॥ नादेयी नद्याभवा नादेयीनागरंगेस्याज्जपायांजलवेतसइत्युक्तत्वात्॥ भूमिजंबुका भूमिलग्नाजंबुका शाकपार्थिवादिः भूमिलग्नपत्रत्वात् भूमिजंबाजवा याचव्यंगुष्ठेपिन्त्र्योषितीतिमेदिनी द्वेभूजंबा॰ भुईजांबळीइतिख्याता॰॥ लांगलिकी लांगलंपुष्पविशेषोस्त्यस्याः मत्वर्थेठन्॥ अग्निशिखा अग्नेरेवशिखायस्याः द्वे लागल्या. वागचबका कळलावीइतिचख्यातायाः॥ काकांगी काकस्येवांगंनासारूपंफलमस्याः॥ काकनासिका काकस्येवनासिकायस्याः द्वेकाकजंघाख्योषधिवि-

ज्योत्स्नीपटोलिकाजालीनादेयीभूमिजंबुका स्याल्लांगलिक्यग्निशिखाकाकांगीकाकनासिका ११८ गोधापदी तुस्रुवहामुसलीतालमूलिका अजशृंगीविषाणीस्याद्गोजिह्वादार्विकेसमे ११९

शेषस्य कावळीइतिख्यातस्य॥ गोधापदी गोधायाइवपादोमूलमस्याः॥ स्रुवहा स्रुवहति गोधापदीतुस्रुवहात्रिवहाहंसपद्यपीतिकोशांतरं द्वेहंसपादिकायाः रक्तलाजाळइतिख्यातायाः॥ मुसली मुस्यति मुसखंडने मुसलस्यादयोग्रेन्त्रपुन्नपुंसकयोःस्त्रियां॥ तालमूलिका तालोमूलमस्याः तालशब्दस्ताल मूलसदृशेलाक्षणिकः द्वे मुसल्याकंदमुसलकंदइतिख्यातायाः॥ अजशृंगी अजःशृंगमस्या. अजशब्दोऽजशृंगसदृशेलाक्षणिकः फलस्याजशृंगसदृशत्वात्॥ विषाणी विषाणमस्त्यस्याः द्वेमेढशिंगीइतिख्यातायाः॰ औषधेःइयंत्वजशृंगाकार फलाबहुक्षीरासकंटकानेत्रौषधिरितिसम्भूतिराह॥ गोजिह्वा गोर्जिह्वेव॥ दार्विका दार्वीव दारयति दृविदारणे दर्वीकिनिपाठे इवेप्रतिकृतौइतिकन् दार्वीदारुहरिद्रास्तथा गोजिह्विकौषधी द्वेदवली पाथरीइतिख्यातस्य क्षेत्रजन्यशाकभेदस्य ११९

ताम्बूलवल्ली पृषोदरादि. ताम्यति तमुग्लानौ बाहुल्यात् बूलमज्जने ताम्बूलं वासो बूलीच इत्याहुरन्ये ॥ ताम्बूली तांबूलीनागवल्ल्यास्त्रीक्लीबेनपुंसक ॥ नागवल्ली नागलोक यवल्ली त्रीणिनागवल्ल्या पानवेलइतिख्यातायाः ॥ द्विजा द्विर्जाता द्विजोविप्रक्षत्रियवैश्यदंतेविहगमइतिचंद्र ॥ हरेणु मूलेसर्वोदीर्घ हरिति रूपायेपिहरेणुर्नारेणु कायास्त्रियामवेदितिरुद्र ॥ रेणुका रेणुरस्यास्तीतिव्रीह्यादित्वाट्ठन्कादेश रेणुकापिहरेणौनद्यामद्रान्यस्यमातरि ॥ कौन्ती कुन्तीषुदेशेषु भवा ॥ कपिला वर्णोस्त्यस्या स्त्रीरेणुकायाकपिलावर्णेनाकुकुरेमुनौ अनलेवासुदेवेचकपिल परिकीर्तित ॥ भस्मगंधिनी भस्मनोगंध भस्मगंधोस्त्यस्याः षट्रेणुकाख्यगंधद्रव्यस्यरेणुकाबी जइतिप्रसिद्धस्य ॥ एलावालुक एलयति क्वाचन् टाप् इलप्रेरणे एलाइववलते वलमाणने बाहुलकादुण् स्वार्थेकन् एलवालुकमितिस्वामी ॥ ऐलेय इलायामपत्य

ताम्बूलवल्लीताम्बूलीनागवल्ल्यप्यथद्विजा हरेणूरेणुकाकौन्तीकपिलाभस्मगन्धिनी १२० एलावालुकमैलेयसुगन्धिहरिवालुकं वालु कंचाथपालङ्क्यांमुकुन्दःकुन्दकुन्दुरू १२१ वालंह्रीबेरबर्हिष्ठोदीच्यकेशाम्बुनामच ॥ सुगंधि शोभनोगंधोस्य गंधस्येतिइत्व ॥ हरिवालुक हरि

द्वर्णोवालुक ॥ वालुक वलमाणने बाहुलकादुण् पञ्चवालुकाख्यगंधद्रव्यस्य वालुक काकडी इतिख्यातस्येत्यपिमत ॥ पालङ्क्या पाडाभक्ष्यते अकपदेलक्षणेन ॥ मुकुन्द मुक्तिंददाति मुक्तिपूर्वाद्दाधातोः केमुक्तिशब्दस्यपृषोदरादित्वात्मुकुम् मुकुन्द पारदेविष्णोरत्नभेदेचकुंदरौ ॥ कुंद कुम्भमिमुनत्ति उदीकुंदने ॥ कुन्दरु कुम्भ नत्ति उदयतिवा उभयत्रशकन्ध्वादित्वात्पररूप ॥ चत्वारिपालकी पोईशाक वास्तुकाकारा पालखइतिचख्यातस्य १२१ वाल वालयति वलसंवरणे वालोनाकुंत लेऽश्वस्यगजस्यापिचवालधौ वाच्यलिंगोऽर्भकेमूर्खेह्रीबेरेपुनपुंसकमितिमेदिनी ॥ ह्रीबेर ह्रीसुन्दवेरमस्य ॥ बर्हिष्ठ बर्हिषिकुशेतिष्ठति ॥ उदीच्यं उदीचिजातं ॥ केशाम्बुनाम केशम्बाम्बुचनयोर्नामयस्यतत्केशाम्बुनाम यावत्केशाम्बुनोर्नामानितानिसर्वाणिपञ्चवालस्यज्ञेयानि ॥

कालानुसार्यं कालेनानुस्त्रियते॥वृन्द्र वर्धतिस्म वृन्दुवृद्धौ गत्यर्थेतिक्तः वृद्धोजीर्णेगवृन्देद्रेत्रिपुल्लीबंतुशैलजे॥अश्मपुष्पं अश्मनःपुष्पमिव अश्मभवत्वात्॥शीतशिवं शी
तंच च्छिवंच १२२ शैलेयं शिलायांभवं नद्यादिभ्योढक् शैलेयतालपर्ण्यान्चसैधवेशैलजेतुना पंचशैलेयस्य फूलशिलाजितइतिख्यातस्य॥तालपर्णी तालःपर्णमस्याः ता
लशब्दस्तालपर्णसदृशेलाक्षणिकः॥दैत्या दितेरियं॥गंधकुटी गंधस्यकुटीव॥सुरा सुरति सुरवेष्टने॥गंधिनी प्रशस्तोगंधोऽस्याः चत्वारिसुरायाः तालिम्पत्रभोरमांशीइति
ख्याताया:॥गजभक्ष्या गजैर्भक्ष्यते गजभक्षाइत्यपि॥सुवहा सुष्ठुवहति॥सुरभी सुष्ठुरभते सुरभिरित्यपि सुरभीरसेत्येकमपिपदं सुरभिःशल्लकीमातृभित्सुरागो
षुयोषितीतिमेदिनी॥रसा रस्यते रसआस्वादने रसःस्वादेजलेवीर्येशृंगारादौविषेद्रवे बोलरागेगृहेधातौतिक्तादौपारदेपिचेतिहेम· १२३ महेरणा महदीरणमस्याःमहसुल

कालानुसार्यवृद्धाश्मपुष्पशीतशिवानितु १२२ शैलेयंतालपर्णीतुदैत्यागंधकुटीसुरा गंधिनीगजभक्ष्यातुसुवहासुरभीरसा १२३
महेरणाकुंदुरुकीसल्लकीह्लादिनीतिच अग्निज्वालासुभिक्षेतुधातकीधातुपुष्पिका १२४ पृथ्वीकाचंद्रवालैलानिष्कुटिर्बहुलाथसा

वमीरयतिवा॥कुंदुरुकी॥सल्लकी सलति षलगतौ सल्लकत्यलक्यतेवा लक्आस्वादने शल्लकी सिल्लकी शलचलने षिलउंछे इत्यन्यत्र श्वाविद्भेदेशल्लक्याविति
लव्यादेरभसः सल्लकीसिल्लकीह्लादेतिरुद्रः॥ह्लादिनी ह्लादयति अष्टसालईइतिख्याताया:॥अग्निज्वाला अग्नेर्ज्वालेव रक्तपुष्पत्वात्॥सुभिक्षा सुष्ठुभिक्ष्यते॥
धातकी धातुकरोति तत्करोतिइतिण्यंतादण्वुल्॥धातुपुष्पिका धातुपुष्पमस्याःमत्वर्थेठन् चत्वारिधायटीइतिख्याताया: १२४ पृथ्वीका प्रथते प्रथप्रख्याने औणा
दिकः॥चंद्रवाला चंद्रस्यकर्पूरस्यबालेव कर्पूरगंधित्वात्॥एला एलयति इलप्रेरणे॥निष्कुटिः निश्चिताकुटिः कौटिल्यमस्याः निष्कुटीइत्यपि॥बहुला बहूनिबीजानि
लाति॥बहुलानीलिकायांस्यादेलायादिवियोषिति पंचएलायाः॥

को

साएलासूक्ष्मासूक्ष्मपरिमाणत्वेत् उपकुञ्चिका उपकुञ्चति कुञ्चकौटिल्याल्पीभावयो तुत्था तुदति तुदव्यथने तुत्थमञ्जनभेदेस्यान्नीलीसूक्ष्मैलयो स्त्रियां ॥ कोरगी कुरति कुरशब्दे बाहुलकादगच् ॥ त्रिपुटा त्रय पुटायस्याः त्रिपुटामल्लिकयान्चसूक्ष्मैलाभिरतो स्त्रियां ॥ त्रुटि त्रुटति त्रुटछेदे ॥ त्रुटि स्त्रीसंशयेस्वल्पेसूक्ष्मैलाका लमानयो इतिपंचसूक्ष्मैलाया १२५ व्याधि विगत आधिरनेन व्याधि कुष्ठेच्चरोगेन्चेत्युक्त ॥ कुष्ठ कुष्णातिरोग कुषनिकर्षे कुष्ठरोगेपुष्करेस्त्री ॥ परिभाव्य परि भावेसाधु तत्रसाधुरितियत् तत स्वार्थेअण् ॥ व्याप्य व्याप्यते आप्लृव्याप्तौ वाप्यमितिक्वचित्पाठ आप्यमित्यपि ॥ पाकल पाकलाति पाकलकुष्ठेभेषज्यपुंसि स्यात्कुञ्जरज्वरे ॥ उत्पल उत्पलति पलगतौ रक्षणेवा धातूनामनेकार्थत्वात् षट्कुष्ठकोष्ठगोठेकोष्ठइतिख्यातस्य ॥ शंखिनी शंखा सन्त्यस्या शंखाकारपुष्प

सूक्ष्मोपकुञ्चिकातुत्थाकोरगीत्रिपुटात्रुटि १२५ व्याधि कुष्ठपारिभाव्यव्याप्यपाकलमुत्पल शंखिनीचोरपुष्पीस्यात्केशिन्य
थवितुन्नक १२६ झटामलाऽज्झटातालीशिवातामलकीतिच

त्वात् ॥ चोरपुष्पी चोरइवपुष्पयस्या रात्रिविकाशित्वात् ॥ केशिनी केशा स न्त्यस्याः अथचोरवल्ल्या चोरशंखाहुली सारवेलइतिख्याताया ॥ वितुन्नक वितुद्यतेस्म तुदव्यथने क्तात्स्वार्थेकन् १२६ झटाऽमला नमलोऽस्या झटयते झटस घाते झटतिवा झटाचासौ अमलाच ॥ अज्झटा अदव्ययमाश्चर्ये अत् आश्चर्यस्यझट संघातोऽस्या ॥ ताली तालयति तलप्रतिष्ठाया ताल करतलेगुणमध्यमायाश्चसमि ते गीतकालक्रियामानेकरस्फालेद्रुमांतरइत्युक्त ॥ शिवा शिवमस्त्यस्या मत्वर्थेअच् ॥ तामलकी तसुन्मासावामलकीच पृषोदरादि षट्भूम्यामलक्या इत्यमलेत्यत्र झटेतिपृथक्पदत्वा अमलेतिछेद. आह्च नामलक्यामलातालीझटातामलकीतिचेति ॥

प्रपौंडरीकं तस्येदमित्यण् प्रेणसमासः पुंडयति पुडिखंडणे॥पौंडर्यं पुंडस्यार्यंप्रधानं शकंध्वादित्वात् हेपौंडर्यस्य इदंशालपर्णीतुल्यपत्रंज्ञेयं स्थलपद्मिनी गौडा.॥तुन्नः तुद्यतेस्म तुदव्यथने॥कुबेरक. कुत्सितंबेरमस्य १२७ कुणि.कुणति कुणसकोचने तुणिरितिकचित्पाठ· तत्रैवं तूणयति तूणसंकोचने पृषोदरादि-त्वात्ह्रस्वः॥ कच्छुः कचति कचदीप्तौ बाहुलकाच्छ.॥ कातलकः काम्यते कमुकांतौ लकति लकआस्वादने कांतश्चासौलकश्च॥ नंदिवृक्षः. नंद्या वृक्ष. घटून-दिवृक्षस्य नांदरुखीइतिख्यातस्य अयमश्वत्थाकारपत्र·॥ राक्षसी राक्षस·इयं॥चंडा चंडते चंडिकोपे तत्राह चंडाधनहरीशंखपुष्पास्त्रियांतिकोपने॥

प्रपौंडरीकंपौंडर्यमथतुन्नःकुबेरकः १२७ तुणिःकच्छुःकांतलकोनंदिवृक्षोऽथराक्षसी चंडाधनहरीक्षेमदुष्पत्रगणहासकाः १२८ व्याडायुधंव्याघ्रनखंकरजंचक्रकारकं सुषिराविद्रुमलताकपोतांघ्रिर्नटीनली १२९ धमन्यंजनकेशीचहनुर्हट्टविलासिनी

धनहरी धनंहरति हरतेवा॥ क्षेमः क्षिणोति क्षिहिंसायां मनमन्यय.॥दुष्पत्र दुष्टानिपत्राणियस्य॥ गणहासकः गणंहासयति हसेण्र्वुल् षट्चोराख्यगंधद्रव्यस्य चोरओंवा किरमाणीओंवा गठोना गाठीवनमूलइतिचख्यातस्य गणइत्यप्यस्यनाम १२८ व्याडायुधं व्याडस्यव्याघ्रस्यायुधमिव॥-घ्रस्यनखमिव॥करजं कराज्जातं॥चक्रकारकं चत्वारिव्याघ्रनखनामकगंधद्रव्यस्य लघुनखला वाघनखइतिचख्यातस्य॥ सुषिरा सुषिरमस्ति मत्वर्थेअच्॥विद्रुमलता विद्रुमस्येवलता॥कपोतांघ्रिः कपोतस्यांघ्रिरिव॥ नटी नटति नटअवस्यंदने॥नली नलति णलगंधे १२९ धमी धम्यते धमि·सौत्र·॥अजनकेशी अंजनमिवके-शायस्या॥सप्तनलीनामकगंधद्रव्यस्य पवारीतिलोकेप्रसिद्धस्य इयउत्तरपथेप्रसिद्धा॥हनु· हंति हनुर्हट्टविलासिन्यांनृत्यारंभेगदेस्त्रियां॥ हट्टविलासिनी हट्टेविलस-तितच्छीला लसक्रीडायां॥

। शुक्ति शाम्यति शान्तशोके॥ शंख शाम्यति॥ खुरः खुरति खुरछेदने खुर शैपेकोलदलइतिहैम॥ कोलदल कोलस्यबदर्याइवदलं॥ नख नखतुगधद्रव्येस्यान्न
ख करजयटयोरितिहेम सप्तनखाख्यगधद्रव्यस्यनखलाइतिख्यातस्य अत्रहनुरुदतःस्त्रीसाहचर्यात् बदरीतुल्यपत्रत्वात्कोलदल॥ आढकी आढकमस्त्यस्याः
परिच्छेदकत्वेन आढकीचतुर्वर्याःस्त्रीपरिमाणातरेभिषु १२० काक्षी कक्षेभवा॥ मृत्स्ना मृत्स्नाऽस्त्यस्या क्षेनत्वेन तत्रेस्य मृत्स्नामृत्स्नातुवर्येस्त्रीस्फटि॥ तुवरि
का तुवरोस्त्यस्या मत्वर्थेठन् वार्षिकामृत्तिकातुवर्यादिकाकुन्दुरुशदीतिवोपालितात् तुवरिकेत्यपिपाठ॥ मृतालक मृतमालयति धलभूषणादौ॥ सुराष्ट्रज

**शुक्ति शंखःखुर कोलदलनखमथाढकी १२० काक्षीमृत्स्नातुवरिकामृतालकसुराष्ट्रजे**
**कुटनटदाशपुरवानेयपरिपेलव १२१ प्लवगोपुरगोनर्दकैवर्तीमुस्तकानिच**

सुराष्ट्रजातं षट्तुवरिकायाः सूरतइतिख्यातायाः॥ कुटन्नट कुटन् नक्रीभवन् नटति नटअवस्यदने॥ दाशपुर दाशान् कैवर्तान्पिपर्ति पृपालनपूरणयोः दा
वापूरमितिपाठः दशापूरमितिकश्चित्पाठ मूलविभुजादित्वात्क दशापुरमित्यपि तत्राह दशापूरदशपुरप्लवनंजीविनाद्वयमितिवाचस्पति॥ वानेय वनेपानीये
ऽजायते॥ परिपेलव परित पेलव पृढ १२१ प्लुव प्लवते प्लुङ् गतौ॥ गोपुर गाजलपिपर्ति पृपालने॥ गोनर्द गाजलनर्दयति नर्दशब्दे॥ कैवर्तीमुस्तक कैव-
र्ता मुस्तक इत्यपूत्य अष्टकैवर्तीमुस्तकस्य केवडी जलमुस्ता क्षुद्रमोथा इतिख्यातस्य॥

ग्रंथिपर्णं ग्रंथयोपर्णान्यस्य ग्रथयइवपर्णान्यस्येतिवा ॥ शुकं शोचति शुकशोके ग्रंथिपर्णेशिरीषेचशुकःस्यादितिविश्व· शुकोव्याससुतेकीरेरावणस्यचमंत्रिणि शिरीषपादपे पुंसिग्रंथिपर्णेनपुंसकइत्युक्तत्वात् ॥ बर्हपुष्पं बर्हपत्र प्रशास्तंयस्य पुष्यति पुष्पविकसने अच् शुकबर्हमित्येकमपिनाम ॥ बर्हिपुष्पमित्यपि बर्हिःपुष्पं बर्हपुष्पंचेतिपृथगपि ॥ स्थौणेयं स्थूणाया अपत्यं ॥ कुकुरं कुकुरोऽस्त्यस्य कुकुरशब्दस्तत्तद्गंधेलाक्षणिक· पंच गंठोवन भटेउरइतिख्यातस्य १३२ मरुन्माला मरुद्भिर्मल्यते मलधारणे स मस्तंव्यस्तनामेद तत्राह मुनिर्माल्यवतीमालामोहनाकुटिलालनेतिवाचस्पतिः ॥ पिशुना पिशति पिशअवयवे पिशुनकुंकुमेपिच ॥ स्पृक्का स्पृश्यते स्पृशसस्पर्शने बा

ग्रंथिपर्णंशुकंबर्हपुष्पंस्थौणेयकुकुरे १३२ मरुन्मालातुपिशुनास्पृक्कादेवीलतालघुः ॥
समुद्रांतावधूःकोटिवर्षालंकोपिकेत्यपि १३३ तपस्विनीजटामांसीजटिलालोमशामिशी

हुलकात्कक् पृषोदरादित्वात्सलोपेपृक्कापि पृक्कातुब्राह्मणीदेवीमरुन्मालालतालघु· समुद्रांतावधू·कोटिवर्षालंकोपिकामरुत् ॥ देवी दिव्यति लता लतति लतआघाने सेत्र· लघु· लघते लघिगतो समुद्रांता समुद्रोऽतोयस्याः ॥ वधूः वहति ऊह्यतेवा ॥ कोटिवर्षा कोटिभिरग्रैर्वर्षति ॥ मृषुवृषुसेचने ॥ लंकोपिका लंकायामुप्यते डु न् संप्रारणं डुवुपबीजतंतुसंताने दशकंपिंडकेतिख्याताया· १३३ तपस्विनी तपोऽस्त्यस्याः ॥ जटिलात् जटामासी मांसंस्यादामिषेङ्कावकंकोलीजटयो·रु यो ॥ जटिला जटाऽस्त्यस्याः जटिलापिप्पलीमांस्योर्जटायुक्तेववाच्यवत् ॥ लोमशा लोमानिसंत्यस्या· लोमशोमुनिमेंषयोः ॥ मिशी मस्यति मसिपरिणामे पच जटामांस्याः जटेतिपृथक्पदंवा तत्राह मांसाकृष्णजटाहिस्रानलदाजटिलामिसिः जटाचवशिनीपेशीक्रव्यादीचतपस्विनीति ॥

त्वक्पत्रं त्वगिवपत्रमस्य॥ उत्कटं गन्धित्वात्॥ भृंगं बिभर्ति॥ त्वच प्रशस्तात्वगस्यास्ति॥ चोचं प्रशस्तचोचवल्कलादिकमस्यास्ति त्वक्त्वचचोचशब्दा स्युर्वल्के चर्मणिपत्रकइतिधरणि॥ वरागकं वरमगमस्त्यस्य इतिपदद्वालम्बिनीतिचरव्यातस्य १३४ कर्चूरकं कर्चतिं कर्जव्ययने ऊरं प्रत्ययः स्वार्थेकन् कर्बूरकइत्यपि-पाठः॥ द्राविडकं द्रविडदेशेजातं तत्रजातइत्यण् स्वार्थेकन्॥ काल्पकं कल्पेभवं तत्रभवइत्यण् ततःकन्॥ वेधमुख्यकं वधेमुख्यं स्वार्थेकन् चत्वारिकचूरइतिख्यातस्य॥ फलपाकांतानामोव्यादीनां जातावेव ओषध्यःस्युः॥ ओषधिशब्दप्रयोगः स्यादित्यर्थः॥ बहुत्वविवक्षायांबहुवचनं॥ नतुनित्यं यदातु ओषधे रोगहारित्वमात्रंप्रतीयते न त्वन्यत् तदा ओषधशब्दप्रयोगः ओषधेरजातावित्यण् नकेवलमोषधिरेवौषधशब्दवाच्या किंतु रोगहरत्वेनघृतक्षौद्रत्रिफलाकल्कादिश्चौषधमितिसर्वविशेषणात्त्वेयं १३५

त्वक्पत्रमुत्कटंभृंगत्वचचोचंवरागकं १३४ कर्चूरकोद्राविडकः काल्पकोवेधमुख्यकः ओषध्योजातिमात्रेस्युरजातौसर्वमोषधं १३५
शाकाख्यंपत्रपुष्पादितंडुलीयोल्पमारिषः विशल्याग्निशिखानंताफलिनीशक्रपुष्पिका १३६ पत्रपुष्पादितच्छाकसंज्ञकं॥ शाकं नेभोक्तुं यद्वा शक्यति श्यतेतनूकरणे एकभोजनसाधनस्यपुष्पादे आदिशब्दात्फलमूलादीनांग्रहणं तथोच्यते मूलपत्रकरीराग्रफलकाण्डाधिरूढकं त्वक्पुष्पकं कवचंशाकंदशविधंस्मृतमिति तत्र करीरं वंशाकुरं काण्डमिक्षुदण्डादि अधिरूढकं बीजांकुरं कवकंछत्राकं शेषंस्पष्टं॥ तंडुलीयः तंडुलायहितः॥ अल्पमारिषः अल्पश्चासौमारिषश्च हेतादवी तांदुलजाइतिख्यातः॥ विशल्या विगतशल्यमनया विशल्यालांगलीदंतीगुडूचीत्रिपुटास्मृतेतिहेमचन्द्रः॥ अग्निशिखा अग्नेरिवशिखा-संतापोयस्याः॥ अनंता नअंतोयस्याः॥ फलिनी फलानिसंत्यस्याः॥ शक्रपुष्पिका शक्रोऽर्जुनतरुः तत्पुष्पमिवपुष्पमस्याः पंचकंमग्निशिखायाः कळलावीइतिप्रसि॰१३६

जीवंती जीवति शतृप्रत्ययांतात् उगितश्चेति ङीप् जीवयतीतिविग्रहे अंतर्भावितण्यर्थः जीवयतिवा जीवप्राणधारणे ॥ जीवनी करणेल्युट् ॥ जीवा जीव्यंतेऽन-या करणेघञ् ॥ जीवनीया जीवनायहिता छप्रत्ययः ॥ मधु. मन्यते मनज्ञाने फलपाटीत्युः धश्चादेशः ॥ स्रवा स्रवति स्रुगतौ मधुस्रवेत्येकनामेत्यन्ये मधुपुष्पर रक्षांद्रेमधेनातुमधुंद्रुमे वसंतदैत्यभिच्चैत्रेस्याज्जीवंत्यांतु योषितीतिमेदिनी ॥ विश्वप्रकाशोप्येव पंचजीवंत्याः हरणवेल हरणडोडीइतिख्याताया: ॥ कूर्चशीर्षः कूर्चश्मश्रुतद्वच्छीर्षमस्य ॥ मधुरकः मधुरएव स्वार्थेक. ॥ शृंग· शृणाति शॄहिंसायां ॥ ह्रस्वांगः ह्रस्वान्यंगान्यस्य ॥ जीवकः जीवयति पंचजीवकस्य ॥ किराततिक्तः किरातदेशोऽस्तिजन्मस्थानमस्य मत्वर्थेअच् किरातश्चासौतिक्तश्च किरातश्चिरतिक्तश्चभूनिंबहिमकावपीनिरभसः भूनिंबः भुवोनिंबश्च ॥ अनार्यतिक्त. अनार्य-

**जीवंतीजीवनीजीवाजीवनीयामधुस्रवा कूर्चशीर्षोमधुरकःशृंगह्रस्वांगजीवकाः १४२ किराततिक्तोभूनिंबोऽनार्यतिक्तोऽथराक्षसी विमलाशातलाभूरिफेनाचर्मकषेत्यपि १४३ वायसोलीस्वादुरसावयस्थाऽथमकूलकः**

प्रियश्चासौतिक्तश्च शाकपार्थिवादिः त्रयकिराईतइतिख्यातस्य ॥ सप्तला सप्तलाति ॥ विमला विगतोमलोयया ॥ शातला शातस्करवंलाति विमलाशातलायांस्यादितिविश्वप्रकाश. ॥ भूरिफेना भूरयः फेनायस्याः ॥ चर्मकषा चर्मणःकषा पंचसप्तलाया· शिकेकाईइतिप्रसिद्धायाः ॥ वायसोली वायसानोलडति ओलडि उत्क्षेपे णिजभावे अन्येष्वपीतिडः शकंध्वादित्वात्पररूपं ॥ स्वादुरसा स्वादु.रसोऽस्याः ॥ वयस्था वयसिस्थीयतेऽनया वयस्थातुस्त्रियांब्राह्मीगुडूच्यामलकीषुच सूक्ष्मैलयांचकाकोल्यांपथ्यायांतरुणेषुच त्रीणिलाहानकावळीकाकोलीइतिचख्यातस्य ॥ मकूलकः मंकति मकिमंडने ऊलच्प्रत्ययेस्वार्थेकः आगमानित्यत्वान्नुमन पृषोदरादित्वादुत्वेमुकूलकोपि ॥

वातक वातकरोति हमत्ययात ॥शीतल शीतलाति॥अपराजिता नपराजिता॥ शणपर्णी शणपर्णान्यस्या शणशब्दशणपर्णसदृशोलाक्षणिक असनपर्णीर्-
त्यन्यत्र आसनपर्णोइत्यपि तदाह भनेदसनपर्ण्याञ्चशीतल शिशिरन्यर्वादितिविश्वप्रकाश ॥शीतलपुष्पकासीसशैलजेमलयोद्भवे पुमानासनपर्ण्यास्याछिशिरे
वाच्यलिंगकमितिमेदिनी चत्वारिशणपर्ण्या गोकर्णादितिख्या॰॥शीतलवातकइत्येकपदमितिधन्वन्तरिराह १४९ पारावताङ्घ्रि पारावतइवाङ्घ्रिरस्या ॥कटभी कट
चन्द्राति अन्यस्यापीतिड गौरादि ॥पण्या पण्यते पणव्यवहार अवद्यातिपत्यपात ॥ज्योतिष्मती ज्योतिरस्त्यस्या ॥लता लाति पञ्चज्योतिष्मत्या माल

स्याद्वातक शीतलोऽपराजिताशणपर्ण्यपि १४९ पारावताङ्घ्रि कटभीपण्याज्यो
तिष्मतीलता वार्षिकत्रायमाणास्यात्त्रायन्तीबलभद्रिका १५० विष्वक्सेनप्रियागृ
ष्टिर्वाराहीबदरेत्यपि

काङ्गणीइतिख्यातायाः पारावताङ्घ्रि स्त्री॥ वार्षिक वर्षासुभवजातत्वा वार्षिकत्रायमाणायाः लिङ्ग
वर्षाभवेनिषु ॥ त्रायमाणा त्रायते त्रैङ्पालने ॥त्रायन्ती त्रा अयति इगतो इदंकिरकटीगती अनप्रभ्यलणतशातगिशपि उगितश्चेतिङीपि शपश्यनोरितिनुमि
साधु ॥ बलभद्रिका बलेनभद्रा चतुष्कत्रायमाणायाः १५० विष्वक्सेनप्रिया विष्वक्सेनस्यप्रिया ॥गृष्टि गृह्णाति ग्रहउपादाने पृषादरादि घषिरितिपाठान्तर
नभस्य घर्षति घसुसघर्षे॥ वाराही वराहस्येदम प्रियत्वात् वाराहीमातृभेदेस्यारिष्वक्सेनाभिधोषधौ ॥ बदरा वदति वदस्थैर्ये बदरागृष्टिकर्पास्योरेलाण
पर्यास्त्रियापुमान् चतुष्कवाराह्या वाराहीकदङ्करकदइतिख्याताया ॥

मार्कव मारयति कूयते कुङ् शब्दे कर्मणिअप् ॥ भृंगराजः भृंगइवराजते राजृदीप्तौ भृंगरजइत्यन्यत्र तत्र भृंगइवरज्जोऽस्य सांतोदंतोपि स्यान्मार्कवोभृंगरजो भृंगराजः स्त्रजागरइतिरभसात् द्वे माकाइतिरव्यातस्य ॥ काकमाची काकान्मंचते मचिधारणोछ्रायपूजनेषु ॥ वायसी वायसानामियं काकोदुंबरिकायांच- काकमाच्यांचवायसी इत्युक्तं द्वे कावळी काकजंघेतिरव्यातायाः १५१ शतपुष्पा शतंपुष्पाण्यस्याः ॥ सितछत्रा सितंबस्त्रं शुभ्रं वाछत्रमस्याः ॥ अतिछत्रा छत्र मतिक्रांता ॥ मधुरा मधुरस्त्यस्या ॥ मिसि मस्यति मसीपरिणामे पृषोदरादिः मसीइत्यपिपाठः ॥ अवाक्पुष्पी अवांचिपुष्पाण्यस्याः ॥ कारवी कारोरियं कार

मार्कवोभृंगराजःस्यात्काकमाचीतुवायसी १५१ शतपुष्पासितछत्राऽतिछत्रामधुरामिसिः अवाक्पुष्पीकारवीचसर णीतुप्रसारिणी १५२ तस्यांकटंभराराजबलाभद्रबलेत्यपि जनीजतूकारजनीजतुकृच्चक्रवर्तिनी १५३

वीमधुरादीष्यत्वक्पत्रीकृष्णाजीरके समकंशोपइतिरव्यातायां ॥ सरणा सरति सृगतौ सरणी सारणी सरणासरणीचार्वीकटंभरामहाबलेतिरुद्रः ॥ रुग्भेदेना प्रसारण्यांस्वल्पनद्यांचसारणी इतिमेदिनी प्रसारणीइत्यपि १५२ कटंभरा कटंबिभर्ति कटंबरेत्यपि ॥ राजबला बलानां बलप्रदानांराजेव राजदंतादिः ॥ भ द्रबला भद्रंबलमस्याः इतिपंचप्रसारण्याः चांदवेलकुब्जप्रसारिणीइतिरव्यातायाः ॥ जनी जायतेआरोग्यमनया जनिरित्यपि कृदिकारेनिङीष् विकल्पात् ॥ जतूका जतूकेत्यत्रापिपूर्ववद्विग्रहः ॥ रजनी रज्यतेऽनया रंजराजे रजनीनीलिनीरात्रीहरिद्राजतुकासुच रजनिरित्यपि ॥ जतुकृत् जतुकरोति ॥ चक्रव- र्तिनी चक्रंचक्रमिववावर्तितुशीलमस्याः १५३

शास्पर्शा सम्यक्स्पृशति स्पृश्यते वा स्पृश् संस्पर्शने ॥ षड्वकवर्तिन्या चारववतरतिरव्यातायाः ॥ शटी शटति शट रुजादौ ॥ गंधमूली गंधः मूलमस्याः गंधमूलेत्य
त्यपि ॥ षड्ग्रथिका षड्बहवो ग्रथयोस्याः ॥ कर्चूर कर्चति कर्चगतौ कर्चुरोपि ॥ पलाशः पलमश्नाति अश भोजने पले मांसे आशा यस्य वा पत्रशाख्या कासुरकाचरी
आंबेहळद इतिख्यातायाः ॥ कारवेल्ल कारवेल्लति वेल्ल चलने ॥ कटिल्लक कटति कटे वर्षावरणयोः कटिल्लकस्त्यपि तन्वेच्छ कटति कठशोक १५४ सुषवी सुसुव
ते षूप्रेरणे (सुसवी सुशावी) त्रीणि कारवेल्लस्य कारलीइतिख्यातस्य ॥ कुलक कोलति कुल संस्त्याने इगुपधेति कः स्वार्थे कन् कुलकं तु पटोलेस्यात्तच्च लोक
सहतौ पुंसि वल्मीककार्कोटकुलम्प्रेषेषु कथ्यते ॥ पटोल पाटयति पटगतौ अतर्भावितात् णोलच् ॥ तिक्तक स्वार्थे क ॥ पटु पटति पटगतौ पटुर्दक्षे वनीरोगे

सस्पर्शाथशटीगंधमूलीषड्ग्रथिकेत्यपि कर्चूरोपिपलाशोथकारवेल्ल कटिल्लक १५४ सुषवीचाथकुलकपटोल
स्तिक्तक पटु कूष्माडकस्तुकर्कारुरुर्वारु कर्कटीस्त्रियौ १५५ चतुरेष्वपि धेयवत् पटोलेतु पुमान्क्लीबेछ गालवणयोरपि चत्वारि पटो
लस्य पडवळ इतिख्यातस्य ॥ कूष्माडक कुईषत् ऊष्म अडेषु यस्य पित्तलत्वात् ॥ कर्कारु कर्कशत्कुत्वर्णमृच्छति रुगतौ बाहुलकादुण् हे कूष्माडस्य कोहळा इ
तेख्यातस्य ॥ उर्वारु ऋधातो सपदादित्वात् क्विपि बाहुलकादुलेरणोते र्बाहुलकादुण् पृषोदरादिर्वा यद्वा उर्व धातोर्धत्रि उर्व ॥ संज्ञापूर्वकत्वाद्दीर्घाभावेततो
भ्यादिगणस्य रुगतौ अस्मान् बाहुलकादुण् मापणार्थादस इत्यत्राइ इति रुला उर्वारुशब्द साधु (ईर्वारु ईरगतौ । इर्वारु हस्व । इर्वालु । एर्वारु आद्यपूर्व-
क इत्येते पाठा ) उन्पत्तो धुस्तूरिर्वारू कर्कटिस्यादिति पुस्काडेरत्नकोशात् ॥ कर्कटी करकगति कटेवर्षादौ मर्कटिरित्यपि पाठ उभयशाकध्वादि हे कर्कट्या काकडी
इतिख्यातायाः ११७

इक्ष्वाकु इक्षुमाकरोति यद्वा इक्षुरितिशब्दमृच्छति अकुगतौ इक्ष्वाकुः कटुतुंब्यांस्त्रीसूर्यवंशेनृपेपुमान् ॥ कटुतुंबी कटुश्चासौतुंबीच तुंबति रुचिंतुबिअर्दने अच्गौरादिः हेकडुतुंब्या कडूदुध्याभोपळाइतिख्याताया ॥ अत्र इक्ष्वाकुपदं कट्वकटुतुंब्युभयसाधारणं ॥ तुंबी तुंबिः तुंबा ॥ अलाबूः नलंबते लबिअवस्रंसने (आलाबु आलाबूः लाबु लाबूः अलाबुःस्त्रीपिंडफलातुंबिस्तुंबीमहाफला तुंबालुर्वर्तुला ऽलाबूर्निर्वेतुंबीतुलाबुकेतिवाचस्पतिः अलाबूस्तंबकः प्रोक्तइतिचंद्रः ॰ ॰ ,
र्हस्वांतोपिक्वचित् ) हेकाळा तांबडा भोंपळाइतिप्रसिद्धस्य ॥ चित्रा चीयते चित्रास्त्रीसुपर्णोगोडुंबाखुभद्रादंतिकास्वच मायायांसर्पनक्षत्रेनदीभेदेषुचास्त्रियामितिमेदिनी ॥ गवाक्षी गाभूमिमश्नोति अक्षूव्याप्तौ गवाक्षीत्विंद्रवारुण्यांगवाक्षोजालकेकपावितिहेमः ॥ गोतुंबा गांभुवंतुंबति तुबिअर्दने गोडुंबेत्यपिपा

इक्ष्वाकुः कटुतुंबीस्यात्तुंब्यलांबूरुभेसमे चित्रागवाक्षीगोतुंबाविशालात्विंद्रवारुणी १५६ अर्शोघ्नःशूरणःकंदोगंडीरस्तु समष्ठिला कलंब्यपादकास्त्रीतुमूलकंहिलमोचिका: १५७

ठः पृषोदरादिः इतित्रीणिकंवडळइतिख्यातस्य ॥ विशाला विशलति शलचलने णप्रत्ययः ॥ इंद्रवारुणी इंद्रवारयति वृवरणे हे इंद्रवारुण्याः मोठीकंवडळइतिख्याताया: ॥ अर्शोघ्नः अर्शांसिहंति अमनुष्यकर्तृकेचेतिटक् ॥ शूरणः शूयतेश्रहिंसायां दत्यादिरपि ॥ कंदः कंदयति कंद्यतेवा कदिआह्वाने त्रीणिसूरणइतिख्या० ॥ गंडीरः गंडति गडिवदनैकदेशे गंड्यतेवा यद्वा गडीन्ग्रंथीन्ईरयति ईर्प्रेरणे ॥ समष्ठिला सम्यगष्ठिलाबीजंयस्याः गंडीरोनासमष्ठिलेतिमाला हेगंडीराख्यशाकभेदस्य कडूसूरणइतिख्यातस्य ॥ कलंबी कडति कडमदे डलयोः सावर्ण्यात् यद्वा केजलेलंबतेवा लविअवस्रंसने कलंबीशतपर्वाचकलंबूर्वासवीरुधइतिवाचस्पतिः ॥ कलंबीशाकभेदेपिस्याद्दंडशरयोःपुमानितिमे

दिनी ॥उपोदका उपाधिकगुदकमस्या अपोदकेत्यपिपाठः इतिदेवाळी थोरमयाळ पोईमावीवेलइतिप्रसिद्धाया ॥मूलक मूलयति मूलरोहणे मुळाइतिविख्यात ॥हिलमोचि का हिलति हिलभावकरणे मोचयति हिलाचासौमोचिकाच चाकवतइतिप्रसिद्धा १५७ वास्तुकं वास्तौभव अध्यात्मादित्वात् ठञ्कादेश चदनबटवेतिप्रसिद्ध कलव्य दिका पचशाकभेदास्तेया प्रत्येक तस्मिन्कउत्रोवेणवाकृतिर्विघते वास्तूकमपिपाठ ॥दूर्वा दुर्वति दुर्व्यनिंवा दुर्विहिंसायां अच् पञ्चा ॥शतपर्विका शतपर्वति पर्वपूरणे शतपर्णिकेत्यपि तत्रेत्य शतपर्णान्यस्या शतपर्विकादूर्वायाश्वायामपियोषिति ॥सहस्रवीर्या सहस्रवीर्याण्यस्या ॥ भार्गवी भृगोरियं ॥रुहा रोहति ॥अनता न

वास्तुकशाकभेदा स्युर्दूर्वातुशतपर्विका सहस्रवीर्याभार्गव्योरुहाऽनताऽथसामिता १५८ गो
लोमीशतवीर्याचगंडालीशकुलाक्षक कुरुविंदोमेघनामामुस्तामुस्तकमस्त्रिया १५९

मंतोऽस्या षट्दूर्वाया १५८ सादूर्वासिता शक्लाऽस्तिचेत् तत्रगोलोमी गोलोमसजाता ॥शतवीर्या शतवीर्याण्यस्या ॥गंडाली गडति गडिवदनैकदेशे चाड्रन्त कारालच् इत्यापूत्य ॥ शकुलाक्षक शकुलस्यवमत्स्यस्येवाक्षियस्य बहुव्रीहौकप् इतित्वत्वारिनामानिभवति ॥कुरुविंद कुरून्विंदति विदूलाभे कुरुविदनलभे देमुस्ताकुल्याधया पुमानितिविश्वमेदिन्यौ ॥मेघनामा मेघनामाभिनामान्यस्य ॥मुस्ता मुस्तयति मुस्तसघाते ॥मुस्तक तत्रगेघनामामघपर्यायनामक मुस्तकच प्रस्यपित्तेय इतिचत्वारिमुस्ताया मोथाइतिख्याताया १५९

भद्रमुस्तक. भंदंते भदिकल्याणे रन्प्रत्ययेभद्रमिति भद्रंकरोतिवा भद्रश्चासौमुस्तकश्च भद्रमपिनाम तत्रेत्थं भद्रंस्यान्मंगलेहेम्निमुस्तकेकरणांतरइतिरु
द्र:॥गुंद्रा गाजलंद्राति द्रागतौ आतोनुपसर्गेइतिके पृषोदरादित्वात्साधु· हेमुस्ताविशेषस्य नागरमोथाइतिख्या॰ अस्त्रियामित्यनेनमुस्तकभद्रमुस्तकयोरन्वय:
गुरवस्तत्रभेदमाहु:सयथा मुस्तकंबुधरोमेघोघनोराजीवशेरुक भद्रमुस्तोवराहोब्दो गांगेय कुरुविंदकइति॥चूडाला चूडास्त्यस्या चूडायात्तूच्चटायांस्त्रीचूडा
वतीचवाच्यवत्॥चक्रला चक्रंलाति ला आदाने॥उच्चटा उच्चटति चटगतौ अत भाविनण्यर्थादच् इतित्रीणि उच्चटामूलस्यमुस्ताविशेषस्य॥ वंश:वमति टुवम् उ
द्गिरणे उश्यतेवष्टिवा वशकान्तौ वंशोवेणौकुलेवर्गेपृष्ठाद्यवयवेपिच॥त्वक्सार· त्वक्त्वचिवासारोऽस्य॥कर्मार: कर्मक्रियामृच्छति ऋगतौ कर्मण्यण्॥तृणध्वज तृणे-

स्याद्भद्रमुस्तकोगुंद्राचूडालाचक्रलोच्चटा वंशेत्वक्सारकर्मारत्वचिसारतृणध्वजा: १६० शतपर्वायवफलोवेणुमस्करते
जना: वेणव:कीचकास्तेस्युर्येस्वनंत्यनिलोद्धता: १६१ ग्रंथिर्नापर्वपरुषीगुंद्रस्तेजनक:शर:

ष्वध्वजइव १६० शतपर्वा शतपर्वाण्यस्य
॥यवफल:यवइवफलान्यस्य यवफलोमासिकायांकुटजत्वचिसारयोरितिहैम ॥वेणु वेणति वेणृनिशामनादौ॥मस्कर· मस्कतेनेन मस्कगतौ यद्वा मंकते मकिम
डने आगमशास्त्रस्यानित्यत्वान्नुमन्न स्कडागमश्च॥तेजन तेजयति तिजनिशाने शरश्चमग्निवा दशकंवेणौ ॥येवेणवो:निलोद्धता:अनिलेनकीटकादिकृतसुषिर
गतवायुनाउद्धता· ताडिता:सन्त:स्वनन्ति शब्दायंते तेकीचका:स्युरित्येकंनाम चीकति शब्दायते चीकयतेराद्यतविपर्ययश्चेतिवुन् अकादेशेकीचक: साधु इत्याद्यूत्यं
१६१ ग्रंथि: ग्रथिस्तग्रंथिपर्णेनाबंधेरुग्भेदपर्वणो ॥पर्व पर्वति पर्वपूरणे पर्वक्लीबंमहेग्रंथौप्रस्तावेलक्षणान्तरे दर्शप्रतिपदो:संधौविषुवत्प्रभृतिनित्रिषु॥परु पिप-

र्ति पृपालनपूरणयो परुरुदतोपि बाहुलकादुमत्ययइतिभाव मृज्जासारोग्रंथि परु.पराग:कुसुमरेणुरितिपुस्काडेरलकोशात् त्रीणिवंशादिग्रंथे पेरैंइतिरव्यात स्य ॥ नत्वग्रंथिर्नापुमान् ॥गुद्र गोदते गुद्रक्रीडाया॥तेजनक तेजयति निजनिशाने॥ शार.श्रणाति शृहिंसाया सरइत्यपि तत्रसरति सृगतो शारस्तुतेजनेबाणे द्ध्यन्भेनाशरजडे सरस्तुमुजोबाणास्थ्योगुद्रस्तेजनक शरइतिवाचस्पतेर्दत्यास्त्रि त्रीणि शरस्य॥नड नडति नडगहने नलइत्यपिपाट इलयो.सावर्ण्यात् ॥धमन धमति धमध्याने सौत्र धम्यतेवा॥पोटगल पुटेनसम्श्लेषेणगलति गलअदने स्रवणेच अथपोटगल पुसिनलेचाकाशमत्स्ययोरितिमेदिनी त्रीणिद वनळइतिरव्यातस्य॥काशाकाशते काशदीप्तौ काशस्तृणेरोगभेदेकाशीवाराणसीपुरी कासवाशाभ्मतृणवाचकोशाब्दो १६२ इस्कगधा इस्कचहूपोःस्याः

नडस्तुधमनःपोटगलोऽथोकाशमस्त्रियां १६२ इक्षुगंधापोटगलःपुंसिभूम्निबल्वजा रसालइक्षुस्तद्भेदाः पु

ड्रकान्तारकादय: १६३ स्याद्वीरणंवीरतरंमूलेस्योशीरमस्त्रियां

॥पोटगल इतित्रीणिकाशस्य॥ काशा पुन्नपुंसक पूर्वमुक्त बल्व-जाइत्येकपुंल्लिंगबहुवचनात मोळलव्हाळे लवाइतिचरव्यातस्य एकोबल्व जइतिभाष्यकारवचनादेव तेपि बलते बलसंवरणे वजति बल्वासोवजश्च ॥ रसाल रसेनालति अल्यतेवा पूरयते पूरयतिवा अलभूषणादौ॥इक्षु इष्यते इषइच्छाया इक्ष्सो ॥पुड्र पुड्यते पुडिखंडने रक्प्रत्यय ॥कान्तारक इत्यादि कास्तस्येक्षोर्भेदा आदिशब्देनकोशकारादिग्रह सचइक्षु कर्कटकोवंशःकान्तारोवेणुनिस्वति इक्षुरस्य पौड्रकश्चरसाल.सुकुमारक इतिएकैक १६३ वीरण वि पक्षिणमीरयति॥ वीरतर अतिशयितंवीर स्याद्वीरणेवीरतरवीरश्रेष्ठेशरेचना इत्वणभेदस्य काळावाइतिरव्यातस्य अस्यवीरणस्यमूलेतु उशीर उश्यते वशाकाते

अभयं नभयमस्मात् अभयास्त्रीहरीतक्यामुशीरेत्वनपुंसकं निर्भयेवाच्यलिंगोस्यात् ॥ नलदं नलंगंधंददाति डुदाञ्दाने नलदंस्यात्पुष्परसोशीरमांसी पुनद्द्ये ॥ सेव्यं सेवितुमर्हतितत् षेवृसेवने सेव्यंक्लीबस्त्रषीरेस्यात्सेवार्हेपुनरन्यवत् ॥ अमृणाल मृणालमप्यत्र मृणालनलदेक्लीबंपुंनपुंसकयोर्विषे ॥ जलाशयं जलेआशेते अच् यद्वा जलोजडःआशयोयस्य जलाशयोजलाधारेस्यादुशीरेऽन्यलिंगकः १६४ लामज्जकं लातिदोषान् लामज्जासारोऽस्य ॥ लघु लंघतेरोगान् लंघ्यतेवा भूस्थत्वात् लघिगतौ ॥ लयं लीयते लीङ्श्लेषणे व्यस्तंनाम तत्रेद लामज्जकंसवासंस्यादमृणालंलयंलघ्विनिसमस्तुतः समस्तमपि तत्र लघुलयं अवदाहमिति अवलीयतेदाहोऽस्मादिति ॥ इष्टकापथ इष्टकेवस्तदःपंथायस्येत्याद्यूह्यं ॥ लामज्जकंलघुलयमवदाहेष्टकापथे अवदानमिंद्रगुसमवदाहेष्टकापथइति-

**अभयंनलदंसेव्यममृणालंजलाशयं १६४ लामज्जकंलघुलयमवदाहेष्टकापथे नडादयस्तृणंगर्मुच्छ्यामाक प्रमुखाअपि १६५ अस्त्रीकुशंकुथोदर्भःपवित्रमथकत्तृणं**

वाचस्पतिः॥ नडादयः नडकाशादयः ॥ तृणं तृण्यते तृणु अदने तृणजातीयाइत्यर्थ नलादयइत्यपिपाठः येचगर्मुच्छ्यामाकप्रमुखा. गर्मुच्छ्यामाकौतृणधान्यविशेषौ गर्मुत् गिरति गीर्यतेवा गृनिगरणे ॥ श्यामाकः श्यायते श्यैङ्गतौ यद्वा श्यामंवर्णमकति अकगतौ प्रमुखशब्दाद्वक्ष्यमाणाः कुशादयः कंगुकोद्रवाद्याश्चतेपितृणजातीया. अत्रप्रमुखशब्दान्नीवाराद्यागृहीतव्या. अन्यथाकोद्रवादीनाहविष्यत्वापातात् ॥ शामकः शामकोपिन्चेतिहलायुधाच्छामकोपि एकं १६५ कुशं कौशेते यद्वा कुश्यति कुशिश्लेषे ॥ कुथः कुथ्यति कुथपूतीभावे कुथ स्त्रीपुंसयोर्वर्णकंबलेपुंसिबर्हिषि ॥ दर्भ दृभ्यते दृभिग्रंथे ॥ पवित्रं पूयतेनेन चत्वारिकुशस्य ॥ तत्र क्लीबपुंसोः ॥ कत्तृणं कुत्सितंतृणं ॥

तृ॰

वीर पुरेभव योरत्रिषुपुरोग्भ्रूतकत्तृणेपुनपुसक ॥ सौगधिक शोभनोगधःसगध प्रयोजनमस्य मयोजनमितिटक ॥ ध्याम आयतेपश्वभि ध्यैचिंतायां ॥ दे
वजगधक देवैरद्यते रोहिष षट्गजाण रोहिस गवनइतिख्यातस्यतृणभेदस्य १६६ छत्रा छदति छादयतिवा छदअपवारणे ॥ अतिछत्र अतिक्रांत छत्र ॥ पा
लघ्न पालध्नेत्रहतीतिपाडघ्न ॥ मालातृणक मालाकाराणितृणान्यस्य ॥ भूस्तृण भुवस्तृणमितिविग्रहेपारस्करादित्वात्सुट भूरन्ययवा पचक्ष्माकृतेर्जलतृण
भेदस्य अ॰ आयत्रयशेतगवतइतिख्यात॰ अत्सहयमालाकारतृणस्येत्यपिमत ॥ शष्प शस्यते शष्पतिवा शसहिंसायां शषशोषणेवा ॥ बालतृण बाल

पोरसौगधिकध्यामदेवजगधकरोहिष १६६ छत्रातिछत्रपालघ्नौमालातृणकभूस्तृणे शष्पबालतृणघासोयवसतृण
मर्जुन १६७ तृणानासहतिस्तृण्यानड्यातुनडसहति तृणराजाव्हयस्तालोनालिकेरस्तुलागली १६८

चतत्तृणन्च हे कोमलतृणस्य ॥ घास ॥ यवस यौति यूयतेवा युमिश्रणे अमिश्रणेन्च हेगवादीनाभ स्यतृणस्य ॥ तृण तृण्यते तृणुअदने ॥ अर्जुन अर्ज्यते
अर्जअर्जने तृणाख्यायाउनन् द्वेतृणमात्रस्य ॥ तृणानासहति समूह तृण्येत्युच्यतइत्येक ॥ नडसहति नडानासहतिर्नड्येत्युच्यते एक ॥ तृणराजाव्ह
य तृणानाराजा तृणराजाइत्याव्हयोयस्य ॥ ताल तालयति तलप्रतिष्ठायां ॥ नालिकेर नलति नल्यतेवा णलबधे एकीयमत नालिकेरासौकेरश्चना
रिकेरइत्यपि ॥ लागली लगति लगिगतौ बाहुलकात् द्वे नालिकेरस्य नारळइतिख्यातस्य लागलीस्त्री ङीषत इभत पुसीत्यन्ये १६८

घोंटा घोणते घुणभ्रमणे ॥ पूगः पवते पुनातिवा पुञ्पवने पूग क्रमुकसंघयोरितिहेमः ॥ क्रमुक· क्रामति क्रमुपादविक्षेपे क्रमुकस्तुपुमान्भद्रमुस्तकेब्रह्मदारु
णि ॥ गुवाक गूवाकइत्यपि गुवाकोपिन्वगूवाकइतितारपाल· ॥ खपुरः खमिंद्रियमाकाशंवापिपर्ति पृपालनपूरणयोः पंचपूगवृक्षस्य सुपारीपोफळीइतिख्यात
स्य ॥ अस्यपूगस्यफलं उद्वेग उद्गतोवेगोऽस्मात् ॥ एतेत्रय· तालनारिकेरपूगा· हिंतालसहिता· हिंतालेनचतुर्थेनसहिताः सतुहिंतालः तालभेदः कथ्यते एवंचत्वार·
खर्जूरादयश्चत्वारश्च एवमष्टौ एतेतृणद्रुमाइत्युच्यंते ॥ तत्रैकं खाजूरइतिख्यातस्य खर्जूर· खर्जति खर्जव्यथने खर्जूरंरूप्यफलयोःखर्जूरःकीटवृक्षयोरित्यु

घोंटातुपूगःक्रमुकोगुवाकःखपुरोस्यतु फलमुद्वेगमेतेचहिंतालसहितास्त्रयः खर्जूरःकेतकीतालीखर्जूरीचतृणद्रुमाः
१६९ इतिवनौषधिवर्गः सिंहोमृगेंद्रःपंचास्योहर्यक्षःकेसरीहरिः कंठीरवोमृगरिपुर्मृगदृष्टिर्मृगाशनः

क्तत्वात् ॥ केतकी केतयति कितनिवासे ङीषंता केगद केतकइतिख्याता ॥ तथा ताली तालथनि ॥ खर्जूरी खर्जूरभेदः १६९ इतिवनौषधिवर्गः सिंहः सिं
चति षिचक्षरणे ॥ यद्वा हिनस्ति हिसिहिंसायां ॥ मृगेंद्रः मृगाणामिंद्र. ॥ पंचास्य· पचने पचिविस्तारे पंचंविस्तृतमास्यमस्य यद्वा मुखपादाश्चपंचास्यानीव
यस्य ॥ हर्यक्ष हरिणीपिंगलेअक्षिणीयस्य ॥ केसरी केसराः स्कंधबाला· संत्यस्य केसरीतुरगेसिंहेपुन्नागेनागकेसरइत्युक्तत्वात् ॥ हरिः हरति त्वच् इतिष
ट्सिंहस्याभिधानानि ॥ कठीरवोमृगरिपुर्मृगदृष्टिर्मृगाशनइत्यादयोप्यस्यपर्यायाः कंठीरवः ईयुक्त. रवोयस्यसईरवः कंठोऽस्यास्तीतिकंठी कंठीचासोईरवश्च न-
निर्गत्वर्थे ॥ मृगरिपु. मृगाणांरिपुः ॥ मृगदृष्टिः मृगेषुदृष्टिर्यस्य ॥ मृगाशन· मृगानश्नाति ॥

ओ पुंडरीक ॥ पञ्चनख पञ्चनखानियस्य ॥ चित्रकाय चित्र कायोऽस्य ॥ मृगद्विट् मृगान्द्वेष्टि इतिचतुर्दशसिंहनामानि ॥ शार्दूल शारयति शॄहिंसायां दूयते दुपरितापे
शारश्चासौदूलश्च यद्वा शृणाति ॥ द्वीपी द्वीवर्णादीयते ईङ्गतौ द्वीपंचर्मास्त्यस्य ॥ व्याघ्र व्याजिघ्रति घ्राणघोपादाने इतित्रीणिव्याघ्रस्याभिधानानि ॥ तरक्षु तर-
गतिमार्गवाक्षिणोति क्षिणुहिंसायां मितद्रुवत् तरक्षिरित्यपिपाठ क्षीस्त्रयेबाहुलकात् कि: आधिशब्दवत्साधु ॥ मृगादन मृगमत्ति अदभक्षणे इतिद्वेकुक्कुराकृत
कृष्णरेखाञ्चितस्यमृगविशेषस्य तरसइतिख्यातस्याभिधाने १ वराह वरश्रेष्ठमाहन्ति हनहिंसागत्योः ॥ सूकर सूवमसव करोति षूङ्प्राणिगर्भविमोचने सपदादि-

पुंडरीक पञ्चनखचित्रकायमृगद्विषः १ शार्दूलद्वीपिनौव्याघ्रेतरक्षुस्तुमृगादनः वराहःसूकरोघृष्टिः कोलः पोत्रीकि
रिःकिटिः दंष्ट्रीघोणीस्तब्धरोमाक्रोडोभूदारइत्यपि २ कपिप्लवगप्लवगशाखामृगवलीमुखाः

त्वाच्चावेक्विप् ततोद्देत्वादित्युट शूकरइत्यपिपाठ तत्रेत्थ शूकराति रादाने यद्वा शूइतिध्वनिं करोति ॥ घृष्टि घर्षति घृषुसंघर्षे ॥ कोल कोलतिपीनत्वात् कुल
सस्त्याने यद्वा कोलत्यगान्यत्र हलश्चेतिघञ् ॥ पोत्री पोत्रमुखाग्रमस्त्यस्य ॥ किरि किरति कृविक्षेपे किरइत्यपिपाठ ॥ किटि केटति किटगतौ ॥ दंष्ट्री दंष्ट्रास्त्य
स्य ॥ घोणी घोणानासाऽस्य ॥ स्तब्धरोमा स्तब्धानिरोमाण्यस्य ॥ क्रोड क्रोडति क्रुडघनत्वे ॥ यद्वा क्रोडोऽस्त्यस्य ॥ भूदार भुवदारयति इतिद्वादशसूकरस्याभि
धानानि २ कपि कपते कपिचलने ॥ प्लवग विहगवत्साधु प्लुङ्गतौ ॥ प्लवग प्लवेनगच्छति गमेर्ड ॥ शाखामृग शाखाचारीमृग शाकपार्थिवादिवत् ॥ वली
मुख वलीयुक्तमुखमस्य वलीमुख वलिमुखइत्यपिपाठो ॥

मर्कटः मर्कति मर्कसौत्रोधातुर्ग्रहणे ॥ वानर· वनेभुवंफलादिवानंराति राआदाने ॥ कीशः कीइतिशब्दंईष्टे मूलविभुजादिः ॥ वनौकाः वनंओकोऽस्य इतिन-
ववानरस्यअभिधानानि ॥ भल्लुक. भलते भलहिंसाया ३ ऋक्ष· ऋक्ष्णोति ऋक्षहिंसायां ॥ अच्छभल्ल. अच्छश्चासौभल्लश्च ॥ भल्लूक· भालुकः भाल्लूकइ
त्यपिपाठो अच्छ·स्फटिकंभल्लूकनिर्मलेष्वितिमेदिनीकार. इतिचत्वारिअच्छभल्लस्य आस्वलरीसइतिख्यातस्याभिधानानि ॥ गंडकः गच्छति गम्लृगतौ य
द्वा गडतिसंहनोभवति गडिवदनैकदेशो ॥ खड्ग खडति खडभेदने ॥ खड्गी खड्गंश्रृंगमस्यास्ति इतित्रीणिगेंडाइतिख्यातस्याभिधानानि ॥ लुलायः लुडति

**मर्कटोवानरःकीशोवनौकाअथभल्लुके ३ ऋक्षाऽच्छभल्लभल्लूकागंडकेखड्गखड्गिनौ लुलायोमहिषोवाहद्विषत्का**
**सरसैरिभाः ४ स्त्रियांशिवाभूरिमायगोमायुमृगधूर्तकाः**

पके लुडसंश्लेषणे डलयोरेकत्वं आप्नोति आप्लृव्याप्तौ लुलश्चासावायश्च यद्वा लुड्यते लुडविलोडने लुलापइत्यपिपाठ· तत्रेद लुलाविलोडिताआपोये
न लुलविमर्दने यद्वाअयने अयगतौ लुलश्चासौअयश्च ॥ महिषः महति मह्यतेवा महपूजाया यद्वा मंहते महिङ्वृद्धौ ॥ वाहद्विषन् वाहानांद्विषन् यद्वा
वाहेषु ॥ कासरः केजले आसरति सृगतौ यद्वा ईषत्सरतीति स्थूलकायत्वात् ॥ सैरिभ· सीरस्य सूर्यस्यइभइवइभ. शकन्ध्वादित्वात्पररूपं स्वार्थेण् पुत्र
वाहनत्वात् इतिपंचमहिषस्य गवाइतिप्रसिद्धस्याभिधानानि ४ शिवा शिव· शिवावादेवनास्त्यस्या. शकुनावेदकत्वात् शिव·कील्लेशिवाक्रोशापवेदामल
कीशिवेतिशाश्वतात् ॥ भूरिमाय भूरिमायायस्य ॥ गोमायु गांविकृतांवाचंमिनोति डुमिञ्प्रक्षेपणे ॥ मृगधूर्तक. मृगेषुधूर्तइव ॥

सृगाल असृपसेसृजति मायामिति शादिपाठे शृगमित्यादि शृगनलाति शृगालोवञ्चकेदैत्येसृगालीडमरेभिदुरितिविश्व ॥ वञ्चक वञ्चयते वञ्चुप्रलम्भने व- हि
ञ्चुकइत्यपिपाठ वञ्चकस्तस्करवलेधूर्तेगृहबभ्रौचजम्बुकइतिकोशान्तरात् ॥ क्रोष्टा क्रोशतिक्रुश आह्वाने ॥ फेरु फेइत्यव्यक्तंरौति ॥ फेरव फेइत्यव्यक्तोरवो
ऽस्य ॥ जम्बुक जमतिजमुअदने इतिदशजम्बूकस्याभिधानानि स्त्रियामिति पुंव्यक्तावपि शिवाशब्दोनित्यस्त्रीलिंगइत्यर्थ ॥ ओतु अवति आखुभ्य गृह
वा अवरक्षणादौ ॥ बिडाल वेडति बिडयतेवा बिडआक्रोशे ॥ मार्जार मार्ष्टिमुखमिति मृजूष्शुद्धौ ॥ वृषदंशक वृषान्मूषकान्दशति ॥ आखुभुक् आ
खून्भुक्ते आखुभ्य भुनक्तिवा भुजपालनाभ्यवहारयो इतिपञ्चमार्जारस्यनामानि ॥ गौधेर गोधाया अपत्य ॥ गोधार ॥ गौधेय एतेत्रय शब्दाःगोधा

सृगालवञ्चक क्रोष्टुफेरुफेरवजम्बुका ५ ओतुर्बिडालोमार्जारोवृषदंशकआखुभुक् त्रयोगौधेरगौधारगौधेयागो
धिकात्मजे ६ श्वावित्तुशल्यस्तल्लोम्निशललीशललंशलं वातप्रमीर्वातमृग कोकस्त्वीहामृगोवृक ७ त्मनेस्थलगोधाया-

पत्येगारइतिख्याते अयकृष्णसर्पात् गोधायाघोरपडइतिख्यातायात्तयुष्मास्त्वायते अस्यसर्पस्यदंशेनमानव अवश्यम्म्रियते ॥ श्वावित् श्वानविध्यति व्य
ताडने क्विपिनहिवृतीतिदीर्घ ॥ शल्य शलति शलचलने इतिद्वेशल्यस्य साळइंइतिप्रसिद्धस्याभि० ॥ तल्लोम्नि तस्यशल्यस्यलोम्नि शलली शलल शलइ
त्रीणि ॥ वातप्रमी वातप्रभिमीते वाताभिमुखस्वभावनात् वतप्रमीः स्त्रियातुलक्ष्मीवत् ॥ वातमृग वातइव वातस्यवामृग इतिद्वेवातमृगस्य बाप्रूटइतिख्यात० ॥ को
कायते कुकआदाने ॥ ईहामृग ईहामृगयते मृगअन्वेषणे ॥ वृक वर्कत वृकआदाने यद्वा वृणोति वृञ्वरणे इतित्रीणिवृकस्य लाडगाइतिख्यातस्याभिधाना
नि ७

मृगः मृग्यतेव्याधैरिति मृगअन्वेषणे॥कुरंग· कौरंगति रगिगतौ॥वातायु. वातंअयते अयगतौ वातायुः वनायुरित्यपिपाठे॥हरिण. हरति मनोन्द्रियलेगो
तेनवा॥अजिनयोनिः अजिनस्ययोनि· इतिपंचहरिणस्याभि०॥एण्या· चर्माद्यंआद्यशब्दान् मांसादि एणेय एण्या.विकारोऽवयवोवा इतिएकंनाम॥एणस्य-
तुचर्माद्यऐणं एणस्यमृगस्यविकारोऽवयवोवा इत्येकं उभेऐणेयंऐणंचत्रिषुप्रोक्तं८ कदली केदलति दलविशरणे॥कंदली कंजलंदलति यद्वा कंदेसस्यमूलेर्ल
यते लीङ्श्लेषणे यद्वा कंदते कदिआह्वाने रंभावृक्षेचकदलीपताकामृगभेदयोः कलध्वनौकंदलीतुमृगगुल्मप्रभेदयोरितिलांतेमेदिनीकारः॥चीनः चिनोति
चिञ्चयने॥चमूरु. चम्वांऊरुर्यस्य॥प्रियक. प्रियते प्रिञ्तर्पणे॥समूरुः शोभनावूरूयस्य इत्येतेषट्हरिणभेदा. अजिनयोनयोज्ञेयाः॥कृष्णसार· कृष्णेन-

**मृगेकुरंगवातायुहरिणाजिनयोनयः ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभेत्रिषु ८ कदलीकंदलीचीनश्चमूरुप्रियकावपि**
**समूरुश्चेतिहरिणाअमीअजिनयोनयः ९ कृष्णसाररुरुन्यंकुरंकुशंबररौहिषाः गोकर्णपृषतैणर्श्यरोहिताश्चमरोमृगाः१०**

सार कृष्णशारइत्यपिपाठ· कृष्णश्चासौशारश्च शारःशबलकृष्णयोरितितालव्यादौरभस.॥रुरुः रौति रुशब्दे॥न्यंकुः नितरामंचति॥रंकु. रमते रज्यतेवा॥
शंबर· शवृणोति वृञ्वरणे शंबरः संवरइत्यपिपाठे॥रौहिष. रोहिषंतृणभेदमत्ति अत्रार्थेशैषिकोण् रौहिषंचतृणेक्लीबंपुंसिस्यात्हरिणांतरइतिविश्वप्रकाशः रोहिषइत्य
पिपाठः॥गोकर्णः गोरिवकर्णावस्य गोकर्णोऽश्वतरेसर्पेमृगभेदेगणांतरइतिहेमचंद्र.॥पृषतः पृषताःसंत्यस्य यद्वा वर्षति वृषुसेचने॥ऐण. एण्याःअपत्यं॥ऋ-
श्यः ऋश्यति ऋषीगतौ॥रोहितः रोहति रुहजन्मनिप्रादुर्भावेच॥चमर· चमति चम्यतेवा चमुअदने॥चमरंचामरेस्त्रीतुचमरीमृगभेदयोरित्युक्तत्वात्॥एते-
द्वादशमृगभेदाः स्युः १०

के गंधर्व गंधयति गंध्यतेवा गंधअर्दने अर्वगतौ गंधश्चासौअर्वश्च यद्वा गंधेर्व बोधोऽस्य गंधर्व पशुभेदेस्याह्नुस्कोकिलतुरगयो अंतराभवसत्वेनगायनेरव चरेपिचेतिविश्वमेदिन्यो ॥ शरभ शृणाति शृहिंसायां ॥ राम रमते रमिन्वानेन ॥ सृमर सरणशील सृगतौ ॥ गवय गवतगुङ्शब्द ॥ शश शशति शशप्लुत गतौ इत्यादयोयमोक्ता येचपूर्वोक्ता सिंहाद्या वक्ष्यमाणाश्चयेगामेषहस्त्यश्वादय सर्वेतेपशुजातय पशुशब्दवाच्या स्युः पश्यतिसर्वमविशेषेण दृशिर्प्रेक्षणे ११ उंदुरु उनत्ति उदिक्लेदने ॥ मूषक मुष्णाति मुषस्तेये ॥ आखु आखनति खनुअवदारणे इतित्रीणिमूषकस्याभिधानानि ॥ गिरिका गिरति गृनिगरणे ॥ बालमूषिका बालाचासौमूषिकाच खर्वाखुर्बालमूषिकेतिदुर्ग इतिद्वेस्वल्पमूषकजाते अभिधाने ॥ छुछुंदरी ॥ गंधमुखी गंध मुखेऽस्या ॥ दीर्घतुंडी दीर्घतुंडमस्याः ॥ दिवांधिका दिवाअंधिका इतिछुछुंदर्या चत्वारिनामानि ॥ सरट सरति सृगतौ ॥ कृकलास कृकशिरोग्रीवाकंठचला सयति इतिद्वेसरडइतिख्यातस्याभिधाने ॥ मुसली मुसति सशाय मुसखंडने ॥ गृहगोधिका गृहेगोधिका गृहगोलिकेत्यपिपाठ इतिद्वेगृहगोधायाः पालइतिख्यातायाः अभिधाने ज्येष्ठास्त्रीकुड्यमत्स्याचगृहगोधागृहालिकेतिकोशांतर १२ लूता लुनाति लुञ्छेदने ॥ तंतुवाय तंतूनवयति वेञ्तंतुसंताने तंत्रवायइत्यपिपाठ ॥ ऊर्णनाभ ऊर्णेवतंतुर्नाभावस्य ॥ मर्कटक संज्ञायाकन् मर्कति मर्क सौत्रोधातुर्ग्रहणार्थ इतिचत्वारि ऊर्णनाभस्य कोळी कोळीइतिख्यातस्याभिधानानि ॥

गंधर्वःशरभोरामः सृमरोगवयःशशः । इत्यादयोमृगेंद्राद्यागवाद्याःपशुजातयः ११ उंदुरुर्मूषकोप्याखुर्गिरिकाबालमूषिका छुछुंदरीगंधमुखीदीर्घतुंडीदिवांधिका सरटःकृकलासःस्यान्मुसलीगृहगोधिका १२ लूतास्त्रीतंतुवायोर्णनाभमर्कटकाःसमाः

नीलगुः नितरांलंगति नीलंगूःअपिनीलांगूरितिद्विरूपकोशः॥ क्रुमिः क्रामति क्रमुपादविक्षेपे क्रिमिरित्यपिपाठ· क्रिमिर्नाक्रिमिवत्कीटलाक्षायांक्रुमिलेरवरइतिमेदिर्नि
द्वेअपिपुसिक्षद्रकीटमात्रस्याभिधाने॥ कर्णजलेोकाः कर्णस्यजलंओकोयस्य॥ शतपदी शतंपादायस्या· इतिद्वे कर्णजलेोकसः घोण गोम वळोंजीइतिरव्यातस्याभि
धाने कर्णजलूकेत्यपिपाठः१३ वृश्चिकः वृश्चति ओव्रश्चूछेदने॥ शूककीट· शूकयुक्त· शूकशूकाव.रत्नोमनद्धक्तसर्वांग.कीटःशूककीटइत्यर्थ· शाकपार्थिवादिवत् इ
तिद्वेशूककीटस्यऊर्णादिभक्षकस्य कसरइतिरव्यातस्याभिधाने॥अलि अळति अलभूषणादौ आलिरित्यपिपाठ. नाहुलकादिण् वृश्चिकोद्रुणआलिःस्यादितिबो·
पालितः अथालीस्याद्वृश्चिकेभ्रमरेपुमानितिकोशांतरं॥ द्रुणः द्रुणति द्रुणहिंसागतिकौटिल्येषु इगुपधर्भात्किः॥ वृश्चिक· इतित्रीणि विंचूइतिरव्यातस्य विषकीटस्य

नीलंगुस्तुक्रुमिःकर्णजलेोकाःशतपद्युभे १३ वृश्चिकःशूककीटःस्यादलिद्रुणौतुवृश्चिके पारावतःकलरवःकपोतोथशशा
शादनः १४ पत्रीश्येनउलूकस्तुवायसारातिपेचकौ दिवांधःकौशिकोघूकोदिवाभीतोनिशाटनः नत्रालिरिदंतइन्नतश्च भवति॥पाराव

न परजीवमवति अवरक्षणादौ शत्रंतानादिदमर्थेण्॥ कलरव· कल रवोस्य॥ कपोत:कस्यवायोःपोतइव पारावतःकपोत·स्यात्कपोतोविहगांतरइतिविश्वः पाराव·
त·कलरव·पत्रीश्येन.शशादनइतिरभसः इतित्रीणिपारावतस्य पारवाखबुतरइतिरव्यातस्याभिधानानि॥ शशादन. शशअत्ति अदभक्षणे १५ पत्री अतिशयितंप्रश
स्तंवापत्रमस्य॥ श्येनःश्यायते श्यैङ्गतौ इतित्रीणिससाणाइतिरव्यातस्यनामानि॥ उलूकः उचति उचसमवाये उलूकादयश्चेति साधुः॥ वायसाराति· वायसस्यअ·
तिः॥ पेचकः पचति पच्यतेवा डुपचष् पाके पचिमच्यारिचोपधाया अतइत्वं पुगंनेतिगुणः दु.खेनसंतपति संतप्यतेनेत्यर्थ.॥निशाटनः निशासुअटति॥

क्रो पत्त्रकमस्थुलूकस्य ॥ व्याघ्राट व्याघ्रमटति अटगतौ व्याघ्रइवाटतिवा ॥ भरद्वाज इतिद्वे भरद्वाजस्यपक्षिणः कुभारकावा इतिख्यातस्याभिधाने ॥ खञ्जरीट खञ्ज इवऋच्छति ऋगतौ ॥ खञ्जन खजति खजिगतौ इतिद्वे चलचक्षस्य पक्षिविशेषस्य ताजवा दक्ष्यर इतिख्यातस्याभिधाने १५ लोहपृष्ठ लोहमिवपृष्ठयस्य ॥ कक ककते ककिगतौ ॥ ककश्चयद्विजेख्यातो लोहपृष्ठकतातयोरित्यकत्वात् इतिद्वे बाणोपयोगीपत्रस्य पक्षिविशेषस्याभि० ॥ चाष चाषयति चषहिंसाया ॥ किकीदिवि किकिइतिदिव्यतिवाशेते इतिद्वे चाषइतिख्यातस्याभिधा० ॥ कलिङ्ग केमूर्ध्निलिङ्गचूडाऽस्य ॥ कलिं कलहंगच्छतिवा ॥ भृङ्ग भृङ्गइव ॥ धूम्याट धूम्या धूमसमूहस्वाटति ॥ इतित्रीणि फेत्तुहार मस्तकचूडपक्षी इतिख्यातस्याभिधानानि ॥ शतपत्रक शतपत्राण्यस्य १६ दार्वाघाट दारुआहति इतिद्वेकरफोरास्तु

व्याघ्राट स्याद्भरद्वाज खञ्जरीटस्तु खञ्जन १५ लोहपृष्ठस्तु कक स्यादथचाष किकीदिवि कलिङ्गभृङ्गधूम्याटाअ
थस्याच्छतपत्रक १६ दार्वाघाटोऽथशारगस्तोककश्चातक समा कृकवाकुस्ताम्रचूड कुक्कुटश्चरणायुध १७ चट
क कलविक स्यात्तस्यस्त्रीचटकातयो

लारपक्षी काष्ठकुट्टाकारी इतिख्या० ॥ शारङ्ग शारयति शीर्यतेवा शृहिंसाया सारङ्गइत्यपिपाठ सरतिसृगतौ यद्वा सारमङ्गयस्य सारङ्गश्चातकेख्यात शबलेहरणेपिचेतितालव्यादिवजय ॥ तोकक तोककजलमस्य तोककायतिवा कैशब्दे ॥ चातक चतति चतेयाचने इतित्रीणि चातकस्याभि० ॥ कृकवाकु कृकेनगलेनवक्ति वचभाषणे ॥ ताम्रचूड ताम्राचूडाऽस्य ॥ कुक्कुट कुटति कुटकौटिल्ये कुकआदाने सपदादित्वात्क्विप् कुक्तया ॥ चरणायुध चरणआयुधमस्य इतिचत्वारिकुक्कुटस्य कोंबडे इतिख्यातस्य १७ चटक चटति चटभेदने ॥ कलविक इतिद्वे चटकस्यचिमणी इतिख्यातस्य ॥ तस्य चटकस्यस्त्रीचटकेत्येक अजादित्वाट्टाप् ॥

तयोश्चटकस्यचटकायाश्चपुमपत्येचाटकैरइत्येकं ॥ तयोरुस्त्र्यपत्येस्त्रीरूपापत्येचटकेत्येकमभिधानं १८ कर्करेटुः कर्केतिरेटति रेटभाषणे ॥ करेटुः केवायोरेटति इ
तिहं अक्षमवादिनिपक्षिभेदे कंकरेट ककपक्षी इतिरव्यातेअभिधाने ॥ करेटु कर्करेटुः स्यात्करटु कर्कराटुकइतिरभसः ॥ कृकणः कृकेणकंठेनअणति शकंध्वा-
दि. अणशब्दे ॥ क्रकरः क्रइतिशब्दकरणशीलः इतिहेकरकइतिरव्यातस्यकरेटुभेदस्याभिधाने ॥ वनप्रिय वनंप्रियमस्य ॥ परभृतः परेणकाकेनभृतः ॥ कोकि-
ल कोकते कुक्आदाने ॥ पिकः अपिकायति कैशब्दे इतिचत्वारिकोकिलइतिप्रसिद्धस्य ॥ काकः कायति कैशब्दे ॥ करटः केरटति रट्परिभाषणे ॥ अरिष्टः नरि
ष्टमस्य ॥ बलिपुष्टः बलिनापुष्टः ॥ सकृत्प्रजः सकृत्प्रजायस्य ॥ ध्वांक्षः ध्वांक्षति ध्वांक्षिघोर वाशितेच ॥ आत्मघोषः आत्मानंघोषयति घुषिरविशब्दने ॥

पुमपत्येचाटकैरस्त्र्यपत्येचटकैवसा १८ कर्करेटुः करेटुःस्यात्कृकणक्रकरौसमौ वनप्रियःपरभृतःकोकिलःपिकइत्यपि
१९ काकेतुकरटारिष्टबलिपुष्टसकृत्प्रजाः ध्वांक्षात्मघोषपरभृद्बलिभुग्वायसाअपि सएवचचिरंजीवीचैकदृष्टिश्चमौ
कुलिः २० द्रोणकाकस्तकाकोलोदात्यूहःकालकंठकः परभृत् परंबिभर्ति ॥ बलिभुक् बलिंभुंक्ते भुजपालनादौ ॥ वायसः वयते वयगतौ
इतिदशकाकस्याभिधानानि ॥ चिरंजीवी चिरंजीवति ॥ एक दृष्टिःएकादृष्टिर्यस्य ॥ मौकुलिः एतदपित्रयकाकस्य २० द्रोणकाकः द्रोणोस्त्रियामाढकेस्यादाटकाति
चतुष्टये पुमान्कृपीपतौकृष्णकाकेस्त्रीनीवृदंतरइतिमेदिनी ॥ द्रोण.कपीपतौकृष्णकाकइतिविश्वप्रकाशः ॥ द्रोणकाकोदग्धकाकोरुद्रकाकोवनाश्रयइतित्रि॰ ॰, ७
शेष ॥ द्रुणति द्रुणहिंसागतिकौटिल्येषु काकयति कक्लौल्ये ॥ काकोलः इतिहेकाकभेदस्यडोंबकावळाकृष्णकावळाइतिरव्यातस्य ॥ दात्यूहः दातिंमारणं
ऊहते ऊहवितर्के ॥ कालकंठकः कालेवर्षाकाले कंठोध्वनिरस्य इतिहे डाहद अंधकाक जलकाकइतिरव्यातस्य ॥

आतायी आतायते तच्छील तायगतानपालनयो· आतापीत्यपिपाठ आतापिनिभवेच्चिल्लइतिविश्वप्रकाश ॥चिल्ल चिल्लति चिल्लशैथिल्ये इतिहेचिल्लस्यघा रइतिप्रसिद्धस्या॰॥दाक्षाय्य दक्षते दक्षवृद्धौशीघ्रार्थेच दक्षाय्यस्यायतस्येदमित्यण्॥गृध्र· गृध्यति गृधुअभिकांक्षाया इतिद्वेगृध्रस्य गीधइतिख्यातस्यनाम नी॥कीर कीरयतीति॥शकुन्त शोकति शकगतौ शोभते शवतेवा शकुन्तदीप्तौ शकगतौ इतिद्वेकीरस्य रावाराघू इतिख्यातस्याभिधाने २१ कुड्ड् कुचति कुञ्च् का टिल्याल्पीभावयो ॥क्रौञ्च क्रौञ्चोद्वीपप्रभेदेस्यात्पक्षिपर्वतभेदयो इतिद्वे टेककुरकुचा इतिख्यातस्या॰॥बक बकते बकिकौटिल्येगतौच बवयोरैक्यं यद्वा वाति वायतिवावागत्यादौ॥कह्व केतिशब्द केजलेवाह्वयति ह्वेञ् स्पर्धायाशब्देच इतिद्वेबकस्य बगळा इतिख्यातस्याभि॰॥पुष्कराह्व पुष्कर पद्मतस्य आ

आतायिचिल्लौदाक्षाय्यगृध्रौकीरशकुन्तौसमौ २१ कुड्ड् क्रौञ्चो॰थबक कह्व पुष्कराह्वस्तुसारस कोकश्चक्रश्चक्रवा
कोरथागाह्वयनामक २२ कादंब कलहंस स्यादुत्क्रोशाकुररौसमौ हंसास्तुश्वेतगरुतश्चक्रांगामानसौकस २३

ह्वायस्य॥सारस सरसिभव सारस पक्षिभेदेस्यात्क्लीवेतुसरसीरुहे इतिद्वेसारसस्यअभिधाने॥काक॰ कोकते कुकआदाने॥चक्र क्रियते इतिघञर्थेकविधा नद्वित्वप्रकरणेक्वादीनामितिद्वित्व॥चक्रवाक ॥रथागाह्वयनामक रथागस्यचक्रस्यआह्वयोनामयस्य इतिचत्वारिचक्रवाकस्याभिधानानि २२ कादंब कदंबे समूहेभवतीति॥कलहंस कलोमधुरवाक् सचासौहंसश्च इतिद्वेबक इतिप्रसिद्धस्यनामनी॥उत्क्रोश उत्क्रोशति क्रुशआह्वाने॥कुरर कुरति कुरशब्दे इति द्वेकुररस्यनामनी॥हंस हंति गच्छति भवेद्वर्णागमाद्धंसइतिवा॥श्वेतगरुत् श्वेतागरुतोयस्य॥चक्रांग चक्राण्यगान्यस्य॥मानसौकस मानससर ओ कोयेषा इतिचत्वारिहंसस्यनामानि २३

येसिताः देहेनशुक्लाः चंचुचरणैः चंचुसहिताश्चरणाः तै लोहितैरुपलक्षितास्तेराजहंसाः हंसानांराजानःभवंति ॥ मलिनैः ईषद्धूम्रैश्चंचुचरणैस्तेहंसामल्लिका
क्षाःस्युः मल्लिकाराणिअक्षीणि येषांते मल्लिकाख्याइत्यपिपाठ ॥ सितेतरैः कृष्णवर्णै चंचुचरणैर्लक्षितास्तेधार्तराष्ट्राः धृतराष्ट्रेभवाः धृतराष्ट्रःस्वराज्ञिस्यात्पक्षिक्ष
त्रियभेदयोरितिरभस २४ शरारि शरऋच्छति शरहिंसायां ऋगतौ शरातिः शरअतति अतसातत्यगमने ॥ आति अतधातोर्णिजतादिः ॥ आटि अटतीति ॥ आडि
अडति अडउद्यमने आडि शरालिर्वरटीगधोलीवानरीकपीतिस्त्रीलिंगकांडेरत्नकोश इतित्रीणिआडीतिख्यातस्य पक्षिणःअभिधानानि ॥ बलाका बलते बलसं

राजहंसास्तुतेचंचुचरणैर्लोहितैःसिताः मलिनैर्मल्लिकाक्षास्तेधार्तराष्ट्राःसितेतरैः २४ शरारिरातिराडिश्चबलाकाबि
सकंठिका हंसस्ययोषिद्वरटासारस्यतुलक्ष्मणा २५ जतुकाऽजिनपत्रास्यात्परोष्णीतैलपायिका वर्वणामक्षिका
नीलासरघामधुमक्षिका २६ वरणे बलेनाकतिवा ॥ बिसकंठिका बिसवत्कंठोऽस्याः इतिद्वेबाळेटोकबगळा इतिप्रसिद्धस्य बकभेदस्य ॥ हंसस्य
योषित्स्त्री वरटास्यात् ॥ सारसस्यस्त्रीतुलक्ष्मणेत्युच्यते लक्ष्मणंनाम्निचिन्हेचसारस्यालक्ष्मणाक्वचिदितिविश्वः २५ जतुका जत्विवइवेप्रतिकृता इतिकन् ॥ अजि
नपत्रा अजिनचर्मतद्रूपेपत्रेपक्षौयस्याः इतिद्वे वटुरी चामचिराई इतिख्यातपक्षिभेदे अभिधाने ॥ परोष्णी परशत्रूष्णांयस्याः ॥ तैलपायिका तैलंपिबति पापाने इतिद्वे
पक्षयुक्तेकीटकविशेषे तेलडुवा वाघूळइतिख्यातेअभिधाने ॥ वर्वणा वरिति वरित्यनुकरणं वणति वणशब्दे यद्वा वर्वति वर्वगतौ ॥ मक्षिका मशति मशशब्दे मक्षतिवा म
क्षरोषेसंधानेच ॥ नीला नीलति नीलवर्णे इतित्रीणिमक्षिकायाः अभि० ॥ सरघा सरंगतिमतंघातयति ॥ मधुमक्षिका इतिद्वेमक्षिकाभेदस्यमधमाशीतिख्यातस्यअभि०

पतंगिका पततीति ॥ पुत्तिका पुनक्ति सिततायने तायूसतानपालयो इतिदेमधुमक्षिभेदस्य ॥ इयत्तु सरधान रूढायन्भिमित्तोमधुभेद माक्षिकैतेत्रवर्णस्या हूतव
एत्तुपोत्तिकमिति ॥ दंश दशति दंशदशने ॥ वनमक्षिका वनस्यमक्षिका इतिहे मोठीडास रानमाशी इतिख्यातस्यनामनी ॥ नेषादशानाजानिर्या ऽल्पासादशोत्तु
च्यते डासइतिख्यातस्यनाम ॥ गंधोली गंधयति गंधअर्दने ॥ वरटा वृणोति वृञ्वरणे ॥ वरटावरटीहंस्योस्त्वयंवीवरट स्मृतइतिनारपाल ॥ इतिदेवरटी गांधीण
माशीइतिख्यातस्यनामनी ॥ वरटास्त्रीपुंसयोः २७ भृंगारी भृंगरूपमाराति आराआदाने उपसर्गबलात् यद्वा बिभर्ति यद्वा रूपेण भृंगमृच्छति ऋगतौ स्त्री



पतंगिकापुत्तिकास्याद्दंशस्तुवनमक्षिका दंशीतज्जानिरल्पास्याद्गंधोलीवरटाद्वयोः २७ भृंगारीझीरुकाचीरीझिल्लिकाच
समाइमा समौपतंगशलभौखद्योतोज्योतिरिंगण २८ मधुव्रतोमधुकरोमधुलिण्मधुपालिनः द्विरेफपुष्पलिड्भृंगषट्पद
भ्रमरालयः २९ रुका स्त्री इतिरौति ॥ चीरी ची इतिरौति ॥ झिल्लिका झिल्लति झिल्लशैथिल्ये नत्रप्रयोगोदृश्यते अदृश्यझिल्लीस्वनकर्णमूलेरिति इति
चत्वारिसुरकुट निलट इतिख्यातस्याभिधानानि ॥ पतंग पतति ॥ शलभ शलति शलचलने इतिहे टोळ दीपपतंग इतिख्यातस्याभिधाने ॥ खद्योत खेद्योतते कृत-
शेसो खद्योतयतिवा ॥ ज्योतिरिंगण ज्योतिर्नक्षत्रतद्दिंगति इगिगतौ इतिहेखद्योतस्य काजवा इतिख्यातस्यनामनी २८ मधुव्रत मधुव्रतमस्त्ययस्य ॥ मधुकर
मधुकरोति ॥ मधुलिट् मधुलेढि लिहआस्वादने ॥ मधुप मधुपिबति पापाने ॥ अली अलति अलभूषणादौ ॥ द्विरेफ द्वौरेफौनाम्नियस्य ॥ पुष्पलिट् पुष्पलेढि
। भृंग बिभर्ति भृञ् किद्गुदचेतिसाधु ॥ षट्पद षट्पदान्यस्य ॥ भ्रमर भ्रमति भ्रमुअनवस्थाने ॥ अलि अलति इत्येकादशभ्रमरस्याभिधानानि ॥ अमधुक
रेमधुकरशब्दोरूढ २९

मयूरः मयते मयगतो मह्यांरौतिवा पृषोदरादिः ॥ बर्हिण. बर्हमस्त्यस्य ॥ बर्ही ॥ नीलकंठः नील· कंठोऽस्य ॥ भुजंगभुक् भुजंगंभुङ्क्ते भुजपालनादौ ॥ शिखाव-
ल ॥ शिखी शिखा संत्यस्य ॥ केकी केकास्त्यस्य ॥ मेघनादानुलासी मेघनादेनानुलसति लसश्लेषणक्रीडनयोः ॥ बर्हिणोदंतः बर्हीइन्नत शिख्यादित्रयमिन्नंतं इ
तिनवमयूरस्यनामानि ३० मयूरवाणी केकेत्युच्यते एकनाम केका केमूर्ध्नि कायति कैशब्दे ॥ चंद्रक. चंद्रइव ॥ मेचकः मेचकोवर्णोस्त्यस्य इतिद्वेपिच्छस्यनेत्राकारचि-
न्हस्याभिधाने ॥ बर्हिकंठसमंवर्णंमेचकंब्रुवतेबुधाइतिकात्यः ॥ शिखा शोने ॥ चूडा चुड्यते चुडसमुच्छ्राये इतिद्वेमयूरशिखायाअभिधाने ॥ शिखंडः शिखंडोबर्हचूड-

मयूरोबर्हिणोबर्हीनीलकंठोभुजंगभुक् शिखावलःशिखीकेकीमेघनादानुलास्यपि ३० केकावाणीमयूरस्यसमौचंद्रकमेचकौ शि
खाचूडाशिखंडस्तुपिच्छबर्हेनपुंसके ३१ खगेविहंगविहगविहंगमविहायसः शकुंतिपक्षिशकुनिशकुंतशकुनद्विजाः ३२ पत
त्रिपत्रिपतगपतत्पत्ररथांडजाः नगौकोवाजिविकिरविविष्किरपतत्रयः ३३

योरितिहेमचंद्रः ॥ पिच्छं पिच्छते पिच्छदिकुदने ॥ बर्हं बर्हति बर्ह
दद्धौ इतित्रीणिमयूरपिच्छस्याभिधानानि ३१ खगः खेगच्छति खग.सूर्यग्रहेदेवेमार्गणेचविहंगमे ॥ विहंगः विहगः विहायसिगच्छति ॥ विहंगमः विजहातिभुवं ओहाक्-
त्यागे ॥ विहाया· यद्वा विहायगति हयगतौ विहाया· शकुनोपुंसिगगनेपुनपुंसक ॥ शकुंतः शक्नोति शक्लुशक्तौ ॥ पक्षी पक्षोस्त्य.अस्य ॥ शकुनिःशकुंतः ॥ शकुनः एतेषुत्रि
षुशक्लुशक्तावितिधातु. शक्नोतीतिविग्रहः ॥ द्विजः द्विर्जायतइति ३२ पतत्री पतत्रमस्त्य ॥ पत्री पत्राणिसंत्यस्य ॥ पतगः पतेन पक्षेणगच्छति ॥ पतत् पतति पत्लृगतौ ॥ पत्ररथ
पत्त्रंरथइवयस्य ॥ अंडज. अंडाज्जायतेस्म ॥ नगौका· नगो नगेवा ओकोयस्य ॥ वाजी वाजापक्षाःसंत्यस्य ॥ विकिरः विकिरति कृविक्षेपे ॥ विः वाति वागतौ ॥ विष्किर· विपूर्वः
अग्रेकृविक्षेपे विष्किरःशकुनौवेनिस्कृद् ॥ पतत्रिः पतेरत्रिन् ३३

ते नीडोद्भव नीडेउद्भवोयेषा ॥ गरुत्मन. गरुत. पक्षा सन्तियेषा ॥ पित्सत पतितुमिच्छव ॥ नभसंगमा नभ खसंगच्छति इतिसप्तविंशतिपक्षिमात्रस्यनामानि ॥ अथने
षाविशेषावस्यन्तरतिशेष ॥ हारीत हारिःमनोहरस्तगमनमस्य इतिदेशानरभाषयाहारिलतिलगिरूपपक्षिणएकनाम ॥ मद्गु मज्जति इमस्तौशब्दौ इत्येकजलकाक
स्य पाणकावलाइतिख्यातस्यअभिधान ॥ कारंडव कारंडवाति इत्येक करडुवाइतिख्यातस्या॰ ॥ प्लव प्लवते प्लुगतौ प्लव प्लुसे प्लुतौकपौ ॥ शब्देकरंडवेम्लेच्छजातौभे
लकभेलयो कमनिम्नमहीभागेकुल्केजलवायसे जलान्तरेप्लवगधत्वणेप्लुस्तकमिधपीतिहेमचन्द्र इत्येकपुंडेरीपाणकोबडाइतिख्यातस्याभिधानानि ३४ तित्ति
रि तित्तिशब्दराति ॥ तित्तिरिःपक्षिणिपुनाविनिर्दिष्टम इतितित्तिरिपक्षीप्रसिद्ध ॥ कुकुभ कुगित्यव्यक्तशब्दकौति कुशब्दे बाहुलकात्भ ॥ लाव लावयति लूञ्छेदने

नीडोद्भवागरुत्मन पित्सतोनभसंगमा तेषाविशेषाहारीतोमद्गु कारंडव प्लव ३४ तित्तिरि कुकुभोलावोजीवजीवश्च
कोरक कोयष्टिकाष्टिट्टिभकोवर्तिकोवर्तिकादय ३५ गरुत्पक्षछदा पत्रपतत्रचतनूरुह

इतिलावापक्षीप्रोक्त ॥ जीवजीव जीवजीवय
ति नरदर्शनेनविषनाशनात् ॥ मयूरस्तुल्यपत्रक प्रोक्त चकोरक चकति चकतृप्तौ योयचंद्रिकयातृप्यति ॥ कोयष्टिक कजलयष्टिरिवअस्य पृषोदरादि इत्येककों-
ढाइतिख्यातस्यअभिधानं ॥ टिट्टिभक टिटिशब्दभाषते टिटिशब्देनभातिवा इतिटिटवीख्यात ॥ वर्तक वर्तते वृतुवर्तन चित्रपक्ष पक्षिभेद गाजिणपक्षीइति
प्रोक्त ॥ वर्तिका उदीच्यामतेस्त्र वटईवनचटकइतिप्रोक्ता ॥ स्त्रियावर्तकेत्यपि आदिशब्दात्सारिकाकपिंजलादय एकैकाएकैक ३५ गरुत् गिरति गृनिगरणेय
द्वा गृणाति गृशब्दे ॥ पक्ष पक्षति पक्षतेवा पक्षपरिग्रहे ॥ छद ॥ पत्र पतत्यनेन पत्रतुवाहनेपर्णेस्यात्पक्षेशरपक्षिणोरित्यमरत्वात् ॥ पतत्र पतनत्रायते त्रैङ्पाल
ने ॥ तनूरुह तन्वारोहति इतिषट्पक्षस्याभि॰ गरुत्पक्षेनरौछदामिविक्षौबकारेवोपालित ॥

पक्षतिः पक्षस्यमूलं ॥ पक्षमूलं पक्षतिः इत्येकं ॥ चंचुः चंचति चंचुगतौ ॥ त्रोटिः त्रोट्यते त्रुट् छेदने इतिद्वेपक्षितुंडस्याभिधाने ॥ चञ्चुश्चंचूस्तथात्रोटिरितिहलायुधः
३६ प्रडीनं तिर्यग्गमनं ॥ उड्डीनं ऊर्ध्वगमनं ॥ संडीनं संगतगमनं ॥ एताः तिस्रः खगानांगतिक्रियाः गमनव्यापाराः गतिविशेषाइत्यर्थः ॥ पेशी पिंशति पिशअवयवे चने ॥
कोशः कुशति निष्क्रमत्यस्मात्स्वयमेव षपाठे कुषनिष्कर्षेकुष्णातिइतिविग्रहः ॥ अंडं तत्रपेशीस्त्री कोशोस्त्रियां क्लीबेइत्यर्थः रूपभेदेनैवक्लीबत्वेसिद्धेद्विहीनइ
त्युक्तिः साहचर्येण पाप्तमस्त्रीत्ववारयति इतित्रीणिअंडस्यनामानि ॥ कुलायः कुलपक्षिसंतानमयतेऽत्र अयगतौ यद्वा कौलायोगतिरस्मात् ॥ नीडं नितरांईड्यते इ
तिद्वेपक्षिगृहस्य घरटा खोपा कोठें इतिख्यातस्यनामनी ३७ पोतः पुनाति पवतेवा पुञ्पवने पुङ्पवने ॥ पाकः पायते पिबतिवा पारक्षणे पापानेवा ॥ अर्भकः निपातनात् अ-

स्त्रीपक्षतिःपक्षमूलंचंचुस्त्रोटिरुभेस्त्रियौ ३६ प्रडीनोड्डीनसंडीनान्येताःखगगतिक्रियाः पेशीकोशोद्विहीनेंडं
कुलायोनीडमस्त्रियां ३७ पोतःपाकोर्भकोडिंभःपृथुकःशावकःशिशुः स्त्रीपुंसौमिथुनंद्वंद्वंयुग्मंतुयुगलंयुगं ३८

र्थते वृद्धिं प्राप्य ऋगतौ प्रापणेपिच ॥ डिंभः डिंभयति डपडिपसंघे ॥ पृथुकः पर्थयति पर्थ्यतेवा पृथप्रक्षेपे प्रथतेवा प्रथप्रख्याने ॥ शावकः शव्यते शवगतौ श्यतो-
यतेवा शोतनूकरणे ॥ शिशुः शशति प्लुतेनगच्छति शशप्लुतगतौ इतिसप्तशिशुमात्रस्याभिधानानि ॥ स्त्रियांतु पोती ॥ पाका ॥ अर्भका ॥ डिंभा ॥ पृथुका एतेचदाबं-
ताः ॥ स्त्रीपुंसौ स्त्रीचपुमांश्च ॥ मिथुनं मेथयति मेथृसंगमे ॥ मिथुनन द्वयोराशिभेदेस्त्रीपुंसयुग्मकइति ॥ द्वंद्वं द्वंद्वंरहस्येकलहेतथामिथुनयुग्मयोरित्युक्तत्वात् इति
त्रीणिस्त्रीपुरुषरूपयुग्मस्यनामानि ॥ युग्मं युज्यते युजिरयोगे ॥ युगुलं युगंलाति युगमस्त्यस्यवा ॥ युगं युगोरथेहलायेगेनद्वयोर्मुकुलादिष्वित्युक्तत्वात् इतित्रयंयुग्मस्य

समूह समूह्यते ऊहवितर्के ॥ निवह नितरामूह्यते वहप्रापणे ॥ व्यूह व्यूह्यते ॥ सदोह सदुह्यते दुहप्रपूरणे ॥ विसर विसरति सृगतौ ॥ व्रज व्रजति व्रजगतौ ॥ स्तोम स्तूय
ते स्तुञ्स्तुतौ ॥ ओघ आउह्यते ॥ निकर निकीर्यते कृविक्षेपे ॥ व्रात वृयते नियम्यते ॥ वार वार्यते आच्छाद्यतेऽनेन वृञ्वरणे वार सूर्यादिदिवसेद्वारेवसरेहृदयो
कुठारसेहरेवारोवारमद्यस्यभाजनइतिविश्वप्रकाशः ॥ सघात सहन्यते सघातनुसिघातेचसहतीनरकांतरइत्युक्त० ॥ सञ्चय सचीयते चिञ्चयने ३९ समुदा
य समुदीयते अयगतौ आङ्पूर्व ॥ समुदय समुदीयते इण्गतौ इगतौवा ॥ समवाय समवायते अयगतौ घञ् ॥ चय चीयते चिञ्चयने चयसमूहेप्राकारेस्यु
वधेसमन्ततावित्युक्तत्वात् ॥ गण गण्यते गणसंख्याने गण प्रथमसंख्यायेचकडीसैन्यप्रभेदयोरित्युक्तत्वात् ॥ सहति सहन्यते ॥ वृंद वृण्यते वृणुगस्से ॥ निकुरंब

समूहोनिवहव्यूहसदोहविसरव्रजा स्तोमौघनिकरव्रातवारसघातसञ्चया ३९ समुदायसमुदयसमवायश्चयोगण
स्त्रियातुसहतिर्वृंदनिकुरंबकदंबक ४० वृंदभेदा समैर्वर्गसघसार्थौतुजंतुभि सजातीयै कुलयूथतिरश्चापुनपुसक ४१

निकुरति निकुर्यतेवाकुरछेदने ॥ कदंब कुत्सितमवतेवा अविशब्दे कदति कद्यतेवा कदिसौत्रोधातु ॥ तत्रसहति स्त्रिया ४० वृंदभेद वृज्यते वृजिवर्जने समुदाय
विशेषा उच्यतइतिशेष ॥ समैर्हिसजातीयै प्राणिभि अप्राणिभिर्वासमूहोवर्गइतिप्रोच्यते ॥ एक ॥ यथामनुष्यवर्ग ॥ शैलवर्ग सजातीयैर्विजातीयैरपिजंतु
भि प्राणिभिरेवसमूह सघसार्थइतिचप्रोच्यते इतिद्वेअभिधाने ॥ यथापशुसघ वणिक्सार्थ ॥ सजातीयैर्जंतुभिरेवकुल कोलति कुलसस्त्याने कुलजन
पदेगोत्रेसजातीयेगणेपिचेत्यु० इत्येक ॥ तिरश्चामेवसजातीयानासमूहोयूथ ॥ यौति यूयतेवा युमिश्रणे यूथतिर्यक्समूहेस्त्रीपुष्पभेदेचयोषितीत्युक्तत्वात् ॥ र
त्येक ४१

पशूनामेववृंदंसमजइतिप्रोच्यते इत्येकं॥संवीयतेऽत्र अजगतिक्षेपणयोः समजः पशुवृंदेनाविपिनेपिनपुंसकमित्युक्तत्वात्॥अन्येषांपशुव्यतिरिक्तानांवृंदंसमाजः प्रो-
च्यते इत्येक॥सधर्मिणांएकधर्मवतांसमूहोनिकायः निचीयते चिञ्चयने॥पुंजः पुंजयति पिंज्यतेवा पिजिहिंसाबलादाननिकेतनेषु पिंजरित्यपिपाठः॥राशिः अश्नुते
अशूव्याप्तौ॥उत्करः उत्कीर्यते कृविक्षेपे॥कूटं कूटयति कुट्यतेवा कुटअप्रदाने कुटदाहे अमंत्रणेवा कूटंपुंनपुंसक चत्वारि धान्यादिराशौ नामानि ४२ तद्गणे तेषांक
पोतादीनांसमूहेकापोतादीनिभवंति॥यथा कापोतं कपोतानांसमूहः॥शौकं शुकानांसमूहः॥मायूरं मयूराणांसमूहः॥तैत्तिरं तित्तिराणांसमूहः कपोतादिभ्यः अनु
दात्तेरञ् आदिशब्दात्काकमित्यादि॥येगृहासक्ताः क्रीडार्थंपंजरादौस्थापितास्तेपक्षिमृगाः छेकागृह्यकाइतिचस्युः इतिद्वेनामनी गृह्याएवगृह्यकाः स्वार्थेकन्४३

पशूनांसमजोन्येषांसमाजोऽथसधर्मिणां स्यान्निकायःपुंजराशीतूत्करःकूटमस्त्रियां ४२ कापोतशौकमायूरतैत्तिरादीनितद्ग
णे गृहासक्ताःपक्षिमृगाश्छेकास्तेगृह्यकाश्चते ४३ इतिसिंहादिवर्गः मनुष्यामानुषामर्त्यामनुजामानवानराः स्युः
पुमांसःपंचजनाःपुरुषाःपूरुषानरः १ इतिसिंहादिवर्गः॥ ॥मनुष्याः मनोरपत्यानि पुमांसः यत्प्रत्ययेषुगागमः॥ मानुषाः अञ्प्रत्ययेषुगागम विग्रह पूर्व
वत्॥मर्त्या म्रियन्तइति मृङ्प्राणत्यागे॥मनुजाः मनोःजाताः जनीप्रादुर्भावेडप्रत्ययः॥मानवा मनोःइमे इदमर्थेण् इत्याद्यूह्यं॥नराः नरंति नृणंतिवा नरोजेमनुजेऽर्जुने
यद्वा नयतिपूर्वपुरुषानुत्तमांगतिं॥पुमांसः पुनंति पुञ्पवने॥पंचजनाः पंचभिः पृथिव्यादिभूतैःजन्यंतइति॥पुरुषाः पुरंति पुरअग्रगमने यद्वा पुर्यांशेरते॥नरः नयंति
नयतेर्डिच्चेति ऋप्रत्ययः डित्वाट्टिलोपः तत्रैवं पुमांसइत्यादिपंचकं पुंव्यक्तावेवप्रायेणप्रयुज्यते यथा पुंस्कोकिलः केचित्स्त्रीव्यक्तावपिप्रत्ययसंस्कारेण इत्येकादशम
नुष्याणांनामानि १

को॰ स्त्री स्त्रीवधूर्योषितारामेनितिकाद्यशेष स्त्यायत शुक्लशोणितेयस्या॥योषित् योषति जुष्यतेवा युष प्रीत्र सेवायांजनेवा इतिभत्त्यय॥अबला अल्पबलमस्याःअ
ल्पार्थेनञ् अनुदराकन्यतिवत्॥योषा योषति पोषयतिवा स्त्यास्त्य जोषेत्यपिपाठ नत्रैवजुषति जुष्यतेवा जुषिप्रीतिसेवनयो ॥नारी नृनरयाद्दस्वितिङीन् वृ-
द्धिश्च॥सीमन्तिनी सीमन्तोस्त्यस्या॥वधू वहतिऊह्यतेवा॥प्रतीपदर्शिनी प्रतीपद्रष्टुशीलमस्या अपांगभिरीक्षणत्वात्॥वामा वमति स्नेहमित्यध्याहार डुवम् उद्गिर
णे ज्वलितिकसंतभ्याण इतिणप्रत्यय यद्वा वाम कामोऽस्त्यस्या नत्रैव वामधनेपुंसिहरेकामदेवेपयाधरइत्युक्तत्वात्॥वनिता वनमभक्तो बाहुलकादितन् वन्यते
स्यक्त॥महिला महति मह्यतेवा महउत्सवलाति लायाने पृषो॰ महपूजाया यद्वा महस्यउत्सवस्यइला भूमिरितिविग्रहेमहला इत्येकमदशस्त्रियः २ विशेषा स्त्रीणां

स्त्रीयोषिदबलायोषानारीसीमन्तिनीवधूः प्रतीपदर्शिनीवामावनितामहिलातथा २ विशेषास्त्वंगनाभीरु कामिनीवामलोचना प्र
मदामानिनीकान्ताललनाचनितम्बिनी ३ सुंदरीरमणीरामाकोपनासेवभामिनी भेदावक्ष्यतइतिशेष अंगना प्रशस्तमंगयस्या अंगात्कल्याण

इतिन इत्येक॥एवरामापर्यन्तमेकैकंज्ञेय भीरु भयशीला भीरूरितिदीर्घोकारान्त भीरुभीलुश्च एतावपिपाठौरलयोरैक्यात् भीरुरार्तजनस्त्रियामितिरभस॥कामि
नी कामोऽस्यास्तीति॥वामलोचना वाम कामेलोचनयोःयस्या यद्वा वामेसुंदरे लोचनेयस्या॥प्रमदा प्रमदोहर्षोस्त्यस्याः प्रमद सन्मदमत्तस्त्रियासुन्मदयोषिति इत्युक्त-
त्वात्॥मानिनी मानोस्त्यस्याः मानश्चित्तोन्नतौग्रहे॥कान्ता कम्यतेस्म कमुकान्तौ॥ललना ललते लल ईप्साया णिजभावेल्यु युज्वा यद्वा लडति लडविलासे डलयोरैक
त्व ललनाकामिनीनारी भेदजिह्वासुयोषितीतिविश्वमेदिन्यौ॥नितम्बिनी नितम्बोऽस्त्यस्याः ३ सुंदरी अतीकउन्नतौनि उदीक्लेदने सुपूर्व बाहुलकादरउकारयो शकन्ध्वादित्वात्पर

रूप गौरादित्वातङीष् ॥रमणी रमणीपदव्याख्या कर्तरिल्युट् अधिकरणेवा ॥रामा रामापदेरमतेज्वलादित्वात् णेटाप् रमतेऽस्यामितिपक्षे बाहुलकादधिकरणेघञ्टाप्
रमयति रम्यतेऽस्यांवा ॥पशुभेदेस्कतेरामोराघवेरेणुकासुते रामंतुवास्तुकेकुष्टेरामाहिंगुलिनीस्त्रियोरितिहैम· ॥कोपना कुप्यति तच्छीला कुपक्रोधे ॥ भामिनी अवश्यंभा
मते भामक्रोधे ॥वरारोहा वर आरोहोनितंबोऽस्या ॥मत्तकाशिनि मत्ताक्षिबेव काशते भाति उपपदार्थः कर्ता प्रत्ययार्थस्य कर्तुरुपमान कर्तर्युपमानेइतिणिनि· म-
त्तकासिनीत्यपिपाठ ॥उत्तमा उत्कृष्टेत्यर्थः ॥वरवर्णिनी वरः वर्णोऽस्त्यस्याः शीतेसुखोष्णा सर्वांगीग्रीष्मेयासुखशीतला भर्तृभक्ताचयानारीविज्ञेयावरवर्णिनीतिरु
द्र· यद्वा उत्तमेतिनपर्याय· किंतु उत्तमास्त्रीसैतत्पर्यायाज्ञेयेतितदर्थः चत्वारिगुणैरुत्कृष्टायाःस्त्रियाः नामानि ४ या कृताभिषेका नृपस्त्री सामहिषीत्येकं कृत·अभि

वरारोहामत्तकाशिन्युत्तमावरवर्णिनी ४ कृताभिषेकामहिषीभोगिन्योऽन्यानृपस्त्रियः पत्नीपाणिगृहीतीचद्वितीयासहधर्मिणी
५ भार्याजायाऽथपुंभूम्निदारास्यात्तुकुटुंबिनी षेकोऽस्याः ॥महिषी मह्यते महपूजायां ॥अन्या अकृताभिषेकानृपस्त्रियोभोगिन्यइत्युच्यतेएकं ॥अति
शयितोभोगोयासा ॥पत्नी पत्या यज्ञीययोगोयस्याः ॥पाणिगृहीती पाणिर्गृहीतोयस्याः पाणिगृहीतीभार्यायामितिङीष् ॥द्वितीया द्वयोः पूरणी या द्वितीयातिथिगे
हिन्योर्द्वितीयः पूरणेद्वयोरितिहेमचंद्रः ॥सहधर्मिणी सहधर्मोऽस्त्यस्याः पत्यासहकर्मस्वधिकारात् सहधर्मिणीत्यपि ५ भार्या भ्रियते भ्रियतेवा डुभृञ्धारणपो-
षणयोः भृभरणादेवा ॥ जाया जायतेऽस्यां जनेर्यक् जायायास्तद्धिजायात्वंयदस्यांजायतेपतिरितिमनुः ॥दारा· दारयंतिभ्रातॄन् दृविदारणे तत्र दारशब्दोनित्यं
पुंसि बहुवचनांतश्च दारशब्दष्टाबंतोऽपि क्रोडाहारातथादारात्रयएतेयथाक्रम क्रोडेहारेचदारेषुशब्दाःप्रोक्तामनीषिभिरितिहेमचंद्रात् सप्तपरिणीतायाःस्त्रियाःना
मानि ॥कुटुंबिनी कुटुंबमस्त्यस्याः कुटुंबंपोष्यवर्गेचेत्यमरमाला ॥

पुरध्री पुरंधारयति धृञ्धारणे ईपन्निपुनवत्या पुरनपुंसकेगेहइत्यकत्वात् पुरंधिरित्यपि स्वार्थेणि जनात्स्वच् णिलोपेगौरादित्वान्ङीष् पृषोदरादित्वात् आकारलोपेसा
धु ॥सुचरित्रा शोभनंचरित्रमस्याः॥सती॥साध्वी साध्नोतिपतिकार्यमिति पतिंयानातिचरतिमनोवाक्कायसंयता भर्तृभक्ताचयानारीसाध्वीतिचोच्यते इत्यमरः॥प
तिव्रता पत्येोव्रतमस्या इत्यापूर्व पतिशब्द सेवाया लाक्षणिक इति शाब पत्याविपतिसेवातत्परायाः ६ कृतसापत्निका सपत्न्या भाव सापत्न्यं कृतसापत्न्यमस्या अत्र
पक्षेयकारश्रवणापत्ति अतोरघ्मार्श्रमोक्तिर्याख्या सायथा सापत्न्यशब्दात्ङीषिस्वार्थेकन् यलोपः ह्रस्व कृतासापत्निकायस्या कश्चित्कृतसापत्नकेतिपाठ तत्रैव स
पत्न्याआगतसापत्नक कृतसापत्नकमस्या ॥अध्यूढा अधिउपरिऊढउद्वहनयस्याः॥अधिविन्ना अधिउपरिविन्नलाभोऽस्याः यद्वा अधिकाउपरिविन्नालब्धायस्याः

पुरंध्रीसुचरित्रातुसतीसाध्वीपतिव्रता ६ कृतसापत्निकाध्यूढाऽधिविन्नाथस्वयंवरा पतिंवराचवर्याथकुलस्त्रीकुलपालिका ७ क
न्याकुमारीगौरीतुनग्निकाऽनागतार्तवा

इत्यापूर्व त्रीणिअनेकभार्यस्यप्रथमव्यूढाया ॥स्वयंवरा स्वयंवृणीते वृङ्संभक्तौ॥पतिंवरा पतिंवृणोति॥वर्या
वेयतेःवैकैर्या त्रीणिस्वेच्छयापतिवरणोद्यतायाः ॥कुलस्त्री कुलपालिकास्त्री शाकपार्थिवादिवत् ॥कुलपालिका कुलंपालयति पालरक्षणे कर्मण्यण् स्वार्थेकन् द्वे कुल
त्या स्त्रियाः ७ कन्या कनति कनदीप्तौ कन्यानार्याकुमार्यांचराशयौषधिविशेषयोरितिहैम ॥कुमारी कुम्यते कमुकान्तौ यद्वा कुमारयति कुमारक्रीडायां कुत्सितोमारोऽ
स्या इ प्रथमवयसिवर्तमानायाः ॥गौरी गूयते गूङ् शब्दे गौरीत्वसजातरजाः कन्याशाकरभार्ययोरितिविश्व ॥नग्निका नग्नतस्य ओणस्त्रीभीरु नग्निकातुकुमार
द्युमान्रूपणवादिनो ॥अनागतार्तवा अनागतमार्तवरजोऽस्याः त्रीणिअदृष्टरजस्कायाः ततेस्यच अष्टवर्षाभवेद्गौरीदशमेनग्निकाभवेदिति तस्याअवान्तरभेद ॥

मध्यमा बाल्ययौवनयोर्मध्येभवा मध्येबाल्ययौवनयोर्मध्यशोभायस्यांवा ॥ दृष्टरजा दृष्टंरजोयस्याः द्वे प्रथमप्राप्तरजोयोगायाः ॥ तरुणी तरति तॄप्लवनतरणयोः चोरस्वलोवेत्युनन् वय- सि प्रथमे इत्यत्र वयस्यचरमइतिवाच्यमितिङीप् तलुनी तलून पवने यूनिस्तुवत्यातलुनीस्मृतेतिमेदिनी ॥ युवतिः युवतीतिङीषंतेतिकेचित् यूनीतिङीषंतोऽन्यत्र द्वे मध्यमवयसि वर्तमानायाः ८ स्नुषा स्नौति स्नुप्रस्रवणे ॥ जनी जायतेवंशोऽस्यां जनिरित्यपि कृदिकारादितिङीष् विकल्पात् ॥ वधूः वहति वहप्रापणे वधूः पत्न्यांस्नुषानार्योः स्पृक्कासारिवयो- रपि इत्युक्तः अयंपुत्रादिभार्यायाः नवपरिणीतायाश्चेतिहैमात् वधूरित्येकं नवोढायाः स्त्रियाअपि ॥ चिरिंटी चिरेणाटति पितृगेहाद्भर्तृगेहं पृषोदरादिः ॥ चिरंटी चिरिंहिंसा यां चिरंटीतुसुवासिन्यास्याद्द्वितीयवयस्स्त्रियामितिविश्वप्रकाशः ॥ सुवासिनी सुष्टुवसति स्ववासिनीत्यपिपाठः तत्रैवं स्वेषुपित्रादिषुवस्तुंशीलमस्याः स्ववासिन्यांचिरिंटी

स्यान्मध्यमादृष्टरजास्तरुणीयुवतिःसमे ८ समाःस्नुषाजनीवध्वश्चिरिंटीतुसुवासिनी इच्छावतीकामुकास्याद्वृषस्यंतीतुकामुकी ९ कांतार्थिनीतुयायातिसंकेतंसाभिसारिका पुंश्चलीधर्षिणीबंधक्यसतीकुलटेत्वरी १० स्याद्द्वितीयेवयसिस्त्रियामितिरुद्रः इतिद्वे

किंचिल्लब्धयौवनायांपरिणीतायां ॥ इच्छावती इच्छाविद्यतेऽस्याः ॥ कामुका कामयते कमुकांतौ इतिद्वे धनादिइच्छावत्याः ॥ वृषस्यंती वृषंनरं आत्मनः इच्छति क्यच्सुगागम. श तृप्रत्ययांतात्ङीप् ॥ कामुकी कामयते कमुकांतौ द्वे वृषवन्मैथुनेछावत्याः ९ या कांतार्थिनी कांतस्यअर्थोयस्याः भर्तुःसंकेतस्थानंगच्छति साऽभिसारिका अभिसरति सृग- तौ तदाह हित्वालज्जाभयेश्लिष्टामदेनमदनेनया अभिसारयतेकांतंसाभवेदभिसारिका इत्युक्तः एकं ॥ पुंश्चली पुंसोभर्तुः सकाशाच्चलति पुरुषांतरंगच्छति चलगतौ ॥ धर्षिणी धर्षयति ञिधृषाप्रागल्भ्ये अवश्यकेणिनिः धर्षणीत्यपि ल्युट् कृषधातोरनिः कर्षणिः कर्षतिमनः धर्मिणीतिकचित्पाठः ॥ बंधकी बध्नातिमनोऽन्यत्र ॥ असती सत्याभिन्ना ॥ कुलटा अटति अटगतौ कुलस्य अटा कुलंजनपदेगृहेइतिविश्वः ॥ इत्वरी एतितच्छीला इत्वर्यसत्यापथिकंक्रूरकर्मणिचत्रिषु १०

सामिधेनी अग्निसमिंधनेसमित्प्रक्षेपेणवन्हिज्वलनेयाऋक्प्रयुज्यते सा सामिधेनी॥सैवधाय्याचस्यात्॥गायत्रीप्रमुखंछंदःस्यात् तत्रछंदांसिउच्यते गायत्री उष्णिक् अनुष्टुप् बृहती पंक्ति त्रिष्टुप् जगती इतिछंदांसि॥छद चदिआल्हादने॥हव्यपाके पच्यतेपाकः हव्यस्यपाकोयस्मिन्नत. अग्निषु एवहूयमानेऽन्नेचरुरित्येकं चर्यते भक्ष्यते चरगतौभक्षणेवा चरुर्हव्यातभांडयोरितिमेदिनी विश्वप्रकाशेतु चरुर्भांडेचहव्यान्ने २२ आमिक्षा आमिष्यते मिषुसेचने॥शृतोष्णे शृतंपक्वंच तदुष्णाचतस्मिन्क्षीरेपयसिदधियोगतः याविकृति साआमिक्षास्यात् एकं॥धवित्रं धूयतेऽनेन धूञ्कंपने धूञ्विधूननेवा॥मृगचर्मणारचितंयत् व्यजनतद्धवित्रं वीज्यतेऽनेन अग्नेः संधुक्षणार्थंमृगत्वचारचितस्यव्यजनस्येत्येकं २३ पृषदाज्य पर्षीते पृष्यतेवा पृषुसेचने पृषद्भिः सहितेदध्नासहितेघृतेपृषदाज्यं पृषातकंस-

ऋक्सामधेनीधाय्याचयास्यादग्निसमिंधने. गायत्रीप्रमुखंछंदोहव्यपाकेचरुःपुमान् २२ आमिक्षासाशृतोष्णेया क्षीरेस्याद्दधियोगतः. धवित्रंव्यजनंतद्यद्रचितंमृगचर्मणा २३ पृषदाज्यंसदध्याज्येपरमान्नंतुपायसं हव्यकव्येदैवपित्र्येअन्नेपात्रंस्रुवादिकं ॥२४॥

दध्याज्येपृषदाज्यंतदुच्यते एकंदधिमिश्रितघृतस्य॥परमान्नं परमचतदन्नंच यद्वा परमानामन्नंपायसंस्यात् पयसिसंस्कृतं पायसंपरमान्नके इतिहैमः. द्वे हव्यकव्ये॥हव्यं हूयंतेप्रीण्यंतेदेवायेन हूयतेप्रक्षिप्यतेवा हूदानादनयोः॥कव्यं कूयतेपितृभ्यःकुशब्दे देवान्नंहव्यं पित्रन्नंकव्य॥दैवपित्र्येदेवपितृसंबंधिनिअन्नेक्रमेणहव्यकव्येस्यातां पैत्रमित्यपिपाठः तस्येदमित्यण्॥पितरः देवताः यस्य अत्रपक्षेयत्प्रत्ययः देवान्नंहव्यं पित्रन्नंकव्य॥पात्रं पाति पिबंत्यनेनवा पात्रमन्त्रेत्रिषुक्लीबंस्रुवादौराजमंत्रिणि तीरद्वयांतरेयोग्यइत्युक्तत्वात्॥स्रुवः स्रवतिघृतादिकं स्रुस्रवणे राःआदिर्यस्यतत् आदिशब्देनचमसोलूखलादिभवेत् स्रुवोहेमपात्रेशल्लकीमूर्वयोःस्त्रियामित्युक्तत्वात् २४

ध्रुवा ध्रुवति ध्रुवस्थैर्ये पाठान्तराभिप्राय ध्रुवशाकोहरेविष्णौवटेचोत्तानपादजे वसुयोगभिदोःपुंसिध्रुवस्तेजस्रतर्कयो स्थिरेनित्येनिश्चितेचध्रुवस्त्रीवम्भीतिरुद्र्‌सु कत्वात्॥उपभृत् उपबिभर्ति॥जुहू जुहोति श्रुतिगमिजुहोतीनांद्वेचेतिक्विप्दीर्घश्च एतेत्रय स्रुचोभेदा स्त्रीलिंगे स्रुवस्तुनापुंल्लिंगे॥स्रुव स्रुवति स्रुत॥उ पाकृत उपाक्रियते कृञ्‌हिंसाया॥उपाकृतोध्वरहतेपशौनोपक्रुतेत्रिषु इतिविश्वमेदिन्यौ॥अभिमन्त्र्य अभित मन्त्रयित्वा मन्त्रिगुप्तभाषणे॥हत हन्तुमार ब्ध एक क्तोअभिमन्त्र्यहत पशुः उपाकृत स्यात् २५ परपराक परपरायाअक अकुटिलगतौ यद्वा परमित्यव्ययमतिशये परपर श्रेष्ठ माकोऽस्मा देति॥शमन शमुउपशमे भावेल्युट् शमन श्रान्द्देवत इतिविश्वमेदिन्यौ शमनस्तुयमेश्रान्द्देशमनशान्तिसिंहयोरितिहैम॥प्रोक्षण प्रकृष्टउक्षण उक्ष

ध्रुवोपभृज्जुहूर्नातुस्रुवोभेदा स्रुच स्त्रिय उपाकृत पशुरसौयोऽभिमन्त्र्यक्रतौहत २५ परपराकशमनप्रोक्षणाञ्चव धार्थक वाच्यलिंगा प्रमीतोपसपन्नप्रोक्षिताहते २६ सानाय्यहविरग्नौतुहुतत्रिषुवषट्कृत दीक्षान्तोऽवभृथोयज्ञेतत्क- र्मार्हन्तुयज्ञिय २७

सेचने प्रोक्षणसेकवधयोरितिहैम त्रयवधार्थक वधोहिंसार्थोऽस्य त्रीणियज्ञार्थपशुहननस्य॥प्रमीतोपसन्न प्रमीयतेस्म मीञ् हिंसाया उपसपद्यतेस्म पदगतौ प्रमीतवाच्यलिंगस्यात्प्रोक्षितेपिमृतेऽपिचेतिविश्व॥प्रोक्षित प्रोक्ष्यतेस्म उक्षसेचने प्रोक्षितनिहितेसिक्त इतिरभस प्रमीते पसपन्नप्रोक्षिता वाच्यलिंगा स्यु त्रीणियज्ञेहतस्यपशो २६सान्नाय्य सन्नीयते णीञ्प्रापणे॥हवि हूयते हविर्विशेष सान्नाय्यस्यात् द्वेअग्नौहुत प्रक्षिप्त आज्यादिवषट्कृत वषडितिमन्त्रोपलक्षण वषट्मन्त्रेणकृतप्रक्षिप्तद्वेहुतस्य॥अवभृथ अवभ्रियतेऽनेन भृञ्भरणे॥दीक्षान्त दीक्षाया अन्त प्रधानकर्मस- माप्तौक्रियमाणोयज्ञ इष्टिपूर्वक स्नानविशेषइत्येके॥तत्कर्मार्ह तस्ययज्ञस्यकर्मक्रियामर्हति यज्ञमर्हतिएक क्रतुक्रियासपादनयोग्यस्यद्विजद्रव्यादे त्रिषु २७

अथ क्रतुकर्म क्रतुश्चयज्ञः कर्मचदानानि इष्टशब्दवाचक वाच्यंस्यात् बहुव्रीहिर्वास्यात् इष्टंयोगेचवांछिते एकाग्निकर्महवनंत्रेतायांयच्चहूयते अतर्वेद्यांन्वय-
दानंइष्टंतदभिधीयते इतिमनुः॥ इष्टमाशंसितेपिस्यातपूजितेप्रेयसित्रिषु समस्तनोपुमान्क्लीबेसंस्कारेक्रतुकर्मणि एकं॥खातादि पुष्करणीखननमादिर्य
स्यदेवालयारामादिनिर्माणं तत्कर्मक्रिया तस्मिन्पूर्तस्यात् पूर्यतेस्म पॄपालनपूरणयो. पुष्करिण्यःसभावापीदेवतायतनानिच आरामश्चविशेषेणपूर्तकर्म
विनिर्दिशेत् इतिमनु. पूर्तत्रिषुपूरितेस्यात्क्लीबंखातादिकर्मणि एकं॥अमृतं अमृतमिव अमृतसाधनत्वात्॥विघस. विशिष्टैरघ्यते अदभक्षणे अमृतय
ज्ञशेषेस्यात्पीयूषेसलिलेघृते अयाचितेचमोक्षेचनाधन्वंतरिदेवयो यज्ञशेषभोजनशेषयो. यज्ञस्यशेषोहोमावशिष्टाज्यपुरोडाशादिदेवपित्रतिथिगुर्वा

त्रिष्वथक्रतुकर्मेष्टंपूर्तंखातादिकर्मयत् अमृतंविघसोयज्ञशेषभोजनशेषयोः २८ त्यागोविहापनंदानमुत्सर्जनविसर्जने
विश्राणनंवितरणंस्पर्शनंप्रतिपादनं २९ प्रादेशनंनिर्वपणमपवर्जनमंहतिः मृतार्थंतदहेदानंत्रिषुस्यादौर्ध्वदेहिकं ३०

दिभुक्तस्यशेष तयो. क्रमेणैकैकं. २८ त्याग. त्यजन॥विहापन॥दान दानगजमदेत्यागेपालनेदेशशकच्छिषु इतिविश्वमेदिन्यौ विसर्जनंपरित्यागेदानेमप्रेषणेपिचेतिहेम.
॥उत्सर्जन॥विसर्जन॥विश्राणन॥वितरण॥स्पर्शन स्पर्शनोमारुतेपुंसि इतिविश्वः॥प्रतिपादन प्रतिपादनतुदानेप्रतिपन्नोप्रबोधनेइतिविश्व २९ प्रादेशनं दिशअतिसर्जने
॥निर्वपण निःपूर्वकात्वपतेर्भावेल्युट्॥अपवर्जनं वृजीवर्जने॥अंहति हंतिदुरितमनया अंहतिस्त्यागरोगयोरितिहेम त्रयोदशनामानिदानस्य॥मृतार्थ मृतायइदं
॥तदह तच्चतदहश्च तस्याहरितिवा॥तदहेप्रेतदिनेऔर्ध्वदेहिकं देहादूर्ध्वंऊर्ध्वदेह ऊर्ध्वदेहेभव प्रेतमुद्दिश्यमरणदिनमारभ्यसपिंडीकरणपर्यंतंप्रत्यहंदीयमानस्यजलपिं
डादेरित्येक तत्रिषु ३०

( )

पितृदान पितृभ्योदान॥निवाप न्युप्यते निवपनवा द्वेनामनी सपिंडीकरणादूर्ध्वपित्रुद्देशेनदानस्य॥शास्त्रन शास्त्रविधानेन॥तत्कर्म नेपाकर्म॥श्राद्ध श्र
द्धा अस्ति यत्राश्रद्धेतिण॥अन्वाहार्य अनुआन्हीयते हृञ्हरणे॥मासिके मासेभव पिंडान्वाहार्यकश्राद्धकुर्यान्मासानुमासिकमितिमनुवचन॥
दूं पञ्चदशमुहूर्तात्मकस्यदिनस्याष्टमांश भाग कुतुप स्यात् कुत्सितंतपति तपसपाते यद्वा कुशुवनपति दिवसस्याष्टमेभागेमंदीभवतिभास्कर सकाल
ल कुतुपोज्ञेय पितृणादत्तमक्षय कुतुपोस्त्रियांद्वेहिन्नेयाधेछागजपावले कुशोदिनस्याष्टमांशोनास्त्रियेकुतुपोस्तुन इत्येक ३१ पर्येषणा परीष्टि परेर्वाइति

पितृदाननिवाप स्याछ्राद्धंतत्कर्मशास्त्रन अन्वाहार्यमासिकेशोऽष्टमोऽन्हः कुतुपोस्त्रिया ३१ पर्येषणापरीष्टिश्चा
न्वेषणाचगवेषणा सनिस्त्वध्येषणायाञ्चाभिशस्तिर्याचनार्थना ३२ षट्तुत्रिष्वर्घ्यमर्घार्थेपाद्यपादायवारिणि
क्रमादातिथ्यातिथेयेअतिथ्यर्थेऽत्रसाधुनि ३३ सुजभावेक्तिन् परीष्टि परिचर्यायामाकाभ्येः न्वेषणेस्त्रियामितिविश्व॥अन्वेषणा इषेर
नेछायस्येतिसुच्॥गवेषणा गवेषमार्गणेसुन् चत्वारिधर्मादन्वेषणस्यनामानि॥सनि षणुदानेस्क्॥तु अध्येषणा इषेर्युच् द्वेगुर्वाद्याराधनस्य॥याञ्चा याचृयाञ्चा
॥अभिशस्ति शसुस्तुतौयाचनेच अभिशस्ति पुनर्लोकापवादेपार्थितेपिचेतिहैम॥याचना॥अर्थना॥एतच्चतुष्टय अर्थयाञ्चायां॥आगतुपर्यंता षट्अर्घा
र्थजले॥अर्घ्य अर्घायइद॥पाद्य पादायइद॥पादार्घाभ्याचेतिताद्र्थ्येयत् एकेक॥आतिथ्य अतिथयेइद अतिथेर्न्यइतिताद्र्थ्येयत॥आतिथेय अतिथौसाधु
पथ्यतिथिइतिठञ् एकैक अत्रसाधुनिअतिथ्यर्थे एतानिनामानिभवंति ३३

आवेशिक. अवेशअगृहेभवः अध्यात्मादि वेशोवेश्यागृहेऽगृहे नैकग्रामिणमतिथिंविप्रंसांगतिथिंनथा ॥ आगंतुः आगच्छति ॥ अतिथिः पुल्लिंगे गृहागतेविप्रेएते
शब्दा भवंति अध्वनीनोऽतिथिर्ज्ञेयः अतिथिःकुशपुत्रेस्यात्सुमानागंतुकेपिच्चेतिविश्वमेदिन्यो दूराच्चोपगतंश्रांतंवैश्वदेवउपस्थिते अतिथिंतंविजानीया-
न्नातिथिःपूर्वमागतइतिव्यास.॥ प्राघुणिस्त्वतिथिर्द्वयोः त्रीणिगृहागतस्य तिथिपर्वोत्सवाःसर्वेत्यक्तायेनमहात्मना सोतिथिःसर्वभूतानांशेषानभ्यागता
न्विदुः॥ प्राघूर्णिकः प्राघुणिक.॥ अभ्युत्थानं तु गौरवं द्वेउत्थानपूर्वकसत्कारस्य ३४ पूजा पूजनं॥ नमस्या नमस्करणं॥ अपचितिः॥ सपर्या सपरपूजा
यां॥ अर्चा अर्चपूजायां॥ अर्हणा अर्हपूजायां एताःसमाः षट्पूजानामानि॥ वरिवस्या वरीवसशब्दः पूजार्थः क्यजंतादकारः॥ शुश्रूषा शुश्रूषणं श्रुश्र

**स्युरावेशिकआगंतुरतिथिर्नागृहागते प्राघूर्णिकःप्राघुणिकश्चाभ्युत्थानंतुगौरवं ३४ पूजानमस्यापचितिःसपर्या**
**चार्हणाःसमाः वरिवस्यातुशुश्रूषापरिचर्याप्युपासना ३५ व्रज्याटाटापर्यटनंचर्यात्वीर्यापथेस्थितिः उपस्पर्शस्त्वाचम**
**नमथमौनमभाषणं ३६**

वणे॥ परिचर्या परिचरणं॥ उपासना आसउपवेशने॥ उपासनशराभ्यासेप्युपास्तावासनेऽपिचेतिविश्वमेदिन्यौ चत्वारिसेव
या परिचर्यातुपसर्पेतिभागुरिः ३५ व्रज्या व्रजनं व्रजगतौ अटा अटनं॥ अटाट्या॥ पर्यटनं अटापर्यटनंभ्रमइतिरत्नकोश इतिचत्वारिपर्यटननामानि॥ चर्या गदमदेति
यत् ॥ तु ईर्या ईर्यते ज्ञायते ईरगतौ ण्यत् तस्या. पथाः ईर्यापथः ईर्या ॥ पथेस्थितिः ईर्यापथेध्यानाद्युपायेपरिव्राजकानांस्थितेरेकं॥ उपस्पर्श. उपस्पर्शनं स्पृशसंस्प
र्शे उपस्पर्श.स्पर्शमात्रेस्नानाचमनयोरपि॥ तु आचमन चमुअदने यद्वा उपस्पृश्यंतेरवान्यत्र आचम्यतेभोत्र द्वेनामानि॥ मौनं मुनेः कर्मभावोवा॥ अभाषणं भाषव्यक्ता
यांवाचि अभाषणस्य द्वे ३६

आनुपूर्वी पूर्वपूर्वमनुदृत्यनुपूर्वंभाव वर्णदृदादिभ्यश्चेतिष्यञ् षित्वान्ङीष् आनुपूर्वी स्त्रियावानपुंसकमानुपूर्वं ॥आवृत् आवर्तनं दृसुवर्तने संपदादि ॥परिपा दि
टी परिपाटन पटगतो पचनादचर् प्रवृत्यत्वात्सध्यभाव ॥अनुक्रम अनुक्रमण क्रमुपादविक्षेपे यमिनोदात्तोपदेशोतिनवृद्धि परिपाटीअनुक्रमइत्यत्रहिस्वत्तन
त्वात्यणप्न॥पर्याय पर्ययण पर्याय प्रकारेवसरेक्रमइतिविश्वमेदिन्यौ पचनामानिक्रमस्य॥अतिपात अक्रकम्यपतन पत्लृगतो॥पर्यय पर्ययण इणगतो॥
उपात्यय उपगतम्यातिक्रम्यायन त्रीणिक्रमोल्लंघनस्य ३७ नियम नियमन नियच्छंत्यत्रणायाचमतिज्ञानिश्चयव्रते॥ व्रत व्रीयते देव्रतमात्रस्य अस्त्रीपुनपु

आनुपूर्वीस्त्रियावावृत्परिपाटीअनुक्रम पर्यायश्चातिपातस्तुस्यात्पर्ययउपात्यय ३७ नियमोव्रतमस्त्रीतच्चोपवा
सादिपुण्यक औपवस्तंतूपवासोविवेक पृथगात्मता ३८ स्याद्ब्रह्मवर्चसंवृत्ताध्ययनर्द्धिरथाञ्जलि पाठेब्रह्माञ्ज
लि पाठविप्रुषोब्रह्मविंदव ३९ सकयो तच्चउपवासादि उपवास आदिर्यस्य कृच्छ्रचांद्रायणप्राजापत्यनक्तभोजनादितदुपवासादिव्रत पु
ण्यकमव एकमुपवासादिविहितव्रतस्य॥औपवस्तव उपवसन वसस्तंभे भावेक्तातात्मज्ञाद्यण् औपवस्तमितिपाठ तृजतानूलस्येदमित्यण्॥तु॥उपवास उ
पवसति उपवसन वसनिवासे देशो जनरहितस्य॥विवेक विवेचन विवेक स्याज्जलद्रोण्यापृथग्भावविचारयो ॥पृथगात्मता स्यात् पृथक् आत्मास्वरूप
स्थितस्यभाव प्रकृतिपुरुषादिभेदज्ञानस्यद्वेनामनी ३८ ब्रह्मवर्चसवृत्ताध्ययनर्द्धि स्यात् ब्रह्मण वेदस्यतपसोवावर्चं वृत्तसदाचारपालन अध्ययन गुरु ८
रवाद्वेदाक्षरग्रहणतयो ऋद्धि द्वेनामनी॥पाठे वेदपठनकालेय अजलि सब्रह्माञ्जलि ब्रह्मण अजलि पाठेवेदपठने येविप्रुष मुखान्निर्गताजलबिंदव
तेब्रह्मबिन्दव १०

ध्यानयोगासने ध्यानप्रत्ययैकतानता योगश्चित्तवृत्तिनिरोधना यद्वा ध्यानस्ययोगउपाय ध्यानमेवयोगोवा तस्यआसनंस्वस्तिकसिद्धपद्मादि ॥ ब्रह्मासन ब्रह्मण-संबं
धिआसनं एक एकतानेनमनसास्मरणध्यानमुच्यते चित्तवृत्तिनिरोधस्तुसद्भिर्योगइतिस्मृत ॥ कल्पेविधिक्रमौ कल्पतेनेन कृपूसामर्थ्ये कल्प शास्त्रेविधौन्यायेसंवतेब्र
ह्मणोदिने ॥ विधि. वेधन विधविधाने विधिर्नानियतौकालेविधानेपरमेष्ठिनि ॥ क्रम अयमिदनियोगशास्त्रस्य ॥ क्रमश्चानुक्रमेशक्तौकल्पेचाक्रमणेपिच ॥ यः प्रथमः कल्प.
आद्योविधि-समुख्य-स्यात् एकं ॥ ततः मुख्यात् अधम. गौण- अनुकल्प- स्यात् ४० संस्कारपूर्वश्रुतेर्ग्रहणं उपाकरणंस्यात् उपाक्रियतेऽनेन हृवेदपाठारंभविधिविशे
षस्य ॥ पादग्रहणं पादयोर्ग्रहण स्पर्श. ॥ अभिवादनं अभिमुखीकरणार्थवंदन यद्वा आभिमुख्येनवाद्यते आशीःकार्यतेऽनेन हृनामोच्चारणपूर्वकसंस्कृतप्रयोगे

**ध्यानयोगासनेब्रह्मासनंकल्पेविधिक्रमौ मुख्यःस्यात्प्रथमःकल्पोऽनुकल्पस्तुततोऽधमः ४० संस्कारपूर्वंग्रहणंस्या**
**दुपाकरणंश्रुतेः समेतुपादग्रहणमभिवादनमित्युभे ४१ भिक्षुःपरिव्राट्कर्मंदीपाराशर्यपिमस्करी तपस्वीताप**
**सःपारिकाङ्क्षीवाचंयमोमुनिः ४२**

णनमस्कारस्य ४१ भिक्षु. भिक्षणशीलः भिक्षयाज्ञ्वाया सनासांसभिक्षाउः ॥ परिव्राट् सर्वपरित्य
ज्यव्रजति व्रजगतौ क्विपुदीर्घश्च पदांतविषयेषत्वंर परौव्रजे ष. पदांतेइति ॥ कर्मंदी कर्मंदेनप्रोक्तं भिक्षुसूत्रंतदधीते कर्मंदकृशाश्वादिनिः ॥ पाराशरी पाराशर्येण
प्रोक्तंसूत्रंतदधीते पाराशर्यैतिइनि. ॥ मस्करी मस्कगतौ मस्करोज्ञानंगतिर्वास्यास्ति यद्वा मस्करोवेणुदंडोयस्यास्ति इतिपंचसन्यासिन ॥ तपस्वी तपोस्यास्ति
तपस्वीतापसेचानुकंप्येनिश्चथयोषिति तापस पूर्ववत् अण्प्रत्यय. ॥ पारिकाङ्क्षी परिकांक्षितुंशीलमस्य काक्षिकामेपरिवर्जने यद्वा ब्रह्मज्ञानकांक्षते त्रीणितपस्वि
नः ॥ वाचंयम. वाचयच्छति यमउपरमे वानियमोततेडनिरवश् वाचंयमपुरदरो ॥ मुनि. मन्यते मनज्ञाने मुनिःपुसिवसिष्ठादौवंगसेननरोजिने हृमौनव्रतिन ४२.

तप क्लेशसह तपस क्लेश सहते षह्मर्षणे तप क्लेशस्यसह अच्॥दान्त दाम्यतिस्म दमुउपशमने गत्यर्थेतिक्त दान्तस्तुदमितेपिस्यात्तप क्लेशसहेपिच॥वार्णि
नः॥ब्रह्मचारिण हेआश्रमी वर्णोस्यास्तीति मत्वर्थइतितात्पर्य॥ब्रह्मचारिण ब्रह्मवेदाध्ययनव्रततच्चरतितच्छीलोवा व्रतस्रूपीतिणाणिनि ॥ऋषय ऋषति जान
ति ऋषीगतो ऋषिर्वेदवसिष्ठादेर्दीधितौन्पुमानय॥सत्यवचस सत्यवचोयेषाते हेसामान्यर्षिनामनी॥स्नातकस्तु स्नातिस्म ष्णाशौचे कःसंज्ञायाकम्
॥आप्लव आप्लवते प्लुङ् गतौ आप्लवश्चासौव्रती हेसमाप्तवेदव्रतस्यअन्याश्रमगतस्य॥गुरवेतुवरदत्वास्नायाद्गातदनुज्ञया वेदव्रतानिवापारनीत्वाप्युभयमे-
वच ४३ येनिर्जितेंद्रियग्रामा इंद्रियाणाग्राम निर्जित इंद्रियग्रामोयैस्ते॥यतिन यमुउपरमे भावेक्तेअतइनि ॥यतय यतते यतीप्रयत्ने एतेशब्दा त्रय नि-

तप क्लेशसहोदान्तावर्णिनोब्रह्मचारिण ऋषय सत्यवचस स्नातकस्त्वाप्लवोव्रती ४३ येनिर्जितेंद्रियग्रामायतिनोयतय
श्चत य स्थंडिलेव्रतवशाच्छेतेस्थंडिलशाय्यसौ ४४ स्थाडिलश्चाथविरजस्तमसस्तुह्रयातिगा पवित्र प्रयत पूत
पारवडा सर्वलिंगिन ४५

र्जितसर्वेंद्रियस्य॥य व्रतवशात्स्थंडिलेशाते असौस्थंडिलशायि हेअनाश्रितभूमिशायनव्रतिन ४४ चपरस्थाडि
ल स्थंडिलादित्यण्॥विरजस्तमस विगतेरजस्तमसीयेभ्य ॥हृयातिगा हृयअतिगच्छति हेनिरस्तरजस्तमोगुणाना॥पवित्र पवते पुनातिवा पूङ्पवने
पवित्रघर्षणेकुशो ताम्रेपयसिनक्लीबमभ्येस्यादभिधेयवत्॥प्रयत प्रयच्छतिस्म यद्वा प्रयतते यतीप्रयत्ने॥पूत पवतेस्म॥पूतान्त्रिषुपवित्रेचशाटितेबहुलीकृ-
नामत्रय॥पारवडा पारखडपावि रवडिभेदने पालनाच्चत्रयीधर्म पाशब्देननिगद्यते तरवडयविनेतस्मात्पारवडास्तेनहेतुना॥सर्वलिंगिन सर्वाणिचतानि-
लिंगानिच सर्वेषालिंगानिवासन्त्येषा ४५

व्रतेब्रह्मचर्ये आषाढः आषाढीपूर्णिमाप्रयोजनमस्य आषाढोव्रतिनांदंडेमासेमलयपर्वते॥पालाशः पलाशस्यविकारः पालाशादिभ्योवेत्यण्॥दंडः॥ रं भस्तुवैणवः रंभशब्दोवेणुवाचकः तस्यविकारः रंभाकदल्यप्सरसोर्नाविणौवानरांतरे इतिविश्वहेमचंद्रौ वैणवइत्यपिएकं द्वेनामनीत्यर्थः अस्त्री स्त्रीभि न्नःशब्दः॥कमंडलुः कस्यप्रजापतेः जलस्यवामंडः सारः तंलातिलभते मडिभूषायां कस्यमंडभूषालातिवा॥कुंडीकुणशब्दे कुंडमश्यालयेमानभेदेदेव- जलाशये कुंडीकमंडलौजारपतिवल्लीसुतेपुमान् द्वेव्रतिनाजलभाजनस्य॥व्रतिनांयदासनं सावृसीव्रुवंतःसीदंत्यस्यां पृषोदरादिः एकंब्रह्मचर्याद्यासन

पालाशोदंडआषाढोव्रतेरंभस्तुवैणवः अस्त्रीकमंडलुःकुंडीव्रतिनामासनंवृसी ४६ अजिनंचर्मकृत्तिःस्त्रीभैक्षंभिक्षा कदंबकं स्वाध्यायःस्याज्जपःसुत्याऽभिषवःसवनंचसा ४७ सर्वैनसामपध्वंसीजप्योंत्वघमर्षणं दर्शश्चपौर्णमासश्च यागौपक्षांतयोःपृथक् ४८

स्य ४६ अजिनं अजति अज्यतेवा अजगतौ॥चर्म चरति चर्यतेवा चरगतौ॥कृत्तिः कृत्यते कृतीछेदने कृत्तिश्च र्मत्वचोभूर्जेकृत्तिकायांद्वयंस्त्रियां इतित्रीणिनामानि॥भैक्षं भिक्षाणांसमूहः भिक्षादिभ्योण् तदेवभिक्षाकदंबकं॥स्वाध्यायः सुअतीवआदृत्या अध्यय नं घञ् जपःस्यात् द्वेवेदाध्ययनस्य॥अभिषवः सवनं सासुत्या क्यप् सवनत्वध्वरेस्नानेसोमनिर्दलनेपिच त्रीणिसोमलताकंडनस्य ४७ सर्वैनसां सर्वाणि एनांसिमानसादिपापानिध्वंसयितुंशीलंयस्यतदपध्वंसि॥जप्यं जप्यते तज्जप्यं ऋगादितदघमर्षणं अघंमर्षयति मृषुसहने सहनमभिभवः यद्वा मृष्यते पक्षांतयोः अमावास्यापौर्णमास्योः पृथग्भिन्नौयागौदर्शश्चपरपौर्णमासश्च एकैकं ४८

शरीरसाधनापेक्षशरीरमात्रेणसाध्ययतनित्यकर्मतत्तयम यन्छुतिअनेन यमोन्यलिगोयमजेनाक्रैश्रामनेशानो शरीरसाधनापेक्षनित्यकर्मणिसयमे शरीरमात्रेण-
साध्ययावज्जीवककार्य यत्कर्मअनित्य ननुयावज्जीवकर्तव्य तन्तु आगन्तुसाधन आगन्तुभि कदाचित्के कामनयासमयविशेषादिभि साधने साध्य॥नियमस्तु उ
पवासस्नानजपादि शौचसतोषतप स्वाध्यायेश्वरप्रणिधाः नियमा ४९ यमस्तु अहिंसासत्यमस्तेयमिति दक्षिणेकरेमोन्धृतेसतियज्ञसूत्रतदुपवीतस्यात्॥मो
धृतेवहिर्निष्कृतेसति ब्रह्मसूत्र यज्ञसूत्र यज्ञार्थधृतसूत्रंउपवीत उपवीयतेस्म अजगतिक्षेपणयो ॥अन्यस्मिन्करेमो धृतेसतिप्राचीनावीतस्यात् अन्यस्मिन्क

शरीरसाधनापेक्षनित्ययत्कर्मतद्यम नियमस्तु सयत्कर्मनित्यमागन्तुसाधन ४९ "क्षेपक क्षौरन्तुभद्राकरणमुण्डनवप
नत्रिषु" उपवीतब्रह्मसूत्रमोधृतंदक्षिणेकरे प्राचीनावीतमन्यस्मिन्निवीतकण्ठलम्बित ५० अंगुल्यग्रेतीर्थदैवस्वल्पांगुल्योर्मूले
काय मध्येंगुष्ठांगुल्यो पित्र्यमूलेत्वंगुष्ठस्यब्राह्म ५१ रेवामेकरे॥प्राचीनावीत प्राचीनदक्षिणआवीयतेस्म विपरीतधृतयज्ञोपवीतस्यैका॥क
ठलम्बित कण्ठलम्बितसरलभावेनसन्यस्तनिवीतस्यात् निअधोभागेवीतगमनमस्य करद्वयेबहिष्कृतेसतिऋजुभावेनस्थापितयज्ञसूत्रस्यनामैक ५० अंगुल्यग्रे अं
गुलीनामग्रेदैवतीर्थस्यात् देवदेवानामिद अत दैवतीर्थेनदेवतास्तर्पयेत् एक॥स्वल्पांगुल्यो अनामिकाकनिष्ठिकयो मूलेभागेकायस्यात् क-प्रजापतिर्देवता॥स्य
काय कर्देवतेमृतोंसिघेवस्वभावयो मनुतीर्थेकायस्यात् एक प्राजापत्यमित्यर्थ ॥अंगुष्ठांगुल्योर्मध्ये अंगुष्ठतर्जन्यो मध्यभागे पित्र्य पितरोदेवतास्य य-
द्वा पितृणामिद॥अंगुष्ठस्यमूलब्राह्मतीर्थ ब्रह्मादेवतास्य यदाह याज्ञवल्क्य कनिष्ठातर्जन्यंगुष्ठमूलान्यग्रकरस्यच प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् एकैक

ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपिस्यात् ब्रह्मभूयं ब्रह्मणःभावः॥ ब्रह्मसायुज्यं ब्रह्मणासहयुनक्ति युजिर्योगे॥ तद्वदेव देवभूयादिकं॥ सांतपनादिकं कृच्छ्र
स्यात् सम्यक्तपन संतपतिवा प्रज्ञाद्यण्॥ गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकं एकरात्रोपवासश्चकृच्छ्रंसांतपनस्मृतं आदिशब्देनचांद्रायणप्राजापत्यपराकादिग्रहण ५२
सन्यासवति सम्यक्न्यासः अस्त्यस्मिन् अनशनेभोजनत्यागेप्राय. इण्गतौ प्रायः इत्येकं अदंतःपुल्लिंगे॥ अथवीरहा वीरः अग्निं तंहंति॥ नष्टाग्निः नष्टोऽग्निर्यस्य द्वे प्रमादा
दिनायस्य अग्निहोत्रिणोऽग्निर्नष्ट ॥ कुहना लोभात् कुहविस्मापने लोभात्परद्रव्याभिलाषात मिथ्येर्यापथकल्पना पथस्यआचारभेदस्यकल्पनासाकुहना इत्येकंनामदं

स्या ब्रह्मभूयंब्रह्मत्वंब्रह्मसायुज्यमित्यपि देवभूयादिकंतद्वत्कृच्छ्रंसांतपनादिकं ५२ सन्यासवत्यनशनेपुमान्प्रायोथवीरहा ॥
नष्टाग्निःकुहनालोभान्मिथ्येर्यापथकल्पना ५३ व्रात्यःसंस्कारहीनःस्यादस्वाध्यायोनिराकृतिः धर्मध्वजीलिंगवृत्तिरवकीर्णीक्षत
व्रतः ५४ सुप्तेयस्मिन्नस्तमेतिसुप्तेयस्मिन्नुदेतिच अंशुमानभिनिर्मुक्ताभ्युदितौचयथाक्रमं ५५ मौनकृतध्यानमौनादे. अथवा अर्थलिप्स

याधर्मोश्रयणस्य ५३ संस्कारहीन. व्रात्य.स्यात् संस्कारैर्हीन. गर्भाधानादिभि शून्य॥ व्रात्यः हिंसाजीवीवृत्ति. सएवव्रात. तमर्हतिति एकं॥ अस्वाध्याय. नस्वाध्या
योवेदाध्ययनयस्य॥ निराकृतिः आकृतेर्निर्गतः अध्ययनजेशाया निर्गत इदनामवेदाध्ययनरहितस्य॥ धर्मध्वजी धर्मस्यध्वजः चिन्हयस्य धर्मोध्वजइव धर्मो
ध्वजोयस्यास्ति॥ लिंगवृत्तिः लिंगमाश्रमादिचिन्हधारणवृत्ति र्जीविका हेतु र्यस्य द्वे भिक्षार्थजटाधारिण.॥ अवकीर्णीत्क्षविक्षेपेहिंसायांवा॥ अवकीर्णंअस्ति
यस्य॥ क्षतव्रतः क्षतंव्रतमस्य द्वे खंडितब्रह्मचर्यादे ५४ यस्मिन्सुप्ते अंशुमानस्तमेति सोभिनिर्मुक्त ॥ अभिसर्वसायंतनंकर्मनिश्चयेनमुक्तंयेन यस्मिन्सुप्ते
उदेतिसोभ्युदित अभितःउदतिशायेनइतंप्रातस्तनकर्मास्य ५५.

को ज्येष्ठेभ्रातरि अकृतदारपरिग्रहेसति कृतदारपरिग्रहः कनिष्ठः परिवेत्तास्यात् परिवेत्ता परिविदति ज्येष्ठंपरित्यज्य भार्यांलभते विद्लाभे एकं ज्येष्ठेविवाहग्रहि
नि कृतदारपरिग्रहणस्यकनिष्ठस्य ॥तस्यपरिवेत्तु ज्यायान् ज्येष्ठः परिवित्तिः स्यात् परिवर्जनविदति लभते विवाहोपयमौसमौ ५६ तथापरिणय उद्वाह उपय
म पाणिपीडन इतिषट्विवाहस्य ॥ व्यवाय ग्राम्यधर्म मैथुन निधुवन रत पञ्चमैथुनस्य ॥ इण्गतौ ॥ ग्राम्यधर्म ग्रामेभवा ग्राम्या ग्रामाणाजना ॥धर्म॥ ॥मै
थुन मिथुनस्यकर्म ॥निधुवन नितराधुवन हस्तपादादिचालन ॥ रत रमण ५७ धर्मकामार्थैः त्रिवर्गः स्यात् धर्मश्चवेदप्रतिपाद्ययज्ञादि कामश्चयथाविधि-

परिवेत्ताऽनुजोऽनूढेज्येष्ठेदारपरिग्रहात् परिवित्तिस्तुतज्ज्यायान्विवाहोपयमौसमौ ५६ तथापरिणयोद्वाहोपयामा
पाणिपीडनं व्यवायोग्राम्यधर्मोमैथुनंनिधुवनरतं ५७ त्रिवर्गोधर्मकामार्थैश्चतुर्वर्गःसमोक्षकैः सबलैस्तैश्चतुर्भद्रंज
न्याः स्निग्धावरस्यये ५८ इतिब्रह्मवर्गः मूर्धाभिषिक्तोराजन्योबाहुजःक्षत्रियोविराट्

-सेवन अर्थश्चधन त्रिवर्गः त्रयाणांवर्ग एकः॥ समोक्षैः चतुर्वर्ग उपलक्षित ॥ सबलैः बलेनसहितैश्चतुर्भद्र चत्वारिभद्राणियेषांमिलितानि एकं॥ वर
स्यजामातुः स्निग्धास्तत्पक्षाः वयस्यादयः जन्याः जनीवधूवहन्ति ५८ इतिब्रह्मवर्गविवरणसमाप्तः मूर्धाभिषिक्तः राज्यदानसमयेमूर्धन्यभिषिच्यते मूर्धा
भिषिक्तः॥राजन्य राज्ञोपत्यं यद्वा राजति राजृदीप्तौ ॥ बाहुज बाहुभ्याज्जात बाहुजः क्षत्रियेवीरेस्वयजातनिवेः पिबतिविश्वमेदिन्यौ ॥ क्षत्रिय क्षतात्
दसवरणे सौत्रः क्षतात्त्रायते क्षत्रस्यापत्यंवा ॥विराट् विशेषेणराजते पञ्चक्षत्रियस्य ॥

राजा राट् रंजयति राजा राजतेराट् राजाप्रभौचनृपतौक्षत्रियेरजनीपतौ क्षत्रेशाक्रेचपुंसिस्यात् इत्य० ॥पार्थिवः पृथिव्याःईश्वरः पार्थिवोनृपतौभूमेविकारे५॥ क्ष्मा
नीतिच ॥क्ष्माभृत् क्ष्माबिभर्ति क्ष्माभुक् क्ष्मांभुनक्ति ॥नृपः नॄन्पाति पारक्षणे॥भूपः भुवंपाति॥महीक्षित् महींक्षिपति क्षिनिवासगत्योः मत्यांक्षयतिवा क्षि-
क्षयैश्वर्ययोः ससराज्ञः १ समंतायाः स्वदेशाव्यवहितभूमेरिमेराजानः॥ प्रणताशेषसामंतः प्रणताःअशेषाःसामंताः स्वदेशानंतरराजानोयस्यसराजा अधीश्व
र स्यात् अधिकईश्वरः एकंसर्वसन्निहितनृपवशकारिणः॥चक्रवर्ती चक्रेभूमंडलेराजमंडलेवावर्तितुंशीलमस्य चक्रंगणेचक्रवाकेइतिविश्वः यद्वा चक्रंसे-

## राजाराट्पार्थिवःक्ष्माभृन्नृपभूपमहीक्षितः १ राजातुप्रणताशेषसामंतःस्यादधीश्वरः चक्रवर्तीसार्वभौमोनृपोन्योमं डलेश्वरः २ येनेष्टराजसूयेनमंडलस्येश्वरश्चयः शास्तियश्चाज्ञयाराज्ञःससम्राडथराजकं ३ राजन्यकंचनृपति क्षत्रियाणांगणेक्रमात् मंत्रीधीसचिवोमात्योन्येकर्मसचिवास्ततः ४

न्यंवर्तयितुंसर्वभूमौचालयितुंशीलमस्यसः॥सार्वभौमः सर्व
भूमेरीश्वरः सार्वभौमस्तुदिग्गजेसर्वपृथ्वीपतावपीतिमेदिनी हेसमुद्रपर्यंतभूमीश्वरस्य॥अन्य नृपःमंडलेश्वरःस्यात् मंडलस्यभूम्येकदेशस्येश्वरः स्यान्मंडलं
द्वादशराजकेचदेशेचबिंबेचकदंबकेचेतिविश्वःएकं २ येनराजसूयाख्ययज्ञविशेषेणइष्टं द्वादशमंडलस्येश्वरोऽपिसःसम्राट् सम्यक्राजतेसौसम्राट्॥चपरंय
आज्ञयाराज्ञःशास्ति॥अथराजकं राज्ञांसमूहः नृपतीनांगणे॥राजन्यकं क्षत्रियाणांगणे इत्येकंनाम ३ मंत्री मंत्रोगुप्तभाषणमस्यास्ति मंत्रिगुप्तभाषणे॥धीस
चिवः धियासचिवः धीप्रधानःसचिवोवा॥अमात्य अमासहभवेपवाभव एतत्त्रयंराज्ञःसचिवस्य ततःधीसचिवादन्येकर्मसचिवाः कर्मसुसचिवाः इत्येकं ४

प्रधानस्यान्महामात्रेप्रकृतौपर
महामात्रा महतीमात्रायेषांते मात्राकर्णविभूषायांवित्तेमानेपरिच्छदे प्रधानानिप्रकर्षेणधीयन्त डुधाञ्धारणपोषणयो महामात्र समृद्धेचामात्येहस्तिपकाधिपे हे प्रधा
मात्यानि प्रजायामपिनपुंसकेबमेकत्वेनूत्तमेसर्वेतिक्लीबत्व पुल्लिंगोपि॥महामात्र प्रधान स्यादितिपुरुषकांडे महामात्र तेषांद्रष्टरिनिर्णेतरि॥विविच्य
नस्य॥पुरोधा पुर अग्रेधीयते॥पुरोहित पुर अग्रेहितयस्मात्॥व्यवहाराणां ऋणादीन्यष्टादशविवादस्थानानिव्यवहारा विषादानुगतपृच्छापूर्ववाक्यप्रयत्नत विचारयति
पृच्छतिप्राट्॥विविच्यतेसोविवाक प्राट्चविवाकश्चप्राड्विवाको अस्यस्त प्रश्नविचारयो कुशलइत्यर्थ हेधर्माध्यक्षस्य ५ प्रतीहार प्र
येनासौप्राड्विपाकस्ततस्मृत॥अक्षदर्शक अक्षाणांव्यवहाराणांदर्शक अक्ष कर्षेतुषेचकेशकटव्यवहारयोरितिविश्व प्रतीहारेद्वारपालद्वास्थद्वास्थि

महामात्रा प्रधानानिपुरोधास्तुपुरोहित द्रष्टरिव्यवहाराणांप्राड्विवाकाक्षदर्शकौ ५
तदर्शका रक्षिवर्गस्त्वनीकस्थोऽथाध्यक्षाधिकृतौसमौ ६

तीहारोजननिवारणमस्त्यस्य यद्वा राज्ञोभिमुख्यजनान्प्रतिहर
ति वहि प्रापयति॥द्वारपाल द्वारपालयति॥द्वास्थ द्वारितिष्ठति॥द्वास्थितदर्शक द्वारिस्थितस्यदर्शक पश्चाद्द्वद्व पञ्चद्वारपालस्य॥रक्षिवर्गस्तु अव
श्यरक्षति रक्षपालने आवश्यकेइतिणिनि रक्षिणांवर्ग॥अनीकस्थ अनीकेनअनीकेवातिष्ठति सपौतिक अनीकस्थोरणगतेहस्तिशिक्षाविचक्षणे
राजरक्षिणिचिन्हेचवीरकर्दमकेपिचेतिविश्वमेदिन्यौ हेरक्षकगणस्य॥अथअध्यक्षाधिकृतौ अक्षव्यवहार अधिगत अध्यक्ष यद्वा अध्यक्षति अ
क्ष्णुव्याप्तौ अध्यक्षोधिकृतेप्रोक्त प्रत्यक्षेत्वभिधेयवत्॥अधिकृत अधिउपरिकृत अधिक कृतइतिवा समावुभौ हे व्यापारितस्य ६

एकस्मिन्ग्रामे अधिकृत· स्थायुक स्थातुंशीलमस्य एकएकग्रामाधिकृतस्य॥ भूरिषुबहुलेषुग्रामेषुअधिकृतः गोप· गोपायति गुपूरक्षणे गोपोगोपालकेगोष्ठाध्यक्षेपृथ्वीपतावपि ग्रामस्याधिकृतेपुंसिसाभिवारव्यौषधौस्त्रियाइत्य०॥ एकबहुग्रामाधिकृतस्या॥ मौरिक भूरीणिस्वर्णेनियुक्त· मौरिकः॥ कनकाध्यक्ष· कनकस्यअध्यक्ष· द्वे स्वर्णाधिकृतस्य॥ रूप्याध्यक्षस्तु रूप्येअध्यक्ष॥ नैष्किक. निष्केहेम्निनियुक्त नैष्किकोरजताध्यक्षइतिरभस. टंकटकादिशालायांनियुक्तस्य ७ अंत पुरेतु अधिकृतः जन· अंतर्वेशिकः स्यात् अंतर्वेशेनियुक्त· यद्वा अंतर्वेशोयस्यास्ति एक मत· पुराधिकृतजनस्य॥ सौविदल्लाः सुष्ठुविदंतं विद्वांसमपिलातिवशवर्तिनंकुर्वन्तिसुविदल्लाः तएवसौविदल्ला॥ कंचुकिन· कंचुकः उपचोलः अस्तियेषांते॥ स्थापत्या तिष्ठन्त्येषुपुरुषा स्था घञर्थकेरूप स्थानाद्दाराणांपतयः तएवपालका ते

स्थायुकोधिकृतोग्रामेगोपोग्रामेषुभूरिषु मौरिकःकनकाध्यक्षोरूप्याध्यक्षस्तुनैष्किकः ७ अंतःपुरेत्वधिकृतःस्यादंतर्वेशिकोजनः सौविदल्लाःकंचुकिनःस्थापत्याःसौविदाश्चते ८ षंढोवर्षवरस्तुल्योसेवकार्थ्यनुजीविनः

सौविदाः सुविदाएव यद्वा सुवित्सुज्ञानमस्तियेषांते यद्वा सुविदः चतुरस्त्रिय. तासामिमेरक्षका चत्वारिराज्ञास्त्र्यगारेवहिरक्षाकृतस्य ८ शंढः शाम्यति शिश्नाभावात् शमुउपशमे शढः क्लीबस्तुकंचुकीइतिरभस. शंढःस्यात्पुंसिगोपतौ आकुधांडेवृषवरेतृतीयप्रकृतावपि॥ वर्षवर· वृणोति वरनिवा वृञ्वरणे वरआवरणेवा वर्षस्यरेतः पातस्यवरः येत्वल्पसत्वाः प्रथमाःक्लीबाश्चस्त्रीस्वभाविनः जात्यानदुष्टा· कार्येषुतेवैवर्षवराःस्मृता· द्वेनपुंसकस्य॥ सेवकार्थ्यनुजीविन॥ सेवक सेवते षेवृसेचने सेवकस्तुप्रवासेनावान्यालिंगोनुजीविनि॥ अर्थी अर्थःसन्निहितोस्यास्ति अर्थीपुमान्याचकेस्यात्तसेवकेचविवादिनि॥ अनुजीवी अनुजीवितुंशीलमस्य त्रीणिसेवकस्य॥

ते विषयानंतर विषयात्स्वदेशादनंतरोऽव्यवहितोराजा॥शत्रु शातयति शद्लृशातने अत शत्रो परराज्ञांतरेणव्यवहितोराजामित्रस्यात् मेद्यति ञिमिदा स्नेहने मित्रमुत्तदिसहुणे सूर्येपुंसिस्त्रियागाधद्रव्येदैत्यांतरेसुमान् एक १ परतर उदासीन स्यात् अतिशायित पर शत्रुमित्राभ्यापर राजा उदासीन उदास्ते आसउपवेशने एकशत्रुमित्राभ्यापरस्यराज्ञ ॥पृष्ठतस्तःपार्ष्णिग्राह पार्ष्णिपश्चात्पदगृण्हाति सैन्यपृष्ठेपुमान्पार्ष्णि पश्चात्पदजिगीषयोरितिविश्व राज्ञिशत्रुजयार्थपुरतोगतेयस्तद्राष्ट्रजिघृक्षतिसपार्ष्णिग्राह एकजिगीषो पृष्ठभागस्थितस्यराज्ञ ॥रिपु रपतिदोष रपव्यक्तवाचायावाचि॥वैरी वैरस्य कर्मभावोवा वैरमैथुनीतितिनिर्देशादण् वैरमस्यास्तीति,सपत्न सपत्नीवान्यसपत्नइतिनिर्देशादकारः॥अरि इयर्तिविरोध ऋगतौ॥द्विषन् द्वेष्टि द्विषअप्री

**विषयानंतरोराजाशत्रुर्मित्रमत पर १ उदासीन परतर पार्ष्णिग्राहस्तुपृष्ठत रिपौवैरिसपत्नारिद्विषद्द्वेषणदुर्हृद**
**१० द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रव अभिघातिपरारातिप्रत्यर्थिपरिपंथिन ११**

तौ॥द्वेषण द्वेषशील क्रुधमडार्थेभ्येतिसुन्॥दुर्हृत् दुष्टहृदयमस्य॥द्विट् द्वेष्टि॥विपक्ष विरुद्ध पक्षोऽस्य पक्षामासार्धकेपार्श्वेग्रहेसाध्यविरोधयो॥ अहित नहितमस्मात्॥अमित्र अमतिगच्छति अमगतौरोगेवा इत्रन्प्रत्यय ॥दस्यु दस्यति दसुउपक्षये युच्प्रत्ययेबाहुलकादनादेशाभाव ॥शत्रु अभिघाति अभिहंतुशील द्वेष्योभिधातिरमित्रइतिरत्नकोश ॥पर अरातिः नरातिरासुरव रादाने क्तिन्॥प्रत्यर्थी प्रतिकूलमर्थयितुशील अर्थयाच्ञा या॥पंथी दोषाख्यानमथयितुशील पथिगतौ॥परिशब्देनप्रकृतेदोषाख्यानेनिरसने॥पूजाख्यास्योश्चभूषणे एकोनविंशतिनामानिशत्रो ११

वयस्यः वयसातुल्य ॥ स्निग्धः स्निह्यति ष्णिह्प्रीतौ वर्तमानेक्तः ॥ सवयाः समानंवयोऽस्य त्रीणितुल्यवयसः ॥ अथमित्र मेद्यति ञिमिदास्नेहे ॥ सखा समानः ख्यायतेलोके ॥ सुहृत् शोभनंहृदयंयस्य इतिमित्रनामानित्रीणि ॥ सख्यं सख्युर्भाव कर्मवासख्युर्य ॥ सासपदीन सप्तपदैरवाप्यते स्यात् द्वेमित्रताया नामनी ॥ अनुरोधः रुधिर्आवरणे ॥ अनुवर्तनं अनुगम्यवर्तनंचित्ताराधन द्वेआराध्यादेरिष्टसंपादनस्य १२ यथार्हवर्णः अर्हति अर्हपूजायां योयोर्हो यथार्हवर्णोरूपमस्य वर्णःस्याद्वदरूपयोरितिधरणि ॥ प्रणिधि. प्रकर्षेणनिधीयते प्रणिधिर्नाखलेचरे ॥ अपसर्पः अपसर्पति सृप्लृगतौ ॥ चर. चरति

वयस्यःस्निग्धःसवयाअथमित्रंसखासुहृत् सख्यंसाप्तपदीनंस्यादनुरोधोनुवर्तनं १२ यथार्हवर्णःप्रणिधिरपसर्प श्चरःस्पशः चारश्चगूढपुरुषश्चाप्तप्रत्ययितौसमौ १३ सांवत्सरोज्योतिषिकोदैवज्ञगणकावपि स्युर्मौहूर्तिकमौहूर्त ज्ञानिकार्तांतिकाअपि १४

चरगतौ चरोक्षद्यूतभेदेचप्योंमेचारेचसेवने स्पशः स्पृशति स्पशबाधनस्पर्शनयोः स्पशःस्यात्संपरायेचप्रणिधावपिपुंस्ययं ॥ चारः चार. प्रियालवृक्षेस्यात्गतोबंधापसर्पयोरित्यकक्तत्वात् ॥ गूढपुरुषः गूढश्चासौपुरुषश्च ॥ आप्तः आप्यतेस्म आप्लृव्याप्तौ ॥ प्रत्ययितः प्रत्ययोविश्वासःसंजातोऽस्य प्रत्ययःशपथरंध्रेविश्वासाचारहेतुष्वितिविश्वः द्वेनामनीविश्वासाधारस्य ॥ समौतुल्यौ १३ सांवत्सरः संवत्सरंवेत्ति ॥ ज्योतिषिकः ज्योतिषमधीतेवेदवा ॥ दैवज्ञगणकौ दैवंप्राकृतंशुभाशुभंकर्मजानातिगणयति गणसंख्याने ॥ मौहूर्तिकः मुहूर्तअधीते वेदवा ॥ मौहूर्तः पूर्ववत् ॥ ज्ञानी ॥ कार्तांतिकः कृतांतंवेत्ति ज्योतिषिकस्याष्टौनामानि १४

।न्त्रिक तन्त्रसिद्धान्तमधीते वेदवा ॥ ज्ञातसिद्धान्त ज्ञात सिद्धान्तोयेन द्वेनामनी तत्त्वार्थज्ञातृ ॥ सत्री सत्रमस्यास्ति सत्रमाछादनेयज्ञेसदादानेवनैतवेद
।विश्व ॥ गृहपति गृहस्यपति द्वेसदान्नादिदानकर्तुर्गृहस्यस्य ॥ लिपिकर लिपिकरोति टप्रत्यय ॥ लिविकरोपि तथैव ॥ अक्षरचण अक्षरैर्वित्त ॥ अक्षरच
तथैव उभयत्रापितेनवित्तइति चञ्चुप्चणपौ एतानिनामानिलेखके १५ लिखति लिखअक्षरविन्यासे अक्षराणांविन्यास लिखितञ्चअक्षरविन्यासश्च
यो समाहार ॥ लिपि लिप्यते लिपउपलेपे ॥ लिवि उभेस्त्रियौ चत्वारिलिखिताक्षरस्य ॥ संदेशहर दूत स्यात् संदेशानिरूपणहरति दूत दवति दुगतौ य द्वा

तान्त्रिकोज्ञातसिद्धान्तःसत्रीगृहपतिःसमौ लिपिकरोऽक्षरचणोऽक्षरचुञ्चुश्चलेखके १५ लिखिताक्षरविन्यासेलिपिर्लिवि
रुभेस्त्रियौ स्यात्संदेशहरोदूतोदूत्यतद्भावकर्मणि १६ अध्वनीनोऽध्वगोऽध्वन्य पाथ पथिकइत्यपि स्वाम्यमात्यसुहृत्कोश
राष्ट्रदुर्गबलानिच १७ राज्याङ्गानिप्रकृतय पौराणांश्रेणयोऽपिच दूयत दूङ् परितापे द्वे ॥ तद्भावकर्मणि तस्यभाव कर्मवादूत्य १६ अध्वनी
अध्वानअलगच्छति ॥ अध्वग अध्वानगच्छति डप्रत्यय ॥ अध्वन्य अध्वानगच्छति यत्प्रत्यय ॥ पाथ पथानगच्छति ॥ पथिक पूर्ववत् पञ्चपाथस्य ॥ स्वा-
। राजा ॥ अमात्य मंत्री ॥ सुहृत् मित्र ॥ कोशोभाण्डागार ॥ राष्ट्रदेश ॥ दुर्गाणि पर्वता ॥ बल सैन्य १७ राज्याङ्गानि राज्यस्यराजकर्मणोऽङ्गानिसाधनानि ॥ प्रकृतय
कृष्टराज्यकुर्वन्ति ॥ पौराणांश्रेणय पौराणानागराणांश्रेणय श्रयतिश्रयतेवा ॥ कामदक ॥ स्वाम्यमात्यश्चराष्ट्रञ्चदुर्गकोशोबलसुहृत् परस्परोपकारीदंसप्ताङ्गराज्य
न्यते ॥ पौरश्रेणिभि सहाष्टाङ्गमपिराज्यमितिदर्शित ॥ अमात्याश्चतथापौर ॥ सद्भि प्रकृतयःस्मृता इतिपौराणांश्रेणयोपिप्रकृतय स्यु ॥

।द्वे क

९

संधिःसंधानं द्रव्यादिनाशत्रूणांप्रत्युत्पादनं ॥नापुल्लिंगः ॥विग्रहः परराष्ट्रदाहलुंठनादिग्रहणं ॥यान शत्रुंप्रतिविजिगीषोर्गमनं ॥आसन आसउपवेशने साम-
र्थ्याभावेसतिकालंप्रतीक्ष्यदुर्गादिकनिर्मायतत्रावस्थानमासन ॥द्वैधबलिनासहसंधि·अबलेनसहविग्रहः इतिप्रकारद्वयंद्वैधं ॥आश्रयः आश्रयण श्रिञ्सेवाया
शत्रुणापीड्यमानस्यबलवद्भूपालाश्रयणं आश्रयः १८ एतेषट्गुणा· एतेसध्यादय· षड्गुणशब्दवाच्याः प्रभावोत्साहमंत्रजा· तिस्र.शक्तय.स्युः शक्यतेजेतुम
नया ॥प्रभावः प्रभवत्यनेन ॥तत्रकोशदंडजतेजः प्रभुशक्तिः॥उत्साहः उत्सहंतेनेनेति षहमर्षणे बलादिनोन्नत्यंउत्साहशक्तिः॥मंत्रः सध्यादीनासामदाना
दीनाञ्चयथावत्स्थापनंमंत्रशक्तिः एकैकंनाम ॥क्षयःक्षपण क्षिक्षये अष्टवर्गस्य ॥अपचयः क्षयः वृद्धि.उपचय.अपचयोपचयाभाव स्थानं इतिनीतिवे

**संधिर्नाविग्रहोयानमासनंद्वैधमाश्रयः १८ षड्गुणाःशक्तयस्तिस्रःप्रभावोत्साहमंत्रजाः क्षयःस्थानंचवृद्धिश्चत्रिवर्गोनीतिवेदि**
**ना १९ सप्रतापःप्रभावश्चयत्तेजःकोशदंडजं सामदानभेददंडावित्युपायचतुष्टय २०**

दिनात्रिवर्ग·स्यात् ॥अष्टवर्गस्तु कृषिर्वणि-
क्पथोदुर्गसेतु कुंजरभेदनं ॥खन्याकरबलादानंशून्यानाञ्चनिवेशन १९ कोशदंडजयत्तेजः सप्रतापः प्रभावश्च ॥कोश.धन ॥दंडः दमः ॥सैन्यंच ॥प्रतापः प्रतापय
त्यनेन तपसंतापे ॥प्रभावः प्रभवत्यनेनभाव· श्रीणीभुवोनुपसर्गेइतिघञ् प्रकृष्टःभाव· अधिक्षेपावमानादेःप्रयुक्तस्यपरेणयत् प्राणात्ययेऽप्यसहनंतत्तेजःस-
मुदाहृतं ॥भेदः शत्रूणांभेदनेनआत्मसात्करण भिदिर्विदारणे ॥दंडः दंडनं दमुशमनायां साम सान्त्वप्रयोगे यद्वा स्यतिरोषमनेनवा परस्परोपकाराणांद
र्शनगुणकीर्तनं संबंधस्यसमाख्यानमायत्या.संप्रकाशन वाचापेशलयासाधुतवाहमितिचार्पणं इतिसामविधानज्ञैःसामपंचविधंस्मृतमिति ॥दानं. धना-
देः समर्पणं ॥एतञ्चतुष्कं उपायचतुष्टयं ॥अन्येसमोपायाः उक्ता. सामदानंचभेदश्चदंडश्चेतिचतुष्टय मायोपेक्षेंद्रजालञ्चेति २०

साहस सहसिवर्ते भव ॥दम दमन दमुशमनाया दमःस्यात्कर्दैमेदडेदमनेदमथेर्पिचेतिहेमचंद्र ॥दंड दंड सैन्येदमेथमे मानव्यूहग्रहे भेदेव्यवेकोनुनरेप
थि प्रकांडलगुडेकोणेचतुर्थोपायवर्गयोरितिहेम त्रीणिदंडस्यनामानि ॥साम सांत्व अथो समौ द्वेसरव्यस्य॥ भेद भेदोधर्मविशेषेस्यात् उपजापोविदारणे
उपांशुजपनमुपजाप जपव्यक्तायावाचि उपधीयते शुद्धिज्ञानमत्र॥ धर्माद्यैर्यत्परीक्षणसाउपधा धर्मार्थकामैर्भयेनचपरीक्षण ॥अमात्यादीनामि
त्वान्वेषण उपधास्यात्॥ तद्यथा॥ भावज्ञानायराज्ञाभेरितेनासेनदूतोऽथराजा तदेनमुत्सृज्यान्यमभिषेचयामोवा अन्यमाधुनृपमजामदत्युक्तोऽमात्यादि-
भिर्यदितज्ज्ञापणनमानितनहिंसत्यधार्मिकोयमितिनिश्चय धर्मपरीक्षण एकभाष २१ अथषडक्षीण पंचशब्दा नि शलाकातास्मिपुवर्तते अविद्यमानाभिध

साहसंतुदमोदंड सामसांत्वमथोसमौ भेदोपजापावुपधाधर्माद्यैर्यत्परीक्षण २१ पंचत्रिष्वषडक्षीणोयस्तृतीयाद्य
गोचर विविक्तविजनच्छन्ननिःशलाकास्तथारहः २२ रहश्चोपांशुचालिंगेरहस्यंतद्भवेत्रिषु

डक्षीणयत्र एकद्वाभ्यामेवकृत-
स्यमंत्रस्य॥ यस्तृतीयाद्यगोचर तृतीयादीनानज्ञायते॥ विविक्त विविचतिजनायत्र विविक्तपृथग्भावे विविक्तनिषुसपृक्तेरहः पूतविवेकिषु॥ विजन विगत
जनोऽस्मात्॥ छन्न छद्यतेस्मात जन छदअपवारणे छन्नतुरहसिक्लीबच्छादितेवाच्यलिंगक॥ निःशलाक निर्गताशलाकायस्मात् शलाकाया निर्गतो
वा तथाशब्द समुच्चये॥ रह रह्यते रहत्यागे रहस्तत्वेरहोगुह्ये ॥रभसोऽपि रहोनिधुवनेपिस्याद्रहोगुह्येनपुंसक इतिपंचाभिधानानि २२ रह चपरउपा
शु द्वेअलिंगेअव्ययेस्याता॥ उपांशु उपगता अंशव किरणा अत्र उपांशुर्जपदेशःस्यादुपांशुविजनेव्यय तद्भवेरहोभवेरहस्यत्रिषु रहस्यारव्यानदोभेदेगोप
नीयेऽभिधेयवत् एक॥

विश्रंभविश्वासौसमौ विश्रंभः विश्रंभणं ॥विश्वासः विश्वासनं विश्रंभ केलिकलहेविश्वासेप्रणयेऽपिचेतिमेदिनी श्वसप्राणने॥ यथोचितात् यथाप्राप्ता
त्॥ भ्रेषः भ्रेषृचलने भ्रंशः अधःपतनं २३ अभ्रेष भ्रेषादन्यः॥ न्याय. नियमेनईयते परिन्योरितिघञ्॥ कल्पः कल्पःशास्त्रेविधौन्यायेसंवर्तेब्रह्मणोदिने॥ देशा
रूप दिश्यते दिशअतिसर्जने देशोरूपमस्य प्रशस्तंदेशनंवा प्रशंसायांरूपं॥समंजसं सम्यगंजोऽत्र यद्वा संगतमजसातत्वमत्र पंचनीतेः॥युक्तं युज्यते यु
जिर्योगे युक्तंयुक्तेपृथग्भूतेक्लीबंहस्तचतुष्टये॥औपयिकं उपयत्यनेन उपपूर्वादिणोघञ् उपायाप्रस्वत्वंचेतिठक्॥लभ्यं लभ्यते लभ्यंयुक्तेचलब्धव्ये॥भ

समौविश्रंभविश्वासौभ्रेषोभ्रंशोयथोचितात् २३ अभ्रेषन्यायकल्पास्तुदेशरूपंसमंजसं युक्तमौपयिकंलभ्यंभजमा
नाभिनीतवत् २४ न्याय्यंचत्रिषुषट्संप्रधारणातुसमर्थनं अववादस्तुनिर्देशोनिदेशःशासनंचसः २५ शिष्टिश्चाज्ञाचसं
स्थातुमर्यादाधारणास्थितिः

जमानं भजते फलमनुबध्नाति भजसेवायां ताच्छील्येचानश्॥अभिनीतं अभिनीयतेस्म णीञ्प्रापणेक्त
प्रत्ययः॥अभिनीतंसंस्कृतंचन्यायेचामर्षणेत्रिष्वितिरुद्रः अभिनीतस्त्रिषुन्यायेसंस्कृतामर्षिणोरपि २४ न्याय्यं न्यायादनपेतं धर्मपथ्यर्थेतियत् एतेयु-
क्तादयः षट्त्रिषु न्यायादनपेतस्यद्रव्यादेः संप्रधारणा ण्यासश्रन्थेतियुच्॥समर्थनं संपूर्वः अर्थउपयाचायां ईशधातु: हेयुक्तायुक्तपरीक्षायाः॥अववादः का-
र्यमवलंब्यवदत्यत्रघञ्॥निर्देशः निदेशःउभयत्रघञ्॥ शासनं ल्युट् २५ शिष्टिः क्तिन्॥आज्ञा आतश्चोपसर्गेइत्यङ् षट्कर्माज्ञापनस्य॥संस्थातु संतिष्ठते
ऽनया प्राग्वदङ् सम्यगवस्थानं॥मर्यादा मर्येति सीमार्थेव्ययंतत्रादीयते अङ्स्त्रियां॥धारणा धारयतिधर्मं ल्युः॥स्थितिः चत्वारिन्यायपथस्थितेः॥

आग अगति अगगतो आगोऽपराधेऽपायेऽस्यान् सात ॥अपराध अपराधन राधसाधसंसिद्धौ ॥मतु मन्यते मनज्ञाने तु मत्यय मतु पुस्यपराधेऽपिमनुष्योऽपिप्रजापतौ त्रीणि हि
मपराधस्य॥उद्दानबंधनेतुसमे बंधबंधने द्वेबंधनस्य २६ द्विगुणोदण्डोद्विगाद्य स्यात् द्वौपादौपरिमाणमस्य॥भागधेय भागएवनामरूपेतिधेय ॥कर कीर्यतेकृ
विक्षेप ऋदारप् करावर्षोपलेपाणौरश्मौभयधयशुण्डयो करोबंधेनिश्चयेनबलौरश्लेयताबपीतिविश्व ॥बलि बल्यत घलबधेदाने इन् बलिर्दैत्यभेदेचकरेचा
मरदण्डयो उपसारेपुमानस्त्रीजरयाश्लथचर्मणि गृहदारुप्रभेदेचजठरावयवेऽपिचेत्यक्त• त्रीणिकर्षकादिभ्योराजग्राह्यभागस्य पट्टीवस्तुलइतिभाषाभाषया
॥घट्टादिदेय घट्टादौनदीतीरादौ यद्दातुयोग्यतत् शुल्क अस्मिशुल्क्यते शुल्कअतिसर्जने शुल्कघट्टादिदेयस्याद्दशदर्थग्रहेस्त्रियां एकमेव॥प्राभृततु मा

आगोऽपराधोमतुश्चसमेतूद्दानबंधने २६ द्विपाद्योद्विगुणोदण्डोभागधेयकरोबलि घट्टादिदेयशुल्कोऽस्त्रीप्राभृततुप्रदेश
न २७ उपायनमुपग्राह्यमुपहारस्तथोपदा यौतकादितुयद्देयसुदायोहरणंचतत् २८ भ्रियतेस्म भृञ्भरणे॥प्रदेशन प्रदिश्यते दिश
अतिसर्जने द्वेदेवताभ्योमित्रादिभ्यश्चदीयमानस्य २७ उपायन उपेयते उपास्यतेवा इण्गतौ अयगतौवा ॥उपग्राह्य उपगृह्यते ग्रहउपादाने॥उपहार उपह्रियते त-
थाउपदा उपदीयते डुदाञ्दाने पट्टनृपगुरुदर्शनेदीयमानस्यवस्तुन उपदास्त्रियां उपायनमुपग्राह्यमाभृतंचोपदास्त्रियामित्यमरमाला॥यौतकादि युतकयोनि-
संबंध तत्रभव युतयोर्वरबध्वोर्वेद तस्येदमित्यण् युतकंयुग्मके युक्तेसशायेऽपिचेतित्रिमस युतकंसशयेयुगे नारीवस्त्रान्चलेयुक्तेचलनार्थेऽपियौतके आदिनाव्रतभि
क्षादिग्रहण॥तद्देय सुदाय सुदीयते तद्देवहरण ह्रीयते सुदाय पुंसि द्वे कन्यादानकालेव्रतभिक्षादौचदीयमानद्रव्यस्यनामनी २८

तत्काल सचासौकालश्च तदात्वंस्यात् तदेत्यस्यभाव तदात्वं द्वेवर्तमानकालस्य ॥ उत्तर काल· आयति आयास्यतीति आयतिस्त्रस्त्रियांदैर्घ्येप्रभावागामिकालयो एक आयति· स्त्री ॥ यत् सद्य फलंसादृष्टिक संदृष्टोप्रत्यक्षोभव अध्यात्मादित्वात्ठञ् एकव्यापारानतरं जायमानस्यफलस्य ॥ उत्तरं फलउदर्क उदर्क्यते अर्कस्तवने उदर्च्यतेवा अर्चपूजाया उत्ऋच्यतेवा ऋचस्तुतौ उदर्कएष्यकालेत्तफलेमदनकटके एकंभाविनः कर्मफलस्य २९ वन्हितोयादि वन्हिश्चतोयचते आदिनोयस्य- तत् अदृष्टस्यात् आदिशब्देन ॥ हुताशनोजलंव्याधिदुर्भिक्षंमकरस्तथा अनिवृष्टिरनावृष्टिर्मूषका शलभात्योगृत्यते एकं अग्न्यादिकृतस्यभयस्य ॥ स्वपरचक्र

**तत्कालस्तुतदात्वंस्यादुत्तरःकालआयतिः सांदृष्टिकंफलंसद्यउदर्कःफलमुत्तरं २९ अदृष्टंवन्हितोयादिदृष्टंस्वपरचक्रजं म हीभुजामहिभयंस्वपक्षप्रभवंभयं ३० प्रक्रियात्वधिकारःस्याच्चामरंतुप्रकीर्णकं नृपासनंयत्तद्भद्रासनंसिंहासनंतुतत् ३१**

जंभयदृष्ट·स्यात् स्वपरचक्रजं स्वश्चपरश्चस्वपरौ तयोश्चक्रेसैन्येताभ्यांजात महीभुजांस्वपक्षप्रभव स्वसहायजन्यंभयअहिभयंस्यात् गृहत्वात् पक्षाएवअहिः एकं स्वसहायाज्जातभयस्य ॥ निजोथमैत्रश्चसमाश्रितश्चसंबंधत कार्यसमुद्भवश्च भृत्यागृहीतोविविधोपचारै· पक्षेबुधा· सप्तविधंवदंति ३० प्रक्रियातु ।कृञ·शब्वेतिक्य प् ॥ अधिकार यत्र द्वेमर्यादास्थापनस्य ॥ चामरप्रकीर्णकं चमति चम्यते अनेनवा चमुअदने अरप्रत्यय· चमरंचामरेस्त्रीतुमंजरीमृगभेदयो· इत्युक्तत्वात् चामरा चामरेबालव्यजने ॥ प्रकीर्णकं प्रकीर्यतेस्म कृविक्षेपे क्तःसंज्ञायाकन् प्रकीर्णकंचामरेस्याद्विस्तरेनातुसंगमे द्वेचवरीइतिरव्यातस्य ॥ नृपासन ॥ भद्रासन द्वेम- ण्यादिकृतराजासनस्य तत्रहेमविकारोनृपासन सिंहाकारमासन ३१

हैमछत्रतु छादयत्यनेन छदअपवारणे ष्यन इस्मन् त्रन् इतिन्हस्व ॥आतपत्र आतपात्त्रायते आतोत्तुपसर्गेक इतच्छत्रनृपलक्ष्म एकराजछत्रस्य॥ भद्र
कुंभ भद्रस्यभद्रोवाकुंभ ॥पूर्णकुंभ पूर्णःकुंभ हेपूर्णघटस्य॥भृंगार बिभर्तिजल भृंगारभृगारेचेतिसाधू॥कनकालुका कनकम्यालू तत कनिन्हस्व
हेम्कवर्णकृतजलपात्रस्यझारीतिख्यातस्य ३२ निवेश॰ शिविर निविशतेऽत्र विशप्रवेशने निवेश सैन्यविन्यासेविवाहेचइतिहेम॥शिविर शिवत्यत्र शवगतो
॥षढेनपुंसके हेसैन्यनिवासस्थानस्य सैन्यात्त्यातळइतिख्यातस्य॥आगंतुकसैन्यवसते सज्जनतुउपरक्षण सज्जतेऽनेन सत्शोभन जन्यतेवाऽनेन ष ञ
गतो जनीप्रादुर्भावे हेसैन्यरक्षणायनियुक्तप्रहरिकादिन्यासस्य प्राकृतभाषया पाह्रारागस्तइतिख्या॰॥हस्त्यश्वरथपादातचतुष्टयसेनागस्यात् पदातीनासमू-

हैमछत्रत्वातपत्रराज्ञस्तुनृपलक्ष्मतत् भद्रकुंभ पूर्णकुंभोभृंगार कनकालुका ३२ निवेश शिविरषढेसज्जनतूपरक्षण
हस्त्यश्वरथपादातसेनागस्याच्चतुष्टय ३३ दंती दंतावलोहस्तीद्विरदोऽनेकपोद्विप मतंगजोगजोनाग

ह हस्तिनश्च अश्वाश्चरथाश्च
पादातश्च सेनागत्वादेकवद्भाव सेनाया अंगचतुष्टय चत्वार अवयवा नाविकादिविकादीनापदातावंतर्भाव नौकानारथेष्वंतर्भाव महिषादीनागजेष्वंतर्भाव इत्येव
नाम ३३ दंती अतिशयितौदंतावस्यइनि ॥दंतावल दंतशिखात्संज्ञायामितिवलच् वलइतिदीर्घ ॥हस्ती हस्त शुंडास्यास्ति हस्ताज्जातावितिइनि ॥एवकरी॥द्विर
द द्वौरदावस्य॥अनेकप अनेकेनकरेणमुखेनचपिबति॥द्विप द्वाभ्यापिबति ॥मतंगज मतंगाद्दषेर्जात ॥गज गजति गजमदे॥नाग नअग नगेभवोवा ना
गोमतंगजेसर्पेपुन्नागेनागकेशरे क्रूराचारेनागदंडेमुस्तकेचारिदेपिच देहेनिलविशेषेचश्रेष्ठेस्यादुत्तरेस्थित नागरंगेसीसपत्रेस्त्रीर्लंबंधेकरणांतरइतिहेम ॥

कुंजरः अतिशायितः कुज· हनु· अस्य अस्तिरवसुरवकुंजेभ्योर· कुंजरोनेकपेकोशेकुंजराधरकीद्रुमे पाटलायान्चेतिहेमचंद्रः॥ वारणः वारयतिशत्रुब-
लं वारणंप्रतिषेधेस्याद्वारणस्तुमतगजइतिविश्वः॥ करी करोस्यास्ति ३५ इभः एति ईयतेवा इणःकिदितिभः॥ स्तंबोगुल्मेतृणादीनामकांडेद्रुमगच्छ-
योः स्तंबेरमः स्तंबेरमंते॥ पद्मी पद्मंबिंदुजालकमस्त्यस्य इतिपञ्चदशहस्तिनः॥ यूथनाथस्तु यूथस्यहस्तिवृंदस्यनाथः॥ यूथपः यूथंपातीति द्वे यूथमुख्य
हस्तिनः॥ मदोत्कटः मदेनदानांबुनाउत्कटोमत्तः॥ मदकलः मदेनकलते कलशब्दसंख्यानयो· मदेसति कलोध्वनिर्यस्येतिवा द्वेअंतर्मदहस्तिन·॥ कल-

**कुंजरोवारणःकरी ३४ इभःस्तंबेरमःपद्मीयूथनाथस्तुयूथपः मदोत्कटोमदकलःकलभःकरिशावकः ३५**
**प्रभिन्नोगर्जितोमत्तःसमावुद्वांतनिर्मदौ हास्तिकंगजतावृंदंकरिणीधेनुकावशा ३६**

भः कलति कलगतिसंख्यानयोः कलतेवा कलशब्दसंख्यानयोः कलंभाषतेवा॥ करिशावकः करिणः शावकः द्वेकरिपोतस्य प्राकृतभाषया छा
वा ३५ प्रभिन्नः प्रकर्षेणभिद्यतेस्म॥ गर्जितः गर्जयति गर्जशब्दे गर्जःसंजातोस्यवा गर्जितंवारिवाहादिध्वनौनामत्तकुंजरइतिविश्वमेदिन्यौ॥ म-
त्तः माद्यतिस्म मदीहर्षे त्रीणिजातमदस्यनामानि उद्वांतनिर्मदौसमौ उद्गतंवांतमदवमनमस्मात् उद्वांतउद्गीर्णमदनद्विपइतिहेमः॥ निर्मदः मदान्नि
र्गतोनिर्गतोमदोस्माद्वा द्वेगतमदस्य॥ गजतावृंदेहास्तिकं हस्तिनांसमूहः द्वे॥ करिणी करोऽस्तियस्याः इनिः॥ धेनुका· धेनुरिव इवेप्रतिकृतौ स्यात्धे-
नुकाकरिण्यांचधेनावपि॥ वशा उश्यते वशकांतौ वशानार्यांवंध्यगव्यांहस्तिन्यांदुहितर्यपि त्रीणिकरिण्याः ३६

गड गडति गडिवदनैकदेशो गड स्यात्सुसिरखड्गिनि ग्रहयोगप्रभेदेनवीथ्यगेपिपदेपिच चिन्हवीरकपोलपुहयप्तुषणवु हृदद्त्यक्तत्वात् ॥कट कटति कटेवर्षावर
णयो कट श्रोणौह्योः पुसिकालिजेतिशायेशवे समये गजगडेपिपिप्पलीतुकटेमतेत्यक्तः॥ द्वे गजगडयो ॥मद माद्यत्यनेन मदीहर्षे मदयतिवा मदोरेत
॥सिकस्तूर्यागर्वेहर्षेभदानयो ॥दान द्यत्यनेन दोअवखण्डने दानगजमदेयोगेपालनच्छेदशुद्धिषु द्वे मदोदकस्य॥वमथु वम्यते टुवमुद्गिरणे वमथुर्वमनेकासे
नगकरशीकरइतिहैम ॥करशीकरः करस्यशीकर द्वे शुण्डानिर्गतजलस्य॥शिरस पिंडौकुंभौस्याता कुभुकउंभति उंभपूरणे शकन्ध्वादि उकारयोर्न्हस्वउका
र कुंभोराश्यंतरेहस्तिमूर्धांशोराक्षसांतरे कार्मुकेवारनार्याचघटेक्लीवतुगुग्गुलाविति॥पिंड पिंड्यते पिडिसंघाते पिंडोबालेबलेसांद्रेदेहागारैकदेशयो द्वे

गड कटोमदोदानवमथु करशीकर कुंभौतुपिंडौशिरसस्तयोर्मध्येविंदु पुमान् ३७ अवग्रहोललाटस्यादीषिकाक्षिकूटक अ
पागदेशोनिर्याणकर्णमूलंतुचूलिका ३८ अथ कुंभस्यबाहित्थं

स्मारेनिवापेचगोल्सिल्हकयोरपि ओड्रपुष्पेचपुसिस्यात्क्लीवमाजीवनायसो
पिंडोस्त्रीपिंडतगरेलाबुखर्जूरभेदयो तयोःकुंभयोर्मध्येयत्स्थान सोविंदु वेत्तीति विद ज्ञाने बाहुलकात्तु बिंदु शब्द पुल्लिंगे एकनाम ३७ अवग्रह अवगृह्यतेकुरे
न ग्रहदनिश्चिगमश्चनि अप् अवग्रहोहस्तिरोधेप्रतिबंधेगजालिके रुद्रोपि गजालिकेहस्ति राधेप्रतिबंधेप्यवग्रहइति ॥ललाटस्यात्॥ ईषिकातु ईष्यते इषउंछे ईष-
गतिहिंसादानेषुवा॥अक्षिकूटकस्त्वक्षगोलकएक॥हस्तिन अपागदेश अपांगस्यदेश ॥निर्याण निर्यात्यनेन ॥निर्याणवारणापांगदेशेमोक्षेध्वनिर्गमे एक॥कर्णमूलंतु
कर्णस्यमूलंचूलिका चूल्यतेऽनया चूलसमुच्छ्राये चूलिकानाटकस्यांगेकर्णमूलेतुहस्तिना एक ३८ कुंभस्यअध बाहित्थं अवश्यवहति अस्यमत् अथ मतिमान

अस्ययत् अधःप्रतिमानं अस्यवाहित्यस्य अधोभागेदंतयोर्मध्यं प्रतिमानं प्रतिमीयतेनेन मीञ्हिंसायां प्रतिमानंप्रतिच्छायागजदंतांतरालयोरितिरुद्रः एक ॥ गजस्य स्कंधदेशः आसनंआस्यतेयस्मिन् आसनंद्विरदस्कंधेपीठयात्रानिवेशनइतिविश्वमेदिन्यौ ॥ स्कंधएवदेशः पद्मकं पद्ममिवपद्मकं इवार्थेकन् पद्मकंस्यात्पद्मकाष्ठबिंदु जालकयोरपि ॥ बिंदुजालकं बिंदूनाजालकं द्वे गजस्यमुखादिस्थबिंदुसमूहस्य ३९ गजस्यपार्श्वभागः पक्षभागःस्यात् पार्श्वस्यभागः यद्वा पार्श्वमेवभा- गः ॥ पक्षयत्यनेन द्वेगजपार्श्वस्य ॥ अग्रत. यःभागःसदंतभागःस्यात् दंतस्यभागः दंतसबंधीभागोवा एकंदतिनःअग्रभागस्य ॥ पूर्वश्चपश्चा च्चपूर्वपश्चाच्चतेजं- घेच पूर्वपश्चाज्जंघेआदीयस्यसः पूर्वपश्चाज्जंघादिश्चासौदेशश्च पूर्वजंघाभागोगात्रं ॥ पश्चाज्जंघाभागोवरं इतिक्रमेण ॥ गात्रं गातेनेन गाङ्गतौ यद्वा एत्य

प्रतिमानमधोऽस्ययत् आसनंस्कंधदेशःस्यात्पद्मकंबिंदुजालकं ३९ पार्श्वभागःपक्षभागोदंतभागस्तुयोऽग्रतः द्वौपूर्वपश्चाज्जंघा दिदेशौगात्रावरेक्रमात् ४० तोत्रंवेणुकमालानंबंधस्तंभेऽथशृंखले अंदुकोनिगडोस्त्रीस्यादंकुशोस्त्रीसृणिःस्त्रियां ४१

नेन इणगतौ)

अवरं नवृणोति व्रियतेवा वृञ्वरणे गात्रावरेपूर्वपश्चात्पादयोःपरिभाषते इतिभागुरिः गात्रंगजाग्रजंघादिभागेप्यंगेकलेवरे अवरगजांत्यजंघादि देशे चरमेत्रिषु द्वौपूर्वपश्चाज्जंघादिदेशौगात्रावरेननेतिरभसः अपरंतूत्तरार्थेस्यात्पश्चाद्भागेचदंतिनामितिविश्वः क्रमेणैकैकं ४० तोत्रंतुद्यतेऽनेन तुदव्यथने तोत्रंतुप्राजनेवेणुकेपिच )) वेणुकं वेणुनानिर्वृत्तं निर्वृत्तंक्षद्यूतादिभ्यइतिठक् द्वे तोदनदंडस्य ॥ बंधस्तंभे आलानं आलीयतेऽत्र लीङ्श्लेषणे इत्येकं ॥ अथशृंखले शृंगंप्राधान्यंखलति खलसंच ने संचयेच यद्वा शृंगात्प्राधान्यात्खलत्यनेन शृंखलापुंस्कटीकांच्यांलोहरज्जौचबंधने ॥ अंदुकः अंद्यतेनेन अदिबंधने अंदुःस्त्रियांस्यान्निगडेप्रभेदेभूषणस्यच

को ॥निगड निगतोगड सेचनमस्मात् निगलतिवा गलअदने इतित्रीणिनामानि॥अकुश अक्यतेनेन अकिलक्षणे॥स्त्रीभिन्न ॥सृणि सरति अतर्गच्छति अन-
यावा सृगतौ शृणाति शृहिंसाया सृणिरकुशवाचीत्वकाशश्चतृणवाचकइत्ति॥स्त्रीलिगे ४१ दूष्या दूष्यतेनया दूष्यत्रिषुदूषणीयेक्लीबेवस्त्रेचतऋहे चूष्याइ
तिवापाठ चूष्यते पीयते चुष्पाने॥कक्ष्या कक्षेभवा कक्ष्याबृहतिकायास्यात्काञ्च्यामध्येभवधने हर्म्यादीनाप्रकोष्ठेचकार्यहेतौप्रयोजने॥वरत्रा व्रियतेऽनया
वृञ्वरणे यद्वा वरत्रायते त्रैङ्पालने त्रीणिगजस्य मध्यवधनस्य॥कल्पना॥ सज्जना समे कल्पतेऽनया॥ सज्जतेऽनया षज्जगतौ करिण सज्जना
यास्त्रीक्लीबक्रमेणचकल्पने सज्जनतुरथेक्लीबसुपरक्षणघट्टयो वाच्यलिगकुलीनेस्यात्कल्पयाचयोषिति द्वेनायकारोहणार्थगजसज्जीकरणस्य

दूष्याकक्ष्यावरत्रास्यात्कल्पनासज्जनासमे प्रवेण्यास्तरणवर्ण परिस्तोमकुथोद्वयो ४२वीतत्वसार हस्त्यश्ववारीतुगज
बंधनी ॥प्रवेणी प्रकर्षेणवीयतेऽस्या वीगत्यादिषु प्रवेणि स्त्रीकुथावेण्यो ॥आस्तरण आस्तीर्यतेऽनेन स्तृञ्आच्छादने॥वर्ण व्रियतेनेन वृञ्वरणे
वर्ण स्वर्णव्रतेस्तुतौ रूपेद्विजादौशुक्लादौकुथायामक्षरेगुणे भेदेगीतक्रमेचित्रेयशस्तालविशेषयो अगरागेत्ववर्णतुकुकुमेइतिहेम ॥परिस्तोम परिस्तूय
ते ष्टुञ्स्तुतौ॥कुथ कुथ्नाति कुथदीप्तौ यद्वा कुथत्यशोभा कुथिहिंसाया यद्वा कुथ्यति कुथपूतिभावे कुथ स्त्रीपुंसयोर्वर्णकबलेपुंसिबर्हिषि क्लीबेपि
स्त्रीप्रवेणीकुथत्रिषु पचगजोपर्यास्तरणचित्रकबलस्य ४२ असार हस्त्यश्व वीतस्यात् नसारोबलयस्य हस्तिनश्चअश्वाश्चहस्त्यश्व॥वीतवेति अजतिस्म
वा युद्धादिकर्मथ वीगत्यादौ अजगतौवा एकनाम॥वारीतु वार्यतेऽनया वारीस्याद्गजबधिन्याकलश्यामपियोषिति वारिर्वागजबधिन्यास्त्रीक्लीबेबुनि-
वालके॥गजबधनी बध्यतेऽस्या गजस्यबधनी बधबधने द्वे गजबधनशालाया॥

घोटक. घोटते खुटपरिवर्तने कर्तरिण्वुल् घोटसैंधवगंधर्वाहयवाजितुरगाश्चइतिरभसः॥ वीतिः वीगत्यादिषु क्तिच् पीतिपाठेआह पिबति पापाने प्रीतिर्वाइतिपाठः प्रीतिर्नाश्वेस्त्रियांपानेइत्युक्तं॰॥ तुरग· तुरति तुरत्वरणे तुरेणगच्छति॥ तुरंगः तुरगीचाश्वगंधायांतुरगश्चित्तवाजिनोः॥ तुरंगमः तुरशीघ्रंगच्छति ४३ वाजी अवश्यंवजति वजगतौ आवश्यकेणिनि· यद्वा वाजाः पक्षा अभूवन्यस्य अतइनिः वाजीबाणाश्वपक्षिष्वित्यु॰॥ वाहः उह्यतेनेन वहप्रापणे वाह्यतेवा वाह् तेवा वाहृप्रयत्ने वाहोभुजेपुमान्माने भेदाश्ववृषवायुषु॥ अर्वा ऋच्छति ऋगतौ अन्येभ्योपीतिवनिप् यद्वा अर्वति अर्वगतौ बाहुलकात्कनिन्॥ गंध र्वः गंधंअर्वति अर्वगतौ कर्मण्यण् शकंध्वादिः नभश्चरेतुगंधर्वेम्पृगभेदेतुरंगमे पुंस्कोकिलेगायनेच अंतराभवदेहके॥ हयः हयति हयगतौ अच्

घोटकेवीतितुरगतुरंगाश्वतुरंगमाः ४३ वाजिवाहार्वगंधर्वहयसैंधवसप्तयः आजानेयाःकुलीनाःस्युर्विनीताःसाधुवाहिनः ४४ वनायुजाःपारसीकाःकांबोजाबाल्हिकाहयाः

ह्निोतिवा ह्निगतौ सैंधवः सिंधुषुभवः सैंधवस्तु सिंधुदेशोद्भवेहयइत्युक्तं॰॥ सप्तिः सपति सेनायांसमवैति षपसमवायेक्तिच्॥ येकुलीनास्तेआजानेयाः अजनं अजगतिक्षेपणयोः घञ् आजेनक्षेपेणआनेयाः प्रापणीयाः आयत्तावा अश्वंकु लीनमजानेयंशावंकिशोरंब्रुवतइतिरत्नमाला शक्तिभिर्भिन्नहृदयास्खलंतश्चपदेपदे आजानंतियतःसंज्ञामाजानेयास्ततःस्मृताइतिअश्वशास्त्रं॥ कुलीनाः कुलस्यापत्यानिपुमांसः॥ येसाधुवाहिनःतेविनीताः विनीयंतेस्म सुशिक्षिताः विनीतःसुवहाश्वेस्याद्वणिज्यपिपुमान्त्रिषु जितेंद्रियेपनीतेच निभृतेविन- यान्विते॥ साधुवाहिनः साधुवहनशीलाः वहप्रापणे इतितुरंगनामानि ४४ वनायुजाः पारशिकाः वनायुषुदेशेषुजाताः॥ पारशिकदेशेभवाः॥ कांबोजाः कं बोजेषुभवाः॥ बाल्हिकाः बल्हिकदेशेभवाः बाल्हीकंबल्हिकंधीरेहिंगुनोनाश्वमेधयोरितित्रिकांडशेषात् एतेहयविशेषाः प्रत्येकंभिन्नाः

अश्वमेधीय अश्व यस्तु स्यात् अश्वमेधायहित छभत्यय ॥ययु याति ययुःपुमानश्वमेधस्तुरगेचतुरगमेदइत्यक्त• ॥जवनस्तुजवाधिक जवेनवेगेनअधिक ज
वनतुस्यदेवेगिहयेनावेगिनत्रिषु द्वे ४५ पृष्ठ्य प्रशस्तमतिशयितपृष्ठमस्य गुणयवत् ॥स्थौरी स्थूलस्येद रलयोरेकत्व स्थौरबलमस्यास्ति द्वे भारवाहिनोऽश्व
स्य॥सित शक्क अश्व कर्क करोतिक्रियतेवा कर्क कर्केवलेपन्हीरफक्काश्वेदर्पणेघटे एकःशक्काश्वस्य॥रथस्यथ वोढा सरथ्य रथ्यारथ्योघोषिशिखा
वर्तनीष्वचयोषिति रथवहति रथवोढरिपुल्लिंग एकरथवाहकाश्वस्य।अस्यवाल किशोर कशाति कशाशब्दे किंचिछवति शवगतौवा ॥वामी वामयति

**ययुरश्वोऽश्वमेधीयोजवनस्तुजवाधिक ४५ पृष्ठ्य स्थौरीसित कर्कोरथ्योवोढारथस्यय बाल किशोरोवाम्यश्वावड**
**वावाडवगणे ४६ त्रिष्वाश्वीनयदश्वेनदिनेनैकेनगम्यते कश्यंतुमध्यमश्वानाहेषान्हेषाचनिस्वन ४७**

टुवमुद्गिरणे वाम्यतेवा वमति उद्गिरतिवा वामीस्त्रगालीवडवारासभीकरभीष्वुच॥अश्वा बलसामर्थ्यमतिशायितमस्या डलयोरेक त्व बवयोरेकत्वच व
लवातिवा बलेनव्रजतिषा वडवाद्विजयोषिति अश्वायाकुभव्यस्याचनारीजात्यतरेऽपिच त्रीणिअश्वाया ॥गणेसमूहेवाडव वडवानासमूह खडिका
दिभ्यश्चेतिअञ् वाडवकरणेस्त्रीणाघोटकौघेनपुसक पातालेनमस्त्रियापुसिब्राह्मणेवडवानलइत्युक्तत्वात् एक ४६ अश्वेन एकेनदिनेनगम्यतेतदा
श्वीन तत्रिषु अश्वस्यैकाहगमइतिखञ् ॥अश्वानामध्यकश्य अश्वादेस्ताडनीकशातामर्हति कश्यंत्रिषुकशार्हेस्यात्क्लीबमद्याश्वमध्ययो ए
क॥अश्वानानि स्वन शब्द हेषा ॥ न्हेषा हेषृन्हेषृशब्दे गुरोश्चहलइत्य ४७

गलोद्देश· निगालः निगलत्यनेन गलअदने निगरत्यनेन गृनिगरणे उन्योर्ग्रः इतिघञ् अचिविभाषेतिलोवा ॥ गलस्योद्देशः घटाबंधसमीपस्थोनिगाल- कीर्तितोबुधैः
तस्मिन्नेवमणिर्नामरोमजःशफक्कून्मतइत्यश्वशास्त्रं ॥ वृंदेतु अश्वीयं ॥ आश्ववत् अश्वानांसमूहः केशाश्वेतिसूत्रेणउभयसाधु द्वे अश्ववृंदस्य ॥ आस्कंदितं स्कंदि
र्गतिशोषणयो. ण्यंताद्भावेक्तः आस्कंदःसंजातोऽस्यवा जवातोऽश्वोनश्रृणोतिनपश्यति एतादृशीगतिः आस्कंदनं भरधाव भरचाल भरपल्लाप्राकृते ॥ धौरितकं
धोर्ऋगतिचातुर्ये दृद्धिमत्पाठेप्रज्ञाद्यण् अथधौरितकधैर्यधारणंधारितंचतदितिवाचस्पतिः ॥ रेचितं रेचिरृविरेचने ॥ वल्गितं वल्गगतौ ॥ प्लुतं प्लवनं प्लुङ् गतौ
प्लुतमश्वगतौ ४८ अमू. अश्वानांपंचगतयः ॥ धारा. धार्यतेश्वात्रानयावा धृधारणे ॥ घोणातु घोणते घुणभ्रमणे ॥ प्रोथं प्रोथति प्रोथृपर्याप्तौ प्रोथशब्दःपुं

निगालस्तुगलोद्देशोवृंदेत्वश्वीयमाश्ववत् आस्कंदितंधौरितकंरेचितंवल्गितंप्लुतं ४८ गतयोऽमूःपंचधाराघोणातुप्रोथमस्त्रियां
कविकातुखलीनोऽस्त्रीशफंक्लीबेखुरःपुमान् ४९पुच्छोऽस्त्रीलूमलांगूलेवालहस्तश्चवालधिः

नपुंसकः प्रोथोस्त्रीहयघोणायांनाकल्याम
ध्वरेत्रिषु अवस्कंदितप्राकृतभाषयाचवडचाल धौरितकं सरळचाल रेचितं दुडकीचाल वल्गितं बाजीचाल प्लुतं चौकचाल ॥ कविका कवते कुङ्शब्दे ॥ खलीनः खेमुखेलीनः द्वे करियालि (लगाम) इतिख्यातस्य ॥ शफंक्लीबे शंफणति फणगतौ शफंमूलेतरूणांस्यात्गवादीनांखुरेपिचेत्य० ॥ खुरःपुमान् खुरति खुरछेदने खुरःकोकदलेशफे भूमिखुरति विदारयति खुरः ४९ पुछः पुच्छति पुछप्रमादे पचाद्यच् पुच्छःपश्चात्प्रदेशःस्याल्लांगूलेपुच्छमिष्यते स्त्रीभिन्नः लूमं लूयते लूञ्छेदे ॥ लांगूले लंगति लगिगतौ लांगूलंपुच्छशेफयोरितिहेमः त्रीणिनामानि ॥ पुच्छमस्त्रीनपुंसकं ॥ वालहस्त. वालःहस्तइव दंशादिनिवारकत्वात् वालानांहस्तोवासमूहः वालोनाकुंतलेऽश्वस्यगजस्यापिचवालधौ ॥ वालधि· वालाःधीयंतेऽत्र द्वे केशवल्लांगूलमात्रस्य ॥

। उपावृत्त लुठित उपावर्ततेस्म वृतुवर्तने लुठतिस्म लुठप्रतिघाते द्वेनामनी श्रमशान्त्यर्थंमुहुःपुन पुन भूमौपरावृत्तेलुठितेऽश्वेवर्तेते ५० याने यात्यनेन याप्रापणे ॥ चक्रिणि चक्रमस्यास्ति ॥ युद्धार्थे युद्धायेद ॥ शताग शतमगानियस्य ॥ स्यदन स्यदते स्यदुप्रस्रवणे चलनशब्दार्थादितियुच् स्यदनद्वयमुनेतोनीरीतिनिशोनार्थेक्रिया ॥ रथ रमतेऽत्र अनेनवा रथःपुमानवयवेस्यदनेवेतसेपिच इतिरथनामत्रय ॥ यत्चक्रसयुतयान समरायसग्रामायनभवति असौपुष्परथ पुष्परथस्यन्यकारमध्य पमध्योवापुष्पवत्सकुमाराकारत्वात् पुष्परथात्रोत्सवादौ एकनाम ॥ सग्रामविनायात्रोत्सवादौसकरवभ्रमणार्थरथस्य ५१ कर्णीरथ कर्णसामीप्यात्कर्णशब्देनस्कधोलक्ष्यते ॥ कर्णे स्कध सोस्त्यस्यवाहकत्वेन कर्णीचासौरथश्च प्रवहण प्रोह्यतेऽनेन वहप्रापणे ॥ डयन डीयतेऽनेन डीङ्विहायसागतौ ल्युनमि-

विवृत्तावृत्तलुठितोपरावृत्तेमुहुर्भुवि ५० यानेचक्रिणियुद्धार्थेशताग स्यदनोरथ असौपुष्परथश्चक्रयानन्नसमराययत् ५१ कर्णीरथ प्रवहणडयनञ्चसमत्रय क्लीबेन शकटोऽस्त्रीस्याद्गन्त्रीकबलवाह्यक ५२ शिबिकायाप्ययानस्याद्दोलाप्रेखादिकास्त्रियाम्

निपाठे ह्यगतौ एतन्त्रयसम त्रीणिपुरुषस्कधवाह्यस्ययानविशेषस्य ॥ अन क्लीबे अन सात अनिति अनप्रापणे असन्प्रत्यय ॥ शकट अस्त्री शक्नोतिभारवोढुजीवयितुवा ॥ नदुक्त शकट शाकिनीगावोयानमारुकदनस्तन अनूपःसर्वतोराजाद्धुर्भिक्षेनवहन्य हेगाडाइतिख्यातस्य ॥ कबलिवाह्यकगन्त्री कबलिभिः वृषैरुह्यते गन्त्रीगम्यतेऽनया हेशकटिकाया गाडीइतिख्या० ॥५२॥ शिबिका शिवेन यद्वा शिवकरोति तत्करोतिण्यतात्ण्वुल् ॥ याप्ययान ॥ याप्यैरधमैर्वाह्ययान हेपालखीतिख्यातायाः ॥ दोला दोलयति दोल्यतेवा दुलउत्क्षेपे ॥ प्रेखा प्रेख्यते इखिगतौ दोलाप्रेखे पुमान्प्रेखान्स्त्रीणिरधिरोहिणीतिरत्नकोशः आदिशब्देनशयनस्वट्वा हेहिंदोलेइतिख्यातस्य डोलीइतिख्यातस्यवा ॥

द्वीपिचर्मावृतेरथे द्वे पैनवैयाघ्रेणचर्मणापरिवृतोरथ. द्वैप ॥वैयाघ्र. उभौसमौ द्वैव्याघ्रचर्मवेष्टितरथस्य ५३ पांडुकंबलसंवीतः पांडुकंबलेनपरिवृतोरथः -
म्यात्पांडुकं बलश्वेतप्रावारग्रावभेदयोः एकं ॥ कंबलेनवस्त्रेणचप्रावृतोरथः आदिना क्षौम दौकूलः चार्मः वास्त्रः कांबलः एवमादिनःस्यु. ५४ द्वैपवैया-
घ्रादयस्त्रिषुवर्तंते ॥ द्वेपारथ्या द्वैपोरथ. द्वैपरथवृंदं रथव्रजेरथनमूहेरथ्या रथकट्या रथानांसमूहः रथ्यातुरथसंघातेप्रतोल्यांरथिचत्वरेइतिहेम. त्रीणि
॥ धू स्त्री धुर्वंति धुर्वीहिंसायां ॥ यानमुखेस्यात् यानस्यमुखमुराभाग द्वेयोरबंधनस्थानस्य ॥ रथांग रथस्यअंगं ॥ अपस्कर. अपकीर्यते स्वस्थाने

उभौतुद्वैपवैयाघ्रोद्वीपिचर्मावृतेरथे ५३ पांडुकंबलसंवीतःस्यंदनःपांडुकंबली रथेकांबलवस्त्राद्याःकंबलादिभिरावृ
ते ५४ त्रिषुद्वैपादयोरथ्यारथकट्यारथव्रजे धूःस्त्रीक्लीवेयानमुखंस्याद्रथांगमपस्करः ५५ चक्रंरथांगंतस्यांतेने
मिःस्त्रीस्यात्प्रधिःपुमान् पिंडिकानाभिरक्षाग्रकीलकेतुद्वयोराणिः ५६

क्षिप्यते रुविक्षेपे द्वेचक्रस्य ५५ चक्रं रथांग क्रियतेऽनेने-
ति चक्रं कोकेपुमान्क्लीबव्रजेसैन्यरथांगयोः राष्ट्रेदंभांतरेकुंभकारोपकरणास्त्रयोः जलावर्तेपि ॥ रथस्यअंग रथांगंचद्वयोश्चक्रेनाचक्रांगविहंगमे
द्वेनामनी ॥ तस्यांते तस्यचक्रस्यअंतभू स्पर्शिभागे नेमि. नयतिरथं नेमिर्नातिनिशेकूपत्रिकच्चक्रांतयोःस्त्रियां स्त्रीलिंगे प्रधिःपुमान् प्रधीयंतेनेन ॥ पिं
डिका पिंड्यंतेयस्या पिंडिसंघाते ॥ नाभि. नह्यतअरा.यत्र नहबंधने यद्वा नभ्यते अक्षेण णभाहिंसायां नाभिमुख्यनृपेचक्रेमध्यक्षत्रिययोःपुमान् द्वयो.
प्राणिप्रतीकेस्यात्स्त्रियाकस्तूरिकामदे द्वेरथचक्रमध्येमंडलाकारायाः ॥ अक्षाग्रकीलकेतु अक्षस्यनाभिक्षेप्यस्यअग्रेअंतेकीलके ॥ अणिः अणति अ
णशब्दे अणिरादिवदक्षाग्रकीलेस्यादश्रिसीमयो द्वेनामनी ५६

क्षारः क्षरति क्षरसञ्चलने ज्वलदित्वाण्ण क्षार काचेरसेगुडे भस्मनिधूर्तेलवणेइतिहेमचन्द्रश्च॥काच कावते कचवधनेदीप्तौच काचःशिक्यमणौनेत्ररोग-
भेदेमृदन्तरइतिविश्व टकाचस्य काचघागडरवारइति॥चपल चोपति चुपमन्दायांगतौ औणादि इत्यासूत्य॥रस रस्यते रसआस्वादने घञ् रसयतिधातून्वा
प्यतादन् रस स्वादेजलेवीर्येश्रृंगारादौविषेद्रवे बालेरागेगृहेधातौतिक्तादौपारदेपिच रसातुरसनापाठासल्लकीक्षितिकुरुषु॥सूत सूयतेस्म षूप्रसवेक्त सू
तस्तुसारथौतक्ष्णिक्षत्रियाद्ब्राह्मणीसुते बंदिपाठकयोःसुसिप्रसूतेप्ररितेत्रिष्विति विश्वः॥पारद पारददाति डुदाञ्दाने कप्रत्यय पारतइतिपाठेतु पारेतनोति तनु
विस्तारे ड रसेन्द्रःपारदःप्रोक्त पारतोपिनिगद्यतइतितारपाल पारतस्तुमनाक्पाङ्गुस्तस्तुरहितोमलात् पारदस्तुमनाकूशीत सर्वतस्तुरगुणा स्मृताइतिशब्दार्णो

क्षार काचोऽथचपलोरस सूतश्चपारदे ११ गवलमाहिषश्रृंगमभ्रक गिरिजामले स्रोतोञ्जनतुसौवीरकापोताञ्जनयामुने १००

र्णव चत्वारिपारदस्य पाराइति ११ यन्माहिषश्रृंगतद्गवलमित्येक गवन गव शब्दे तलाति पारदोहिप्रायेणगवलेनिधाप्यतेतत्रतदभिधान अभ्रक
अभ्राणि पचादयन् अभ्यतेवा घञ् अभ्रगतौ अभ्रस्यप्रतिकृतिर्वा अत्रपक्षेकन्॥गिरिजामल गिरेर्जात जनीप्रादुर्भावे अमति अमगतौ कलच् तच्चतत
इ अभ्रकइतिख्यातस्य गिरिजअमलइतिकश्चित् तन्मतेत्रीणि गिरिजगिरिजाबीजममलगवलध्वजमिनिवाचस्पति॥स्रोतोञ्जन अञ्ज्यतेनयनमनेन अञ्जू
व्यक्त्यादौ ल्युट् अञ्जन स्रोतोजमञ्जन यमुनास्रोतसोजातत्वात् शाकपार्थिवादि॥सौवीर सुवीरदेशेभव सौवीरकांजिकेस्रोतोञ्जनेचवदरीफले नातुनी
तमञ्जनस्रोतोञ्जन धन्वन्तरिस्तु अञ्जनमेचकरुष्णासौवीरस्यात्सुवीरज कपोतकयामुनचस्रोतोञ्जनमुदाहृतमिति चत्वारिसौवीराञ्जनस्यसुरमाइति

तुत्थांजन तुत्थयति तुथ्यतेवा तुत्थआवरणे अच्घञ्वा तुत्थंचतदजनच॥शिखिग्रीव शिखिनोग्रीवा शिखिग्रीवाअस्यास्ति तद्वर्णत्वात्॥वितुन्नकं वितुद्यतेस्म
तुदव्यथने भूतेक्त.॥मयूरकं मयूरस्यप्रतिकृतिः इवार्थेकन् मयूरंकायतिवा सादृश्यात् कैशब्दे॥ कर्परी कल्प्यते रूपसामर्थ्ये बाहुलकात्साधु. पंचमोरचूतइति
ख्यातस्य॥दार्विका दारुहरिद्रातस्या विकार.दार्वी तत कन्॥क्वाथोद्भव अजापयसिआवर्तितं तुत्थंरसाजनादिसंज्ञंस्यात् दार्विकेत्यपि तुत्थस्यादमृतासं-
गंकर्परीतुन्नमित्यपीतिरभस ॥रसांजनं रसजअंजनं शाकपार्थिवादिवत् १०१ रसगर्भ रसोगर्भेऽस्य॥तार्क्ष्यशैलं तार्क्ष्यशैलेभवमभेदोपचारादितिमुकुट-
॥गंधाश्मा गधयुक्तोश्मा॥गंधक· गंधोस्यास्ति गंधिकइतिपाठेतु शोभनोगंधोऽस्य मत्वर्थेठन् आमोदलेशयोर्गधः ससुगंधिकइतिरभस. सौगंधिकइ

तुत्थांजनंशिखिग्रीवंवितुन्नकमयूरके कर्परीदार्विकाक्वाथोद्भवंतुत्थंरसांजनं १०१ रसगर्भंतार्क्ष्यशैलंगंधाश्मनितुगंधकः॥
सौगंधिकश्चचक्षुष्याकुलाल्यौतुकुलत्थिका १०२ रीतिपुष्पंपुष्पकेतुपुष्पकंकुसुमांजनं

त्यपि त्रीणिगंधस्य॥चक्षुष्या चक्षुषेहिता
शरीरावयवाद्यत्वात् चक्षुष्याकुंभकारीचकुलत्थिकेतिरत्नकोश. चक्षुष्यःकेतकेपुंडरीकसज्ञकपादयोः कुलत्थिकासुभगयो स्त्रियामाक्षिहितेन्यवदिति
कोशांतराच्च॥कुलाली कुलमलति अलभूषणादौ कर्मण्यण्॥कुलत्थिका कुलेतिष्ठति कुलत्थप्रतिकृतिरितिवा त्रयतुत्थविशेषस्यनिळासुरमाइति-
ख्यातस्य १०२ रीतिपुष्पं रीते.पित्तलस्यपुष्पमिव॥पुष्पकेतु पुष्पस्यकेतुरिव नाशकत्वात् उदंतनपुंसके पुष्पकेतुकुसुमांजनमितिरुद्र ॥पुष्पकं पुष्पस्यप्रति-
कृति· इवेतिकन् पौष्पकमित्यपि॥कुसुमांजनं कुसुममिवकुसुमनाशकंवा अंजनं चत्वारिध्मायमानपित्तलादुत्पन्नस्य जस्ताचेफूलइतिख्यातस्य ॥

फो पिञ्जर पिञ्जन पिजिवर्णे पञ्जनिष्ठायामनिटइति नकुल॥पीतन पीतवर्णनयते नयगतौ अन्येभ्योपीतिड ॥ताल तालयति तल्पतेवा तलभतिष्ठायाण्य
तात्न्॥ताल करतलेगुष्ठमध्यमायान्तसमिते गीतकालक्रियामानेकरस्फालेद्रुमातरे क्लीबत्तुहरितालेस्यादितिविश्व ॥आल आलयति अलभूषणादौ ण्यता
दन् आलातिवा लाआदाने कप्रत्यय अलमित्यन्यत्र हरितालमलतालवर्णकनटभूषणमितिमाधव॥हरितालक हरितवर्णमालाति आतोनुपेतिक स्वार्थे
क हरितालेतुकर्बूरेरोदतोनटसञ्ज्ञकइतित्रिकाडशेष पञ्च हरितालस्य १०३ गौरेय गिरोभव ढक्॥अर्थ्य अर्थ्यते रसायनार्थिभि अर्थउपयाच्चायाया
ण्यतादन्तोयत् अर्थादनपेतवा धर्मपथ्यर्थन्यायादनपतेइतियत् अर्थोविपश्चितिन्याय्येत्रिष्वर्थतुशिलाजतु यानेरुद्र ॥गिरिज गिरे जात॥अश्मज

## पिञ्जरपीतनतालमालञ्चहरितालके १०३ गैरेयमर्थ्यंगिरिजमश्मजञ्चशिलाजतु बोलगधरसप्राणपिडगोस्वरसा समा १०५

अश्मन जात जनीप्रादुर्भावे गिरिजत्वभ्रकेपिस्याछिलाजतुनिशैलजे लोहेपिगिरिजागौरीमातुलिग्योश्चयोषितीत्य०॥शिलाजतु शिलाजत्विव
शिलायाम्भवल्लाक्षाकृतित्वाच्छिलाजत्वित्यर्थ पञ्चशिलाजतुन शिलाजितइतिरव्या०॥बोल बोलयति बुलमज्जने पचाद्यच्॥गधरस गधवान्
रसोऽस्य राजदन्तादित्वाद्रसगधोपि इतिस्वामी॥ प्राण प्राणित्यनेनवा अनप्राणने अच्घञ्वा॥ प्राणोत्तन्मारुतेबालेकाव्यजीवेऽनिलेबले पुल्लिग पूरि
तेवाच्यलिग पुम्भूम्नि चासुषु पिड पिडते पिडोदृदेजपापुष्पेगोलेबोलेगसिल्हयो कबलेपिडेवर्षभैकदेशाइति॥गोरस गाजलस्यति षोतकर्मणि गो
रसइतिमुकुट-गोपइतिस्वामी पठतिइतिशेष तत्र गो जलात्पाति पारक्षणे॥रस रस्यति रस्यतेनेनवा रसआस्वादने अच्घञ्वा गोपेउत्पत्तोरसो-
स्येतिसमरूत्तमपीतिस्वामी पञ्चगधरसस्य रक्तयाबोलइतिख्यातस्य १०५

डिडीर डिडीतिशब्दमीरयति हिंडीरइत्यपि तत्रहिंडीति ईरगतौ कंपने कर्मण्यण् हिडिरइतिशब्दरत्नावल्यां॥अब्धिकफ. अब्धेःकफइव॥फेन स्फायने स्फायीट-
स्नो फनर्भीनोइतिसूत्रेणव्युत्पादित· त्रीणिसमुद्रफेनस्य॥सिंदूरं स्यंदते सिंदूप्रस्रवणे खर्जूरादि सिंदूरस्तरुभेदेस्यात्सिंदूररक्तचूर्णके सिंदूरीरोचनारक्तचेलिका
धातुकीधुन्वेत्य०॥नागसभव नागात्सीसात्संभवोस्य द्वे सिंदूरस्य शेंदूरइतिख्या०॥नाग नगेभाव नागंनपुंसकेरंगेसीसकेकरणांतरे नाग पुन्नागमातंगक्रूराचरिषु-
तोदरे नागकेशरस्पुन्नागनागदंतप्रभेदके देहानिलप्रभेदेचश्रेष्ठेस्यादुत्तरस्थिति·॥सीसक सिनोति षिञ्बंधने क्विप् आगमानित्यत्वात्तुगभाव इस्यति ततःक
र्मधारय स्वार्थेक ॥योगेष्ट योगेधातुसंबधेइष्टं॥वप्र उप्यते डुवप्बीजसंताने सुकुटस्तत्रवर्धमिति वर्धते वृधुवर्धने रन् चत्वारिसिसेइतिख्यातस्य॥त्रपु त्रप

डिंडीरोब्धिकफःफेनःसिंदूरंनागसंभवं नागसीसकयोगेष्टंवप्राणित्रपुपिच्चटं १०५ रंगवंगेअथपिचुस्तूलोऽथकमलोत्तरं॥ स्या
त्कुसुंभंवन्हिशिखंमहारजनमित्यपि १०६ ने त्रपूषलज्जायां उप्रत्ययः रंगसीसकयोस्त्रपुरितिरुद्रः॥पिच्चट पिच्चयति पिच्चतेवा पिच्चछेदने
अच् टेकतेर्ड इत्याद्युत्थं पिच्चटोनेत्ररोगेस्यात्क्लीबंसीसकरंगयोरितिविश्व. १०५ रंगं रगति रगिगतौ पचाद्यच् रंगःसीसकरंगयो. वार्तिकेपिचकार्पासेपुं
भूम्निनीवृदतरइतिकोशांतरेच॥वंगं वंगति वगिगतौ पचाद्यच् वगत्रपुणिसीसेचेतिहैम. चत्वारिवगस्य कथिलइति ॥पिचुः पिचति पिचुमर्दने मृगय्वा-
दिः पिचुनोकुष्ठभेदेचकर्पेतूलेस्वरांतरइतिविश्वमेदिन्यौ॥तूल तूलयति तूल्यतेवा तूलनिष्कर्षे अच्घञ्वा तूलस्याब्रह्मदारुणि द्वेकार्पासस्य॥कमलो
त्तर कमलादुत्तर॥कुसुंभं कुस्यति कुससंश्लेषणे उंभप्रत्यय· कुसुंभोहेमनिमहारजतेचकमंडलावित्यु०॥वन्हिशिखं वन्हिवच्छिखास्य॥महारजनं
रज्यतेवस्त्राद्यनेन महच्चतद्रंजनंच महारजनमुद्दिष्टंशातकुंभकुसुंभयोः चत्वारिकुसुंभस्य १०६

गेषकवल मेषलोमकृत कवल शाकपार्थिवादि॥ऊर्णायु ऊर्णास्यास्ति ऊर्णायायुस् ऊर्णायुर्नाक्षिणेभागेमेषकवलमेषयोरितिविश्व ऊर्णायुरुदत पुंसि द्वे मेषकवलस्य॥शशोर्ण शशस्योर्णा शशोर्णकारणकारमितिचद्रगोमिलिंगानुशासनात्क्लीबत्व॥शशलोम शशस्यलोम द्वेशशलोम्न॥मधु मन्यते मनज्ञाने फलिपाटाति उणादिसूत्रेणसाधु मधुपुष्परसेक्षौद्रेमधेनात्तुमधुद्रुमे वसन्तेदैत्यभिच्चैत्रेस्याज्जीवत्यात्तुयोषितीतिविश्वगेदिन्यौ॥क्षौद्र क्षुद्राभिर्मक्षिकाभिकृत अण्प्रत्यय॥माक्षिक मक्षिकाभिःकृत क्षौद्रंतुमधुनीरयोरितिहेमचद्र आदिनाभ्रामरपौत्तिकादिग्रहण॥मधूच्छिष्ट मधुनाउच्छिष्यते सिक्थक सिच्यति सिच्यतेवा सिचक्षरणे थक्स्वार्थेक द्वेमेणइतिरव्या॰ १॰७ मन शिला मन शब्दवाच्याशिला मन शिलइतिद्विरूपकोश॥मनोगुप्ता मनसागुप्ता॥

मेषकवलऊर्णायु शशोर्णशशलोमनि मधुक्षौद्रमाक्षिकादिमधूच्छिष्टतुसिक्थक १०७ मन शिलामनोगुप्तामनोह्वानागजिह्विका नेपालीकुनटीगोलायवक्षारोयवाग्रज १०८ पाक्योथस्व र्जिकाक्षार कापोत सुखवर्चक मनोह्वाना मनशब्दे नह्वयते कथ्यन्ति देन्न्शब्दे आतइतिभट॥नागजिह्विका नागानाजिह्वेव चलारिमन शिलाया॥नैपाली नेपालेभवा भवार्थेण् नैपालीमन शिलास्यात्सुवहानवमाल्यपीतिविश्व॥कुनटी कौनटति नटअवस्यदने इन्गोरादि यद्वा कुत्सितानटीव॥गोला गादीभिलाति कप्रत्यय गुड्यतेवा गुडवेष्टने डलयोरैक्य गोलागोदावरीसख्यो कुनटीदुर्गयो स्त्रिया पात्राजनेमडनेवालिंजरे वालखेलने इयोर्लस्त्र्यापुमान्कपेकपसुक्तेभिधेयवत् त्रीणिनेपालदेशोद्भवायामन शिलाया सप्तैकार्थाइत्येके॥यवक्षार यवानाक्षार॥यवाग्रज यवाग्राज्जायतेस्म १०८ पाक्य पाकेसाधु त्रीणिजवखारइतिरव्या॰॥स्वर्जिकाक्षार स्वर्जिकारसजक्षार शाकपार्थिवादि स्वर्जिकादग्धाक्षार्थतइतिस्वर्जिकाक्षार स्वर्जिकाक्षारइतिरामनाथ॥कापोत कपोतवर्णोस्यास्ति॥सुखवर्चक सुखवर्चयतिवर्चदीप्तौ कुन्॥

सौवर्चलं सुवर्चलायाइदं तस्येदमित्यण् अथसौवर्चलंसर्जक्षारेचलवणांतरइत्यः॰॥ रुचक रोचतेऽनेन रुचदीमावभिप्रीतोच रुचकोबीजपूरेचनिष्केदंत कपोतयोः नद्योः स्वर्जिकाक्षारेप्यश्वाभरणमाल्ययोः सौवर्चलेपिमंगल्यद्रव्येपिकटकेपिचेतिकोशांतरं द्वेक्षारभेदस्य संचलखारइतिख्यातस्य प्रागुक्तम- पिक्षारप्रसंगात्पुनरुक्तं पंचापिसर्जिकाक्षारस्येतिस्वभूत्यादयः॥ त्वक्क्षीरी त्वचोवंशात्क्षीरमस्याः॥ वंचरोचना रोचतेनद्यादिः वंशस्यरोचना वंशलोचने तिहेमचंद्रः त्वक्क्षीरीवंशजाशुभ्रावशक्षीरीतुवैष्णवीतिशाश्वतः द्वेवेणुजन्योषधिविशेषस्यवंशलोचनइतिख्यातस्य १०९ शिग्रुजं शिग्रोर्जायितेस्म ड प्रत्ययः॥ श्वेतमरिचं श्वेतंमरीचमिव द्वेसोभांजनबीजस्य शेवग्यानेंबीजइति॥ ऐक्षवंमूलमोरटंस्यात् सुरसवेष्टने शाकादिष्वोटन् इक्षोरिदं एकं॥

**सौवर्चलंस्याद्रुचकंत्वक्क्षीरीवंशरोचना १०९ शिग्रुजंश्वेतमरिचंमोरटंमूलमैक्षवं ग्रंथिकंपिप्पलीमूलंचटिकाशिरइत्य पि ११० गोलोमीभूतकेशोनापत्रांगंरक्तचंदनं**

ग्रंथिकं ग्रंथिरेव स्वार्थेकः ग्रंथिकपिप्पलीमूलेगुग्गुलुग्रंथिपर्णयोः करीरेपुंसिदेवज्ञेसह देवाख्यपांडवइतिविश्वः॥ पिप्पलीमूलं पिप्पल्याःमूलं॥ चटिकाशिरः चटिकायाःशिरइव चटकाशिरइतिहेमचंद्रः व्यस्तमपि शिरोनापिप्पलीमूलइ- तिमेदिनी त्रयंपिप्पलीमूलस्य पिपळीमूळइतिख्यातस्य ११० गोलोमी गोरिवलोमान्यस्याः गोलोमीश्वेतदूर्वायांस्याद्वचाभूतकेशयोरितिविश्वः॥ भूतके शीः भूतानाकेशइव द्वेजटामांसीइतिप्रसिद्धायाः॥ पत्रांगं पत्राण्यंगेऽस्य पत्रांगनद्वयोर्भूर्जेपद्मकेरक्तचंदनइतिविश्वः॥ रक्तचंदन रक्तचंदनमिव रक्त सारत्वात् द्वेरक्तचंदनतुल्यस्य रक्तसारद्रव्यस्य कृष्णाशिंसव पतंगइतिचख्यातस्य॥

के त्रिकटु त्रयाणां कटूनां समाहारः गनपुंसकं ॥ त्र्यूषण ऊषति ऊषदाहे दशुपधेतिके भामेकृत्यल्युटइतिल्युट् पात्रायतस्येतिस्त्रीत्वाभावेनपुंसकमितिसाधु त्रया
णां ऊषणानां समाहारस्त्र्यूषणं गनिद्विरूपकोश ॥ व्योष विशेषेण ओषति उपदाहे पचाद्यच् त्रीणि शुण्ठिपिप्पलीमरीचानां समाहारस्य ॥ त्रिफला त्रयाणां फलानां
समाहारः अजादित्वाट्टाप् त्रफलाइत्यपि तत्र तृफति तृफतृप्तौ त्रिफलात्फलानेतित्रिकाण्डशेष ॥ फलत्रिक फलानांत्रिक हरीतक्यामलकविभीतकफलानांस
माहारस्य १११ इतिवैश्यवर्ग शूद्र शोचति शुचशोके शुचेर्दश्चेतिरक् दीर्घश्चेतिसाधु ॥ अवरवर्ण अवरोऽधमोवर्णोऽस्य अवरश्चासौवर्णश्चेतिवा ॥ वृष
ल वृष्यते वर्षतिवा वृषुसेचने वृषधर्मलुनातिवा लूञ्छेदने अन्येष्वपीतिड वृषलातिवा ॥ जघन्यज जघन्यात्पादाज्जात जनीप्रादुर्भावे चत्वारिशूद्रस्य

त्रिकटुत्र्यूषणव्योषत्रिफलातुफलत्रिक १११ इतिवैश्यवर्ग शूद्राश्चावरवर्णाश्चवृषलाश्चजघन्यजा आचाण्डालात्तुसंकी
र्णाअवष्ठकरणादय १ शूद्राविशोस्तुकरणोऽवष्ठोवैश्याद्विजन्मनो ॥ चण्डालोब्राह्मण्यांशूद्राज्जात तमभिव्याप्यवक्ष्यमाणा अवष्ठकरणा
दयः अवष्ठश्चकरणश्चावष्ठकरणौ आदीयेषांते आदिशब्दात् उग्रादय संकीर्णा प्रतिलोमानुलोमजत्वान्मिश्रा संकीर्यंतेस्म कृविक्षेपे एक १ शूद्राविशो शू
द्राचविट्चतयो सुतइतिवक्ष्यमाणेनान्वयः करणइत्येक तत्रेत्य किरति कीर्यतेवा कृवडुलमन्यत्रापीतिखुन् सतुलेखनवृत्ति स्यात्करणहेतुकर्मणो. वाल्वादौ
हंसलेपेनृत्यगीतप्रभेदयो क्रियाभेदेद्रियक्षेत्रकारसवेशानेषुच कायस्थेसाधनेक्लीबपुंसिशूद्राविशो सुतेइतिविश्व ॥ वैश्यायांब्राह्मणाज्जात सुतोऽवष्ठ वैश्या
चाद्विजन्मानतयो सुत अवष्ठ अवतिष्ठति अवष्ठोदेशभेदेपिविप्राद्वैश्यासुतेपिच अवष्ठाप्यम्बलोण्यास्यात्पाठायूथिकयोरपीतिविश्व सतुचिकित्सावृत्ति ॥

शूद्राक्षत्रिययोः शूद्राचक्षत्रियश्चतयोःसुत उग्र उच्यते उच्चसमवाये सतुशस्त्रवृत्तिः उग्रःशूद्रासुतेक्षत्रात्रुद्रेपुंसित्रिषूत्कटे॥ क्षत्रियाविशोः क्षत्रियाविट्चत
योःसुत. मागध मगध्यति मगधवेष्टने मागधोमगधोद्भूतेशफ़कुजीरकबंदिनोः वैश्यतःक्षत्रियापुत्रेमागधीस्यात्तुपिप्पली यूथीभाषाविशेषश्चेतिहेमचंद्रः स-
तुराजादिस्तुतिपाठवृत्तिः एकैकं २ अर्याक्षत्रिययोः अर्याचक्षत्रियश्च तयोःसुतः माहिष्यः महिष्यासाधु तत्रसाधुरितियत् अविमत्योष्टिषच् स्वार्थेष्यत्र्
यद्वा मह्यते महतिवा मह पूजायां अस्यज्योतिषंशाकुनंशास्त्रंचरवरशास्त्रंचजीविका॥ अर्यावैश्या अर्याशूद्रयोः अर्याचशूद्रश्चतयो.सुतःक्षत्ता क्षदति
क्षद्यतेवा क्षदसभृतौ तस्यवृत्ति. पापर्द्धिकादि क्षत्ताशूद्रात्क्षत्रियाजेप्रतीहारेचसारथौ भुजिष्यातनयेपिस्यान्त्रिषुक्तावेधसो.पुमान्॥ ब्राह्मण्यांक्षत्रि-

शूद्राक्षत्रिययोरुग्रोमागधःक्षत्रियाविशोः २ माहिष्योर्याक्षत्रिययोःक्षत्तार्याशूद्रयोःसुतः ब्राह्मण्यांक्षत्रियात्सूतस्तस्यां
वैदेहकोविशः ३ रथकारस्तुमाहिष्यात्करण्यांयस्यसंभवः स्याच्चंडालस्तुजनितोब्राह्मण्यांवृषलेनयः ४

याज्जातःसूतइत्युच्यते
सूयतेस्म षूङ्प्रसवेक्तः तस्य गजबंधनमश्वानांवाहनंकर्मसारथ्येरित्यादिर्जीविका सूत.पारदसारथ्योरित्युक्तत्वात् तस्यांब्राह्मण्यांवैश्याज्जातोवैदेहकः
विदेहेषु भवः विदेहस्यापत्यंवा स्वार्थेकः वैदेहिकोवाणिजकेशूद्रावैश्यसुतेपिचेतिविश्व. चतुःषष्टिकलाकर्मरौक्ष्यंतदुपजीविका पण्यांगनानांराज्ञांचकुर्या
त्संगतदिच्छया उपजीव्यंतुतास्वेवेति एकैकं ३ करण्यांशूद्रविशोःसुतायांमाहिष्याद्वैश्याक्षत्रिययोः जाताज्जातोरथकारःस्यात् रथंकरोति रथकारस्तुमा
हिष्यात्करणीजेचतक्षणि अस्यवर्तनंतु रथकर्मेधनादिभिः॥ ब्राह्मण्यांवृषलेनशूद्रेणयउत्पादितः सचांडालःस्यात् चांडालइत्यपि चंडति चडिकोपे मृत
चेलेनिर्द्धिमांसैः श्मशानेतस्यजीवनमित्येकैकं ४

श्रो कारु करोति कारुस्तुकारकेशिल्पेनिश्वकर्मणिशिल्पिनीतिहेमचन्द्रः॥शिल्पी शिल्पमस्यास्ति शिल्पन्तुवाच्यवत्कारोस्त्रियाकोलदलोषधौ तक्षाचतन्त्रवायश्च नापितोरजकस्तथा पञ्चमश्चर्मकारश्चकारव शिल्पिनोमता ३चित्रकादे ने सहजातिभि सहते श्रेणि श्रयति श्रीयतेवा भिन्नसेवाया श्रेणि स्त्रीपुंस- यो पङ्क्तौसमानोशिल्पिसहतो द्वयो स्त्रियापुंसिच एकसजातीयशिल्पिसघस्य॥कुलक कोलति कुलसंस्त्याने कुलकन्तुपटोलस्यात्सव इस्त्रोकसहतो पुंसिवल्मीककाकेडुकुलश्रेष्ठेषुकथ्यते कुलिकइतिपाठेतु कुलमधीतत्तेनास्यास्ति कुलिकोनागभेदेस्याद्दुमेदेकुलसत्तमइतिमेदिनी॥कुलश्रेष्ठी कुलश्रेष्ठत्वम स्त्यस्य द्वेकारुसघेमुख्यस्य शिल्पिभेदानाह मालाकार मालाकरोति मालास्याग्नि। यद्वा मालाशिल्पमस्य मालिकाससलापुन्नोग्रीवालङ्करणेपिच पुष्पमा-

कारु शिल्पीसहतेस्तैर्द्वयो श्रेणि सजातिभि कुलक स्यात्कुलश्रेष्ठीमालाकारस्तुमालिक ५ कुम्भकार कुलाल स्यात्पलग

ण्डस्तुलेपक तन्तुवायकुविद स्यात्तुन्नवायस्तुसौचिक ६ ल्येनदीभेदेपक्षिमात्रेतुमालिक इमाळोइति॰५कुम्भकार कुम्भकरोति कुम्भकारीकु म्भ्यांचपुंसिस्याद्दरकारकइतिविश्व कुम्भ्मिलाल्यति लडविलासे डलयोरैक्य कुलमालातिवा कुलमलतिवा घूकेकुलाल कुकुभेकुम्भकारेजनानेर द्वेकुम्भार- इति॥पलगण्ड पलमासनत्तुल्येनमृदादिना गण्डतिवदनैकदेशमिवकरोति गण्डिवदनैकदेशे॥लेपक लिपति लिपउपदेहे द्वेसुधादिलेपकारस्यगृहादौ॥तन्तुवाय त न्तून्वयति वेञ्तन्तुसताने तन्त्रवायपाठेतु तनवोवितन्यतेयस्मिन्तत्तन्त्र तद्वयति॥कुविद कुत्सितवाकुत्सितवाविदति विद्लाभे कुपिदइत्यपि कुपक्रोधे द्वेपटानानि- र्मातरि कोष्ठीइतिख्याते॥तुन्नवाय तुन्नछिन्नवयति वेञ्॥सौचिक सूच्यावानशिल्पमस्यसौचिक शिल्पमितिठक् द्वेकञ्चुक्यादेर्निर्मातरि शिंपीइतिख्याते रफूवालाइत्यपि ६

रंगाजीव· रंगेणाजीवति जीवप्राणधारणे रंग·श्वेतपीतरक्तादिक·आजीवो॰स्येतिवा॥चित्रकरः चित्रंकरोति दिवाविभेतिट· हे चितारीइतिरव्यातस्य॥शस्त्रमा
र्जः शस्त्रंमार्ष्टीति मृजूशब्दो॥असिधावक· असिंधावति धावुगतिशुद्ध्यो· कर्मण्यण् कन् हे सिकलकरइतिरव्यातस्य॥पादूकृत् पद्यतेऽनया पदगतो ऊःसच
णित् पादू पादत्राणंकरोति तांत·॥चर्मकरोति चर्मकार· कर्मण्यण्॥व्योकार· व्योकरोति व्योइत्यव्यय लोहबीजवाचीतिश्रीभोजराज·॥लोहकारः लोहक
रोति हे लोहारइतिरव्या॰ ७ नाडिंधमः नाडीवंशनलीधमति ध्माशब्दाग्निसयोगयो· नाडीमुष्ट्योश्चेतिरवच् रिवत्यनव्ययस्येतिह्रस्व·मुम्॥स्वर्णकार स्वर्ण-
करोति॥कलाद कलामादत्ते मूलविभुजादि॥रुक्मकारक रुक्मंकरोति चत्वारिस्वर्णकारस्यसोनारइतिरव्या॰॥शांखिक· शंख·शिल्पमस्य॥कांबविकः क-

रंगाजीवश्चित्रकरःशस्त्रमार्जोसिधावकः पादूकृच्चर्मकारःस्याद्व्योकारोलोहकारकः ७ नाडिंधमःस्वर्णकारःकलादोरुक्मकार
कः स्याच्छांखिक·कांबविकःशौल्बिकस्ताम्रकुट्टकः ८ तक्षातुवर्धकिस्त्वष्टारथकारस्तुकाष्ठतट् ग्रामाधीनोग्रामतक्षःकौटतक्षो
नधीनकः ९ बोर्विकारोस्यास्तीति तस्यविकारइत्यण् ततःशिल्पमितिठक् हे कासारइतिरव्या॰॥शौल्बिक शुल्बंघट्टनंशिल्पमस्य॥ताम्रकुट्टकः ताम्रं
कुट्टयति कुट्टछेदने हेताबटइतिरव्या॰ ८ तक्षा तक्ष्णोति तक्षूतनूकरणे कनिन्॥वर्धकि· वर्धति वर्धछेदने वर्धकर्षति कषहिंसायां बाहुलकाड्डिः॥त्वष्टा त्वक्षति
त्वक्षूतनूकरणे तृन्प्रत्ययः॥त्वष्टापुमान्देवशिल्पितक्ष्णोरादित्यभिद्यपि॥रथकार रथंकरोति अण्॥काष्ठतट् काष्ठतक्षति पंचवर्धकेः सुतारइति॰॥ग्रामाधीनः
ग्रामैर्धीन·॥ग्रामतक्ष· ग्रामस्यतक्षा ग्रामकौटाभ्यांचतक्ष्णइतिटच् इतिद्वेगावचासुतारइति॰॥अनधीनक नाधीन·स्वार्थेक॥स्वाधीनोयस्तक्षासकौटतक्ष· -
स्यात् कुत्स्याभव· कौरस्थ्वासौतक्षाच एकंस्वतंत्रसुतारइत्यस्य ९

क्षुरी क्षुरो॰स्यास्ति ॥ मुंडी मुंडकरोति ॥ दिवाकीर्ति दिवाकीर्तिरस्य दिवाकीर्तिस्तु मुसिस्यान्नापितातावसाययोरितिविश्व ॥ नापित नापोसज्जातोस्य न आपियतिस्मवा पिगतो ॥ अनावसायी नरवानामतमवसातुशीलमस्य अवपूर्वात्सोतकर्म णिइत्यत णिनौसुगागम पञ्चनापितस्यनाहावीइतिरव्या॰॥ निर्णेजक निर्णेनेक्ति निजिरशब्दो ॥ रजक रजति रंजरागे हेवस्त्राणाधावकस्य परोटइतिरव्यातस्य॥ शौंडिक शुंडासुरापण्यमस्य नदस्यपण्यइतिटक् ॥ मडहारक मडस्सुरायरसहरति हे शौंडिकस्य मद्योपजीविन कलालइतिरव्यातस्य १० जाबाल जवमलति आडातिवा अलभूषणादौ लाआदाने ॥ अजाजीव अजाआजीवोजीविकास्य हे अजापालस्यमेटपाळधनगरइतिरव्या॰ ॥ देवाजीव देवैराजीवितुशीलमस्य इत्याद्युत्य देवाजीवीत्यपि ॥ देव-

क्षुरीमुंडीदिवाकीर्तिनापितान्तावसायिन निर्णेजक स्याद्रजक शौंडिकोमुडहारक १० जाबाल स्यादजाजीवीदेवाजीव
स्तुदेवल स्यान्मायाशाबरीमायाकारस्तुप्रतिहारिक ११ शैलालिनस्तुशैलूषाजायाजीवा कृशाश्विन

ल॰ देवानुजीविकार्थं लाति देवलक्षणयातस्त्वलातिवा हे देवोपजीविन गुरवइति ॥ माया विश्वमातियस्या मिमीतेवा मामाने माङ्मानेवा मायास्याच्छाबरीबुध्यामयि पीता बरेसुरइत्यु॰॥ शाबरी शबरारव्यदैत्यस्येय हे इंद्रजालादिमायाया गारुडइतिरव्यातायाः ॥ मायाकार मायाकरोति ॥ प्रातिहारिक प्रतिहारोव्याज प्रयोजनमस्य प्रयोजनमितिटक् हे इंद्रजालिकस्य ११ शैलाली शिलालिनाप्रोक्तनटस्सूत्रमधीयते ॥ शैलूष शिलुषस्यऋषेरपत्य अण् नटेविल्वेचशैलूषइतिताल-व्यादिमूर्धन्यातेरप्रस ॥ जायाजीव जाययाजीवति जीवप्राणधारणे कृशाश्वी कृशाश्वेनप्रोक्तनटस्सूत्रमधीयते कर्मदकृशाश्वादिनि ॥

भरतः भरतस्यमुनेःशिष्यः संज्ञापूर्वकत्वान्नवृद्धिः भारतइत्यपि रंगावतारीशैलूषोनटोभरतभारताविनिवाचस्पतिः॥ नटः नटति षट्नटेषुनटवाइतिख्याते-
षु॥चारणः चारयतिकीर्त्तिं चरगतौ॥ कुशीलवः कुत्सितंशीलमस्त्यस्य कुशीलवातिवा द्वेकथकानांनटविशेषाणां १२ मार्दंगिकाः मृदंगःतल्लक्षणयातद्वादनं
शीलमस्तियेषां॥ मौरजिकाः मुरजःशिल्पंयेषां द्वेमृदंगवादनकुशलानां मृदंगीपखवाजीइतिख्या०॥ पाणिवादाः पाणिंवादयंति॥ पाणिघाः पाणिंघ्नंति द्वे
येपाणितलेनैवपाणयंतरेमृदंगादिध्वनिमनुकुर्वंतितेषां॥ वेणुध्माः वेणुंधमंति ध्माशब्दादौ वैणविकाः वेणवंशिल्पमस्तियेषां द्वेवेणुवादिनां॥ वीणावादाः वी-
णांवादयंति॥ वैणिकाः वीणाशिल्पमस्तियेषां वेणुध्माआदंतःसोमपावत् द्वेवीणावादिना विणेकरीइतिख्यातानां १३ जीवांतकः जीवानामंतकः जीवंतिकइ-

भरताइत्यपिनटाश्चारणास्तुकुशीलवाः १२ मार्दंगिकामौरजिकाःपाणिवादास्तुपाणिघाः वेणुध्माःस्युर्वैणविकावीणावादास्तु
वैणिकाः १३ जीवांतकःशाकुनिकोद्वौवागुरिकजालिकौ वैतंसिकःकौटिकश्चमांसिकश्चसमंत्रयं १४ भृतकोभृतिभुक्कर्मक
रोवैतनिकोपिसः वार्तावहोवैवधिकोभारवाहस्तुभारिकः १५

त्यपि॥ शाकुनिकः शकुनान्हंति द्वेपक्षिणांहंतरि पक्ष्यांचापारधीइति
ख्याते॥ वागुरिकः वागुरयामृगबंधीन्याचरति॥ जालिकः जालेनचरति॥ वैतंसिकः वीतंसेनमृगपक्ष्यादिबंधनोपायेनचरति॥ कौटिकः कूटेनमृगादिबंधनयं
त्रेणचरति॥ मांसिकः मांसंपण्यमस्य त्रयंमासविक्रयजीविनःखाटकीइति० १४ भृतकः भ्रियतेस्म भृञ्भरणे यद्वा भृतिंकरोति भृतिभुक् भृतिंवेतनंभु
क्ते॥ कर्मकरः कर्मकरोति कर्मणिभृतोइतिटः॥ वैतनिकः वेतनेनजीवति चत्वारिवेतनोपजीविनः चाकरमजूरइतिप्रसिद्धस्य॥ वार्तावहः वार्तयावहः पचाद्यच्॥ वै
वधिकः विविधंवहति विवधिकइत्यपि द्वेवार्तावहके कावडीइतिख्याते॥ भारवाहः भारवहति॥ भारिकः भारोस्तिवात्यत्वेनास्य द्वेओझेकरीइतिख्या० भारीति-
नांतोप्यन्यत्र १५

विवर्ण विगतोवर्णोयस्ययस्माद्वा वर्णोद्विजादौशुक्लादौस्तुतौरूपयशोक्षरइतिविश्व ॥पामर पामानरति यद्वा पाधर्मं म्रियतेयेन पुंसिसंज्ञायांघ ॥नीच उ
प्रत्ययांत ॥ प्राकृतः प्रकृतौभवः यद्वा प्रकृष्टमकृतमकार्यमस्य ॥पृथक्जन सज्जनेभ्य पृथक्भूतोजन शाकपार्थिवादिवत् ॥निहीन निश्चयेनहीन ॥अपस
द अपकृष्टमपकृष्टेवासीदति षद्लृविशरणादौ अपशेदइतिभरतमालायां ॥जाल्म जालयति जलाच्छादने इतिधातूनामनेकार्थत्वात् जालंकरोति जाल्म
स्तुपामरेत्युक्तत्वात् असमीक्ष्यकारिणिचेतिहैम ॥क्षुल्लक क्षुयलाति स्वार्थेकन् यद्वा क्षुणोति क्षुद्यतेवा क्षुदसंपेषे यद्वा क्षुधालक्ष्यते लकआस्वादने क्षु-
ल्लुकइत्यपि तत्रोक्तंरभसकोशे क्षुल्लकस्त्रिषुनीचेल्पइति ॥इतर इनाकामेनतीर्यते क्रुदोरप् इतगमनरातिवा यद्वा इतेनज्ञानेनरीयते इत्याधूल्य दशनीचस्य १६

विवर्णपामरोनीचप्राकृतश्चपृथक्जन निहीनोपसदोजाल्म क्षुल्लकश्चेतरश्चस १६ भृत्येदासेयदासेरदासगोप्यकचेटका ॥
नियोज्यकिंकरप्रेष्यभुजिष्यपरिचारका १७ पराचितपरिस्कंद भृत्य भ्रियते भृञ्भरणे भृत्यःपोष्येभृतोभृत्येइतिविश्व ॥दासेय दास्या-
अपत्य दासेर उक्तार्थेढ्रक् ॥दासः दसयति दस्यतेवा दसिदंशे दास्यते दासृदाने घञ् दाशइतितालव्यांतोऽपि ॥गोप्यक गुप्यते गुपूरक्षणे स्वार्थेक गोप्यका-
यतिवा कैशब्दे ॥चेटक चेट्यते चिटपरप्रेष्ये चेडकइत्यपि ॥नियोज्य नियुज्यते युजिर्योगे प्रयोज्यनियोज्यौशक्यार्थेइतिसाधु ॥किंकर किंचित्कुत्सित
वाकरोति ॥प्रेष्य प्रेष्यते इषगतौ प्रैष्यइत्यपि ॥भुजिष्य भुक्तेस्वाम्युच्छिष्ट ॥परिचारक परिचरति चरगत्यादौ एकादशभृत्यस्य १७ पराचित परैरा
चीयते वर्ध्यते चिञ्चयने पराजितोपि तत्रैस्य परैराजीयतेस्म भूतेक्त ॥परिस्कंद परिस्कंदति स्कंदिर्गत्यादौ पचाद्यच् परेश्चेतिवाषत्व परिष्कंद परिस्कंदश्च
इत्यपि ॥

परजात· परस्माज्जातः परपोषितत्वात् इत्याद्यूत्व ॥ परैधित परैरेधित· ॥ संवर्धितः चत्वारि औदासिन्येनपरस्योषितस्य ॥ मंद. मंदते स्वपितिमदिस्तुत्यादौ पचाद्य
च् मंदोतीक्ष्णेचमूर्खेचस्वैरेचाभाग्यरोगिणोः अल्पेचत्रिषुपुंसिस्याद्धस्तिजात्यंतरेशनाविति विश्व· ॥ तुंदपरिमृज. तुदंउदरंपरिमार्ष्टि मृजूशुद्धौ तुंदशो
कयोरितिक. ॥ आलस्यः नलसति लसश्लेषणे अलसमस्त्यस्य अलस. अलसएवआलस्य· अर्शआद्यच् ॥ शीतक. शीतंकरोति ॥ अलसः ॥ अनुष्णः नउ-
ष्ण. अनुष्णः उष्णोदक्ष उष्णोग्रीष्मेपुमान्दक्षाशीतयोरन्यलिंगक आलसइत्यपि षट् आलशीइति॰ १८ दक्ष दक्षते दक्षवृद्धौ शीघ्रार्थेच दक्षःप्रजापतौ-
कष्टवृषभेकुक्कुटेपथि द्रुमेदक्षातुमेदिन्यामितिविश्व· ॥ चतुर· चतति चत्यतेवा चतेयाचने उरच् ॥ पेशलः पेशनं पिशसमाधौ घञ् पेशंलाति इत्याद्यूत्वं ॥ पटुः

परजातपरैधिताः मंदस्तुंदपरिमृजआलस्यःशीतकोऽलसोऽनुष्णः १८ दक्षेतुचतुरपेशलपटवःसूत्थानउष्णाश्च चंडाल
प्लवमातंगदिवाकीर्तिजनंगमाः १९ निषादश्वपचावंतेवासिचांडालपुक्कसाः पाटयति पटुर्दक्षेचनीरोगेचतुरेष्वभिधेयवत् ॥ सूत्थानः
सुष्टुउत्थानमुद्योगोऽस्य ॥ उष्णः उष्णत्वंशीघ्रकारित्वमस्यास्ति अर्शआद्यच् षट्दक्षस्य ॥ चंडाल· चंडते चडिकोपे ॥ प्लव. प्लवते प्लुङ्गतौ प्लवःप्लक्षेप्लुतौकपौ
॥ मातंगः मतंगस्यापत्यं मतंगस्यायंवा तस्येदमित्यण् ॥ दिवाकीर्तिः दिवाकीर्तिरस्य ॥ जनंगमः अधार्मिकान्जनान्गच्छति जनेभ्योगच्छतिवा गमश्चेतिखच् ज
लंगमइत्यपि १९ निषादः निषीदतिपापमस्मिन् हलश्चेतिघञ् षद्लृविशरणादौ निषादःस्वरभेदेपिचडालेधीवरातरइत्युक्तत्वात् ॥ श्वपचः श्वानपचति पचा-
द्यच् श्वपाकइत्यपि ॥ अंतेवासी ग्रामादेरंतेवसति चांडालः चंडंआलाति प्रज्ञाद्यण् ॥ पुक्कसः पुक्कुत्सितंपुण्यवापुमासवाकसति कसगतौ पुक्कस श्वपचेधमेइ
तिमेदिनी दशचांडालस्य ॥

अत्रावांतरभेदो‧स्तिकिंचित्सोनाहृत किरातादयस्त्रयोम्लेच्छजातयश्चंडालानांभेदा किरात अतति अतसातत्यगमने किरतिशरान् किरश्चासौअत श्च किरातोम्लेच्छभेदेस्यान्मुनिवेल्पतनाअपि स्त्रियांचामरवाहिन्यांकुट्टनीदुर्गयोरपि॥शबर शवति शवगतौ शवरातिवा शवरोम्लेच्छदेशेऽन्वपानीयेशा वरेपिचेतिविश्व ॥पुलिंद पोलति पुलमहत्वे पुलिक कथ्यतेम्लेच्छेपुलिंदोपिनिगद्यतइतितारपाल पुलिंदपनशवरइतिरत्नकोश ॥म्लेच्छ म्लेच्छति म्ले च्छअव्यक्तेशब्दे एतेसर्वेवनचरा स्यु तदुक्तंच गोमांसभक्षकोयस्तुलोकबाह्यंचभाषते सर्वाचारविहीनोसौम्लेच्छइत्यभिधीयते सूतसंहितायामपि ब्राह्मण्यां वैश्यतोजात क्षत्राभवतिनामतः अस्यामनेनचार्येणम्लेच्छोविप्र प्रजायतइति २० व्याध विध्यति व्यधताडने॥मृगवधाजीव मृगवधेनाजीवति॥मृगयु मृगा-

भेदा किरातशबरपुलिंदाम्लेच्छजातय २० व्याधोमृगवधाजीवोमृगयुर्लुब्धकोपिस कौलेयक सारमेय कुक्कुरोमृगदंशक २१ शुनकोभषक श्वास्यादलर्कस्तुसयोगित

न्यधार्थयाति याप्रापणे मृगयुःपुंसिगोमायौव्याधेचपरमेष्ठिनि॥लुब्धक लुभ्यतेस्म लुभगार्द्धे क्त स्वार्थेक चत्वारिव्याधस्य॥कौलेयक कुलेभव कुलकुक्षिग्रीवाभ्यइतिढकञ् कौलेयक सारमेयेकुलीनेपीतिहेमचंद्र ॥सारमेय सरमायाःअपत्य स्त्रीभ्यो ढक्॥कुक्कुर कोकते कुकआदाने कुरति कुरशब्दे कुकचासौकुरश्च कुक्कुर सारमेयेनाग्रंथिपर्णेनपुंसकमितिविश्व कुर्कुरइतिराजमुकुट कुक्कुरस्तुश्वानि श्वा- न कपिलोमंडल शुनइतिवाचस्पति ॥मृगदंशक मृगान्दशति दंशदंशने २१ शुनक शुनति शुनगतौ॥भषक भषति भषर्भर्त्सने॥श्वा श्वयति टुओश्विगति वृद्धयो सप्तश्वानस्य॥योगित प्रयोगेणउन्मत्तत्वमापित श्वाअलर्क स्यात् अलमर्क्यते अर्च्यतेवा अर्कस्तवने अर्च्यपूजायां घञ् शकंध्वादिः अलर्कोधवला र्केस्याद्योगोन्मादितकुक्कुरइतिविश्व अलर्कइतिमुकुट एक॥

योमृगयायांकुशल श्वा सविश्वकद्रुरित्येकं विश्वकसर्वद्रवति द्रुगतौ यद्वा विश्वकदते कदिआह्वानादौ विश्वकद्रुस्त्रिषुखलेध्यानाखेदाह्वनोःपुमान् एक पारधीकुत्रा शिकारीकुत्राइतिख्या०॥शुनी गौरादित्वात्ङीष् सरमास्यात् सरति सृगतौ अमप्रत्ययोबाहुलकात् २२ योग्राम्य· सूकर सविट्चरःस्यात् विषंविष्ठां चरति चरगत्या दौ एकं गावडुकरइति॥यस्तरुण पशुरजादि सवर्कर वर्कते वर्कआदाने वर्कर परिहासेस्याच्छागेसुवपशावपिइतिविश्व. वर्करोमेषशावकएत्यप्यन्यत्र एकतरुणपशु-मात्रस्य बकराइत्यादिख्या०॥आच्छोदन आच्छिद्यतेऽत्र॥मृगव्यं मृगाव्ययनेऽत्र व्ययगतौ॥आखेट आखिद्यतेऽत्र खिदत्रासे॥मृगया मृग्यतेऽत्र क्यप्प्रत्ययः मृग अन्वेषणे मृगयास्त्रियां चत्वारिपापर्द्धिःशिकारीइतिख्यातस्य २३ लुब्धयोगाल्लुब्धकसबंधात्॥दक्षिणारु· दक्षिणेपार्श्वेऽरुर्व्रणमस्य सकुरंगकोदक्षिणेर्मास्यात् द

श्वाविश्वकद्रुर्मृगयाकुशलःसरमाशुनी २२ विट्चरःसूकरोग्राम्योवर्करस्तरुणःपशुः आच्छोदनंमृगव्यंस्यादाखेटोमृगयास्त्रि यां २३ दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्माकुरंगकः चौरैकागारिकस्तेनदस्युतस्करमोषकाः २४ प्रतिरोधिपरास्कंदिपाटच्चरमलिम्लु चाः॥

क्षिणेर्ईर्मास्य एकं॥चौरः चोरण चुरस्तेये ण्यंतादच्प्रत्यय संज्ञापूर्वकत्वान्नगुणः पचाद्यचि चोरइत्यपि चोर·पाटच्चरेपिस्याच्चोरपुष्पौषधावपीतिवि श्वः॥ऐकागारिक· एकमसहायंप्रयोजनमस्य॥स्तेन स्तेनयति स्तेनचौर्ये॥दस्यु दस्यति दसुउपक्षये युप्रत्यय दस्युश्चोरेरिपौपुंसीतिहेम·॥तस्कर· तत्करोति॥मोष कः मुष्णाति मुषस्तेये ण्वुल् २४ प्रतिरोधी प्रतिरोद्धुंशीलमस्य रुधिरआवरणे सुप्यजातौणिनिताच्छील्ये॥परास्कंदी परानस्कंदितुंशीलमस्य स्कंदिरगत्यादौ॥पाटच्च-र· पाटयंश्चरति चरेरट् पृषोदरादि. पटच्चरइत्यपि चौरजीर्णपटयो. पटच्चरइतिनामानुशासनं॥मलिम्लुच मल्यते मलधारणे मलिधृतंम्लोचति म्लुचस्तेये मूलविभुजा दि. मलिम्लुचोमासभेदेचोरज्वरनयो·पुमानितिविश्व दशचौरस्य॥

चोरिका चोरस्यभाव कर्मवा मनोज्ञादित्वाद्वुञ् चोरिकेत्यपि॥स्तैन्य स्तेनस्यभाव कर्मवा स्तेनाद्यन्नलोपश्च स्तैन्यमितिष्यञन्तकेचिदिच्छति स्तेयस्तैन्यचचौर्यं स्याच्चौरिका गारकस्त्रियामितिवाचस्पति ॥चौर्य चौरस्यकर्म ष्यञ् चत्वारिचोरकर्मण ॥चौर्यधनलोभस्यात् लुप्यते लुपॢच्छेदने लोप्त्रमस्त्रुणिचोरितइतिविश्व लोतमि तिजटाधर तस्यचोरस्यधन एक २५ मृगपक्षिणा मृगाश्चपक्षिणश्चतेषांवधननिमित्तयदुपकरणपाशजालादिसवीतसइत्येव वितस्यते तसिअलंकारे घञ् उपसर्ग स्येतिदीर्घ वीतसोवधनोपायेमृगाणामपिपक्षिणा तेषामेवचविश्वासहेतो प्रावरणेपिचेतिविश्व वितसइत्यपि॥उन्माथ उन्मथ्यतेनेन मथेविलोडने हलश्चेतिघञ् उन्माथ कूटयनेस्यात्मारयौधातकेपुमान्॥कूटयंत्र द्वेमृगपक्षिवधनार्थछलेनयंत्रनिवेश्यतेनत्र स्यापच्छाइतिरव्याते॥वागुरा अवागुरते गुरीहिंसाया इगुपधेतिकेअ-

नैरिकास्तैन्यचौर्येचस्तेयलोप्त्रतुतद्धने २५ वीतसस्तूपकरणबधनेमृगपक्षिणा उन्माथ कूटयंत्रस्याद्वागुरामृगबंधनी २६ शुल्व वराटकस्त्रीतुरज्जुस्त्रिषुवटीगुण उद्घाटनघटीयंत्रसलिलोद्वाहनप्रहे २७

वाकारस्यलोप ॥मृगबधनी मृगोवध्यतेऽनया करणेल्युट् द्वेजालीरु तरज्जुविशेषे मृगानेजालेइति• २६ शुल्व शुल्वयति शुल्व्यतेवा शुल्वविसर्गे ण्यतास्च् शुल्वेत्यपि रज्जु शुल्वावराटोनेतिरत्नकोशात् स्त्रिया शुल्वतान्नेयज्ञकर्मण्या चारजलसन्निधावपीतिविश्व ॥वराटक वरमटति अटगतो अणन्तात्स्वार्थेक- शुल्ववराटकइतिपाठस्वामीचरणा पठति॥रज्जु सृज्यते सृजविसर्गे रज्जुर्वेण्यागुणेयोषिदिति विश्वमेदिन्यो॥वटी वटति वटवेष्टने वट्यतेवा वटीत्रिषुगुणेपुसिस्यान्यग्रोधकपर्दयो॥गुण गुण्यते गुणआमन्त्रणे गुणोमौर्व्यामप्रधानेरूपादौसूददद्रिये त्यागशौर्यादिस त्वादिसत्वाद्यावृत्तिरज्जुषु शुक्लाद्यावपिचुस्त्रास्त्रेतु• ॥तत्रवराटक पुंसि क्लीबेच रज्जु स्त्रिया वटीत्रिषु पचरज्जो चत्वारिदोरद त्यादिरव्याः॥प्रहे कूपात्सलिलोद्वाह न सलिलउत्ऊर्ध्वंवाह्यतेयेनतस्यउद्घाटन घटीयंत्र रहाटगाडगेइतिक्ख्यत उद्घाट्यतेनेन घटसंपाते ण्यन्तात्ल्युट घटीनांयंत्र २७

वेमा वयतितंतून्अनेन वेम्नतंतुसंताने वेमइत्यपि॥वापदड. वापस्यदडः वायदंडइतिकचित्पाठ तत्रेत्थ वायस्यदडः ढूवस्त्रव्यूतिदडस्य कोष्ट्याचेंधाटेंइतिख्यातस्य सूत्रसू
च्यते सूत्रवेष्टने सीव्यतेऽनेनवा षिवुतंतुसंताने स्त्रंतुसूचनाकारिग्रंथेतंतुव्यवस्थयोरितिहेम॰॥तंतु तन्यते तनुविस्तारे नरिसुंसितंतु. सूत्रतंतुरितिहारावल्याः संहतोपि
द्विसूत्रइतिख्यातस्य॥वाणि वाणनं वणशब्दे व्यूति. विशिष्टाऊति. स्युतिरितिद्विरूपकोश. ह्वेतंतुवानस्य विणणेंइतिख्यातस्य॥लेप्यादिकर्मणि लेप्यमौर्दिर्यस्य नत्कृत-
त्कर्मच लेप्यंमृदापुत्तलिकादिकरणं आदिशब्दात्काष्ठपुत्तलिकादिग्रहणं तत्रपुस्तमित्येक पुस्त्यते पुस्तआदरादौ तदुक्तं मृदावादारुणावाथवस्त्रेणाप्यथचर्मणा लोह
रत्नै.कृतंवापिपुस्तमित्यभिधीयते २८ वस्त्रदंतादिभि.कृतापुत्रिकापांचालिकास्यात् आदिनाकाष्ठमृच्छिलादि पुत्रीइव इवेतिकन् पंचालदेशेभवा जनपदतदवध्योश्चेति

**पुंसिवेमावापदंडःसूत्राणितंतवः वाणिर्व्यूतिःस्त्रियोतुल्येपुस्तंलेप्यादिकर्मणि २८ पांचालिकापुत्रिकास्याद्वस्त्रदंतादिभिःकृता जतुत्रपुविकारेतुजातुषत्रापुषंत्रिषु २९ पिटकःपेटकःपेटामंजूषाऽथविहंगिका**

वुञ् आदिवृद्धिः॰स्यात्पुत्रिकापुत्तलिकादुहित्रोर्यावतूलिके नाप्सु
त्रेशरभेधूर्तेशैवदक्षप्रभेदयोरितिविश्वमेदिन्यौ पांचालिकास्त्रियांवस्त्रपुत्रिकागीतभेदयो पंचालिकेत्यपि तत्रेत्थं पंचभिर्वर्णैरल्यते अलभूषणादौ घञ् एकबाहुलीइति
ख्यातस्य॥ जतुत्रपुविकारेतु जातुषं जतुष.लाक्षाया.विकार.॥त्रपुष.वंगस्यविकार॰त्रापुषत्रिषुएकैकं २९ पिटक॰ पेटति पिटसघाते क्वुन् पिटकस्त्रिषुविस्फोटेमंजूषाया
पुन॰पुमान् पेडक॰पुस्तकादीनांमंजूषायाकदंबकइतिविश्व ॥ पेटकः ण्वुल्॥पेटा पेडेतिमुकुट॰ तत्रपिडते पिडिसंघाते आगमानित्यत्वान्नुम्न पीडेतिस्वामी तत्रच पी
डयति पीडअवगाहे पचाद्यच्॥ मंजूषा टुमस्जोशुद्धौ नुम् चत्वारिवस्त्रालंकारादिस्थापनार्थंकृतायामंजूषायाः पेटीइतिख्यातायाः आद्योपेटारिकायापरेभ ह्त्याभि-
तिस्वामी ॥विहंगिका विहायसागच्छति खच्चाडिद्वावाच्य. मुकुटस्तुविहंगमेतिपठति तत्कारणंडित्वविकल्पः॥

चौरिका चौरस्य भावः कर्म वा मनोज्ञादित्वाद्वुञ् चौरिकेत्यपि ॥ स्तैन्यं स्तेनस्य भावः कर्म वा स्तेनाद्यन्नलोपश्च स्तैन्यमिति निष्पन्नं तत्केचिदिच्छति स्तेयस्तैन्यं च चौर्ये स्याच्चौरिका नारक्लियामिति वाचस्पतिः ॥ चौर्यं चौरस्य कर्म ष्यञ् चत्वारि चोरकर्मणः ॥ चौर्यधनलोप्त्रं लुप्यते लुप्लृ छेदने गोत्रं प्रमश्रुणि चोरितद्रव्ये इति विश्वः लोत्रमिति जटाधरः तस्य चोरस्य धनं एकं २५ मृगपक्षिणां मृगाश्च पक्षिणश्च तेषां बन्धननिमित्तं यदुपकरणं पाशजालादि स वीतंस इत्येवं वितंस्यते तसि अलंकारे घञ् उपसर्गस्येति दीर्घः वीतंसो बन्धनोपाये मृगाणामपि पक्षिणां तेषामेव च विश्वासहेतौ प्रावरणेऽपि चेति विश्वः वितंस इत्यपि ॥ उन्माथः उन्मथ्यतेऽनेन मथे विलोडने हलश्चेति घञ् उन्माथः कूटयन्त्रे स्यान्मारणे घातके पुमान् ॥ कूटयन्त्रं द्वे मृगपक्षिवधनार्थं छलेन यद्यन्त्रं निवेश्यते तत्र सा पञ्चा इति ख्यातं ॥ वागुरा अवागुरते गुरी हिंसायां इगुपधेति कः अ-

चौरिकास्तैन्यचौर्ये च स्तेयं लोप्त्रं तु तद्धने २५ वीतंसस्तूपकरणं बन्धने मृगपक्षिणां उन्माथः कूटयन्त्रं स्याद्वागुरा मृगबन्धनी २६ शुल्बं वराटकं स्त्री तु रज्जुस्त्रिषु वटी गुणः उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः २७

वाकारस्य लोपः ॥ मृगबन्धनी मृगो बध्यतेऽनया करणे ल्युट् द्वे जालीरूप रज्जुविशेषे मृगा येन जाले इति ॰ २६ शुल्बं शुल्बयति शुल्ब्यते वा शुल्ब विसर्गे ण्यन्तात् अच् शुल्बेत्यपि रज्जु शुल्बावराटेनेति रत्नकोशात् स्त्रियां शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसन्निधावपीति विश्वः ॥ वराटकं वरमटति अट गतौ अण् ततः स्वार्थे कः शुल्ब वराटक इति पाठः स्वामीचरणाः पठन्ति ॥ रज्जुः सृज्यते सृज विसर्गे रज्जुर्वेण्यां गुणे योषिदिति विश्वमेदिन्यौ ॥ वटी वटति वट वेष्टने वट्यते वा वटी त्रिषु गुणे पुंसि स्यान्न्यग्रोधकपर्दयोः ॥ गुणः गुण्यते गुण आमन्त्रणे गुणो मौर्व्यामप्रधाने रूपादौ सूददे द्रिये त्यागशौर्यादिसत्त्वादिसत्त्वाद्यावृत्तिरज्जुषु शक्तावधावपि चेत्याद्यावृत्तेपु ॰ ॥ तत्र वराटकं पुंसि क्लीबे च रज्जुः स्त्रियां वटी त्रिषु पञ्च रज्जोः चन्द्रा दोरड इत्यादि ख्याता ॥ प्रहेः कूपात् सलिलोद्वाहनं सलिलमुन्नतं ऊर्ध्वं वा स्यन्दते येन तस्य उद्घाटनं घटीयन्त्रं गह्वरगाडगे इति ख्यातं उद्घाट्यते ऽनेन घटसंघाते ण्यन्तात् ल्युट् घटीनां यन्त्रं २७

वेमा वयतितंतून् अनेन वेञ्तंतुसंताने वेमइत्यपि ॥ वापदंड. वापस्यदंडः वायदंडइतिकचित्पाठ तत्रेत्य वायस्यदंड इेवस्त्रव्यूतिदंडस्य कोष्टाचेधाटेइनिरव्यातस्य सूत्रंस्र च्यते सूत्रयेत्यने सीव्यतेऽनेनवा षिवुतंतुसंताने सूत्रंतुसूचनाकारिग्रंथेतंतुव्यवस्थयोरितिहेम· ॥ तंतु· तन्यते तनुविस्तारे नरिपुंसितंतु. सूत्रतंतुरितिहारावल्या संहृतोपि इसूतइतिरव्यातस्य ॥ वाणि वाणनं वणशब्दे व्यूति विशिष्टाऊति. स्युतिरितिद्विरूपकोश इेतंतुवानस्य विणणेंइतिरव्यातस्य ॥ लेप्यादिकर्मणि लेप्यमादिर्यस्य तच्चत- त्कर्मच लेप्यंमृदापुत्तलिकादिकरणं आदिशब्दात्काष्ठपुत्तलिकादिग्रहणं तत्रपुस्तमित्येक पुस्त्यते पुस्तआदरादौ तदुक्तं मृदावादारुणावाथवस्त्रेणाप्यथचर्मणा लोह रत्ने कृतंवापिपुस्तमित्यभिधीयते २८ वस्त्रदंतादिभि.कृतापुत्रिकापांचालिकास्यात् आदिनाकाष्ठमृच्छिलादि पुत्रीइव इवेतिकन् पंचालदेशोभवा जनपदतदवध्योश्चेति

**पुंसिवेमावापदंडः सूत्राणिनरितंतवः वाणिर्व्यूतिः स्त्रियोतुल्ये पुस्तंलेप्यादिकर्मणि २८ पांचालिकापुत्रिकास्याद्वस्त्रदंतादिभिः कृता जतुत्रपुविकारेतुजातुषत्रापुषंत्रिषु २९ पिटकःपेटकःपेटामंजूषाऽथविहंगिका**

वुञ् आदिवृद्धिः स्यात्पुत्रिकापुत्तलिकादुहित्रोर्यावतूलिके नासु त्रेशरभेधूर्तेशैवव्वक्षप्रभेदयोरितिविश्वमेदिन्यौ पांचालिकास्त्रियांवस्त्रपुत्रिकागीतभेदयो पंचालिकेत्यपि तत्रेत्य पंचभिर्वर्णैरल्यते अलभूषणादौ घञ् एकवाकुल्भेइति रव्यातस्य ॥ जतुत्रपुविकारेतु जातुष जतुष लाक्षाया. विकार ॥ त्रपुष. वंगस्यविकार त्रापुषत्रिषुएकैकं २९ पिटक पेटति पिटसंघाते क्वुन् पिटकस्त्रिषुविस्फोटेमंजूषाया मुन· प्रभान् पेटक· पुस्तकादीनांमंजूषायाकदबकइतिविश्व· ॥ पेटकः ण्वुल् ॥ पेटा पेडेतिमुकुट· तत्रपिडते पिडिसंघाते आगमानित्यत्वान्नुम्न पीडेतिस्वामी तत्रत्त पीडयति पीड अवगाहे पचाद्यच् ॥ मंजूषा दुमस्जोशुद्धौ नुम् चत्वारिवस्त्रालंकारादिस्थापनार्थकृतायामंजूषाया· पेटीइतिरव्यातायाः आद्योपेटारिकायापरेमहत्यामि- तिस्वामी ॥ विहंगिका विहायसागच्छति खच्चडिद्वावान्यः मुकुटस्तु विहंगमेतिपठति तत्कारणंडित्वविकल्प· ॥

त भारयष्टि भारस्ययष्टिः एक शिक्याधारलगुडस्यकुटीरइतिख्या० इयभारोद्वहनार्थानचतुर्दंडिकेतिसाख्या शिक्याधारस्कंधग्राह्ययोर्लगुडइतिद्रविडा ॥तदालंबितस्याभार
याप्या भारयितुशीलमस्य भविभ्रविस्रसने॥शिक्य शक्नोतिवोढु॥काच स्यात् कच्यतेन कचवधने काच शिक्येमणौनेत्ररागभेदेमृदतरइतिविश्वमेदिन्यौ देभाल
वमानस्यगज्जुपजम्य शिवे इतिख्यातस्य॥पादुका पद्यतेऽनया पदगतौ ३० पाद् ॥उपानत् पदेउपनह्यते पादमुपनह्यतिवा णहबंधने सपदादिभ्यइतिक्विप नै
िपि ह्यिपीतिदीर्घ अयमपिस्त्रिया पादत्राणस्य जोडाइतिख्यातस्य॥सैवोपानत् पदायता पदवत् आयता पदायामेनव इत्यर्थ अनुपदीनास्यात् अनुरा
यामेसा इत्येवा अनुपस्वहा अनुपदीनाउपानत् इतिकोमुद्यास्पष्ट एकवाह्मणइतिख्यातस्य॥नध्री नह्यतेऽनया णहबंधने दाम्नीशसेतिष्ट्रन् षित्वात्ङीप्॥नध्री

भारयष्टिस्तदालंबि शिक्यंकाचोऽथपादुका ३० पादूरुपानत्स्त्रीसैवानुपदीनापदायता नध्रीवध्रीवरत्रास्यादश्वादेस्ताडनी
कशा॥ ३१ चाडालिकातुकंडोलवीणाचंडालवल्लकी वर्धते वृधुवर्धने इधिवपिभ्यारन् गौरादित्वान्ङीष् ॥वरत्रा व्रियतेऽनया इवृवरणे इवृञ्भ्यि
त् इत्यननगुणः गौणिचर्ममय्यारज्वाः वादीइतिख्यातायाः॥अश्वादेस्ताडनीरज्जु कशास्यात् ताड्यतेऽनया तडआघाते ण्यन्तात्ल्युट्॥कशति कशशब्दे पचा-
द्यच् कशगतिशासनयोर्वा आदिनाउष्ट्रगर्दभचोरादिग्रहण एकजरवदइतिख्यातस्य ३१ चाडालिका चंडालस्येय अण्ङीप् स्वार्थेकन्-ह्रस्वः चंडालेनकृतावा
कुलालादिभ्योवुञ्वा चाडालिकाकिन्नरायामुपायामोषधीभिदीस्तुः चंडालिकेत्यपि॥ कंडोलवीणा कंडोलस्यचंडालस्यवीणा कटोलवीणेत्यपि कंडोलीतिप्र
थक्पदमपि कडिमदेबाहुलकादोलच्॥चंडालवल्लकी चंडालस्यवल्लकी गौणिकिन्नरीतिख्यातायाअन्त्यजवीणायाः॥

नाराची स्वल्पोनाराचोबाणभेदःइति गौरादित्वात्ङीष्॥ एषणिका इष्यतेनया इषगतौ ल्युट् टित्वात्ङीप् द्वेस्वर्णकाराणांनाराचाकृतिर्यालोहशलाकातत्र काटा तराङ्गु
, तरव्याते॥शाण शण्यते शणदाने अकर्तरीतिघञ् श्यतिवा शोतनूकरणे बाहुलकान्अणः॥निकषः निकषति कषहिंसायां पचाद्यच् निकषःशाणफलकेइतिविश्व
मेदिन्यौ॥कष त्रीणिस्वर्णादियत्रघर्षणेनपरीक्ष्यते तस्या.शिलायाः करोटी निसाणाइत्यादिरव्याताया. खड्गादितीक्ष्णकरणयत्रस्येत्यन्ये ३२ व्रश्चन. व्रश्च्यतेऽनेन
करणेल्युट् ओव्रश्चूछेदने॥पत्रपरशुः पत्रमिवपरशुः. द्वेस्वर्णादिच्छेदनस्यपरशो कानसइतिरव्यातस्य॥ईषिका ईष्यते इषतिवा ईषउंछे वुन्प्रत्ययः ईषिकेतिपा
८९ इष्यत इषगत्यादौ क्वुन् इषीकेत्यपि पृषोदरादि॥तूलिका तूलति तूल्यतेवा तूलनिष्कर्षे क्वुन् द्वेशलाकाभेदस्य सळईइतिरव्यातस्य॥तैजसावर्तनी तैजसस्व-

**नाराचीस्यादेषणिकाशाणस्तुनिकषःकषः ३२ व्रश्चनःपत्रपरशुरीषिकातूलिकासमे तैजसावर्तनीमूषाभस्त्राचर्मप्रसेविका ३३ आस्फोटनीवेधनिकाकृपाणीकर्तरीसमे**

वर्णादिआवर्त्यतेयत्र ल्युट् अधिकरणे वृतुवर्तने स्वर्णादिपाकार्थपात्रविशेषःस्यात् मूषति मूषस्तेये मूषी मूषा
त्वावर्तनीमूषीतिशब्दार्णव.मुषस्तेयइत्यस्माङ्गिदाद्यडिन्हस्वादिरपि ह्रस्वा मुषा मुषी गौरादिः मूसइतिरव्याता एक॥भस्त्रा भस्यतेनया भसदीप्तौ ष्ट्रन् नितुभ्रेतिनेट्॥चर्मप्रसेविका
चर्मणाप्रसीव्यते षिवुतन्तुसताने संज्ञायामितिण्वुल् चर्मप्रसेवकइत्यपि द्वेअग्निज्वलनार्थस्य चर्मप्रसेवकस्य भाताइतिरव्यातस्य ३३ आस्फोटनी आस्फोट्यतेनया स्फुटभेदने
करणेल्युट् लास्फोटनीइत्यपि तत्र ललनीमास्फोटयति पृषोदरादि॥वेधनिका विध्यतेनया विधविधाने करणेल्युट् स्वार्थेकः वेधनीतुलास्फोटन्यांस्फोटनीवृषदशिकेतिवाचस्प
ति. द्वेशुक्तादेर्वेधोपयुक्तस्यशस्त्रभेदस्य सामताइतिरव्या०॥कृपाणी कृपामणति अणशब्दे कर्मण्यण्॥कर्तरी कृंतति कृतीछेदने बाहुलकादर. इत्याद्युक्तं द्वेस्वर्णपत्रादिभि-
छिद्यतेयेनतस्यकातरइतिरव्यातस्य॥

वृक्षादनी वृक्षमत्ति अदभक्षणे कृत्यल्युटोबहुलमितिल्युट् ॥ वृक्षभेदी वृक्षभेत्तुंशीलमस्य भिदिरविदारणे सुप्यजातौणिनिस्ताच्छील्ये इति णिनि द्वेवृक्षभेदनार्थस्यशस्त्रभेदस्य ॥ नाकसताक्षणीइतिख्यातस्य ॥ टंक. टंकयति टकिबंधने टमितिशब्दंकायतिवा केशब्दे ॥ पाषाणदारण पाषाणोदार्यतेऽनेन दृविदारणे द्वेपाषाणदारणार्थस्य घन भेदस्यटांकीइतिप्रसिद्धस्य ३४ क्रकच क्रइतिकचति कचशब्दे पचाद्यच् ॥ करपत्र करेणकरात्वापतति पत्लृपतने द्वेकरवतइतिख्या० ॥ आरा आऋति ऋगतौ आदृभ्यू यतिपचायच् अच् आर्यतेवा भिदादौ ॥ चर्मप्रभेदिका धात्वर्थेनिर्देशतिण्वुल् चर्मण प्रभेदिका द्वेचर्मखडनार्थस्य शस्त्रभेदस्य आरीइतिख्यातस्य ॥ सूर्मी शोभना ऊर्मि बहुव्रीहिर्वा सर्वतोक्तिन्गौरादित्वात्ङीप् सूर्मीरितिवा अनपक्षेगौरादिर्न ॥ स्थूणा तिष्ठति छागतिनिवृत्तौ शस्त्रासास्त्रास्थूणेतिसाधु ॥ अथ प्रतिमा ३

वृक्षादनीवृक्षभेदीटंक पाषाणदारण ३४ क्रकचोऽस्त्रीकरपत्रमाराचर्मप्रभेदिका सूर्मीस्थूणाय प्रतिमाशिल्पकर्मकलादिक ३५ प्रतिमानप्रतिबिंबप्रतिमाप्रतियातनाप्रतिछाया प्रतिकृतिरर्चापुंसिप्रतिनिधिरुपमोपमानस्यात् ३६ यस्स प्रति-

मा त्रीणिल्लोहप्रतिमाया ॥ कलादिकयत्कर्मतच्छिल्प कलागीतनृत्यादि आदिनासुवर्णकारादिग्रहण शील्यते शल्यतेवा शीलसमाधौ शलगतौवा उभाभ्या धातुभ्या औणादिक प्रत्यय शिल्पस्त्रुवेक्रियायोगेइतिविश्व एक ३५ प्रतिमान प्रतिकृत्यमीयतेऽनेन माङ्माने करणेल्युट् अनादेश ॥ प्रतिबिंब प्रतिकृ- तिर्बिंबस्य कुगतीतिसमास ॥ प्रतिमा प्रतिमीयतेऽनया आतश्चोपसर्गेइतिकरणेस्त्रङ् ॥ प्रतियातना प्रतियात्यतेनया यतनिरोपस्कारयो चुरादि ण्यासश्र थेतियुच् ॥ प्रतिछाया प्रकृष्टाछाया प्रादिसमास ॥ प्रतिकृति प्रकृष्टाकृतिः प्रतिनिधे कृतिर्वा ॥ अर्चा अर्च्यते अर्चपूजायां ॥ प्रतिनिधि प्रतिनिधीयते सदृशी

क्रियते उपसर्गेघो किः अष्टेप्रतिमायाः प्रतिनिधिःपुंसि ॥उपमा आतश्चोपसर्गे भावेकरणेवा अङ् उपमानमित्यत्रापिल्युट् ॥तथा उपमानं द्वेकरणेभावेचयेनोपमीयते यानोपमितिस्तयोरेतेनामनी केचित्तुपूर्वाचितेइत्याहुः ३६ समादिसमानोत्तरसप्तकं वाच्यलिंगाःस्युः समति समवैकुव्ये अच् तुलयासंमितः नौवयोधर्मेत्यादिनायत् सदृक्षादयस्त्रयोपित्यदादिषुदृशइतिसाधवः आधारणेनसहवोपसर्जनस्येतिसहस्यसादेशः सहमानेनवर्ततेसमानं मानंअस्येतिवासमानः अमीतु निभादयउत्तरपदस्थाएवसदृशपर्यायावाच्यलिंगाश्च स्युः तेयथा पितृनिभः पुत्रः मातृसंकाशाकन्या देवनीकाशमपत्यमित्यादि निभस्तुकथितोव्याजेपुल्लिंगः सदृशेषुच निकाशोनिश्चयेतुल्यइतिविश्वः आदिशब्दाद्भूतरूपकल्पादिग्रहणं यथा पितृभूतः पितृरूपः पितृकल्पः ॥ कर्मण्या कर्मणासपद्यते संपदादिनिइत्यधिकारेकर्मवेषाद्यत् कर्मणिसाधुर्वा ॥विधा कर्माणिविधीयंतेऽनया आतश्चोपसर्गे इतिकरणेअङ् ॥ भृत्या भ्रियंतेकर्मकराअनया भृञ्भरणे संज्ञायांसमजेतिक्यप् तुगागमश्च ॥भृतिःभर्म भ्रियतेऽनेन डुभृञ् भृञ्वा मनिन् ॥वेतन वीयतेनेन वीगत्यादौ वीयतीभ्यांतनन्तुः ३८ भरण्यं भरणेसाधुः भरण्येत्यपि ॥भरणं भृञोल्युटिसाधुः भरणंवेतनेभृताविति विश्वः ॥मूल्य मूलेनआनाम्यं नौवयोधर्मेत्यादिनायत् मूल्यंस्याद्वेतनेरत्नइतिविश्वः॥निर्वेशः निर्विश्यतेऽनेनवा कर्मणिकरणेघञ् विशप्रवेशने निर्वेशस्तुपुमान्भागेवेतनेमूर्छनेपिचेत्युक्त० ॥पणः पण्यते नित्यंपणः परिमाणेइत्यप् पणोवराटमानेस्यान्मूल्येकार्षापणेग्लहे क्रय्यशाकादिकेद्यूतव्यवहारेभृतौधनइ० एकादशवेतनस्य॥

**वाच्यलिंगाःसमस्तुल्यःसदृक्षःसदृशःसदृक् साधारणःसमानश्चस्युरुत्तरपदेत्वमी ३७ निभसंकाशनीकाशप्रतीकाशोपमादयः कर्मण्यातुविधाभृत्याभृतयोभर्मवेतनं ३८ भरण्यंभरणंमूल्यं निर्वेशःपणइत्यपि**

॥ ।

स्फ्रग स्फ्रअर्तात्‌सायस्तनया रैसाब्दे आलश्चोपसर्गेनरणेड् सुराचषकमद्ययो पुल्लिंग स्त्रियदिवेशेस्यात्॥हलिप्रिया हलिनोवलस्यप्रिया॥हाला हलत्यग हलविलेस्स ने ज्वलितिवगते‍ऽयोण ॥परिस्रुत् परित स्रवति स्रुस्रवणे क्विप्‌चेतिक्विप्‌तुक्॥वरुणात्मजा वरुणस्यसमुद्रस्य ३९ गघोत्तमा गधउत्तमोयस्या ॥प्रसन्ना प्र सीदतिप्रा पद्गुयिारणादौ क्तप्रत्यय प्रसन्नास्त्रीसुरायायास्यादच्छसतुष्टयोस्त्रिषु॥इरा इकामराति रादाने आतोनुपसर्गेइतिक ॥कादम्बरी कुत्सितअंवर कद वर ।लावरमस्यास्ति अर्शआद्यच् तस्येद् कदवे जातारस. कादम्ब नरातिकादम्बरी गौरादित्वात्‌ङीष् इत्याधृत्य कादम्बरम्न.दध्यग्रेमद्यभेदेनपुसक स्त्रीवारुणीपग ग्रताप्पारणीम्पारिकाइसुवेत्यु॰॥परिस्रुता परित स्रुता यद्य परित स्रूयतेस्म लोके-स्रुगतौ॥मदिरा माद्यत्यनया मदीहर्षे किरच्॥कश्य कश्यते‍ऽनेन कशशब्दे

स्फ्राहलिप्रियाहालापरिस्रुद्वरुणात्मजा ३९ गधोत्तमाप्रसन्नेराकादम्बर्यं परिस्रुता मदिराकश्यमद्येचाप्यवदंशस्तुभक्षणं ५० शु डापानमदस्थानमधुवारामधुक्रमा मध्वासवोमाधवको

बाहुलकात्‌उमयत्रयत्॥मद्य माद्यते‍ऽनेन मद्यास्वमध्ययो कश्यमितिरतिदेव क श्यक्लिप्रुकशाहेंस्यात्क्लीबमद्याश्वमध्ययोरितिविश्व त्रयोदशमद्यस्य तेषु गौडीपैष्टीचमाध्वीचविज्ञेयात्रिविधासुरेतिवचनात् सुरादिद्वयगौड्यादित्रिविधम- द्यस्य शेषमद्यमात्रस्य॥पानरुचिजननायद्रव्यव्यजनादिभक्षितुमिच्छतिसो‍ऽवदंशोज्ञेय अवदस्यते दशदशाने इत्येक॥भक्षण भर्जितचणकादि तस्य ५० शुण्डा शुन्यते शुनगतौ भ्रमताड् शुण्डापानगृहेमता अप्यबुहस्तिनीवेश्याहस्तिहस्तसुरासुनेतिमेदिनी शुण्डापिजलहस्तिन्यामदिराकरिहस्तयोरितिविश्वकोशाश्च॥पान पेबत्यत्र अधिकरणे पापाने ल्युट् समस्तमपि शुण्डापान॥मदस्थान मदस्यस्थान हेमद्यगृहस्य॥मधुवार मधुनोवार ॥मधुक्रम मधुनोक्रम हेमधुपानावसरस्य ॥मध्वासव मधुकपुष्पमधुतस्यासव ॥माधवक मधुनाकृत सधित ॥

मधु गन्यते मनज्ञाने मधुपुष्परसेक्षौद्रे मद्येनातुमधुद्रुमइतिविश्वमेदिन्यौ ॥ माद्वीकं मृद्वीकाद्राक्षातस्याः विकारः तस्यविकारइत्यण् केचित्तुमाध्वीकमितिपठंति तत्रपूषो
दारादित्व अद्वयोरितिक्लीबत्वंस्यात् चत्वारिमधुकपुष्पकृतमद्यस्य गुरुत्वरणास्तु द्वौद्वौपर्यायावाहुः ४१ मैरेय मिरायादेशविशेषेओषधिविशेषेवाभवं नद्यादिभ्योटक् ॥
आसवः आसूयते षुञ्अभिषवे ऋदोरप् ॥ शीधुः शीरतेऽनेन शीङोधुक् पुंनपुंसकयोर्दारुजीवातुस्थाणुशीधवइतित्रिकांडशेषः यद्यपिशीधुरिक्षुरसैः पक्वैरप-
क्वैरासवोभवेत् मैरेयंधातकीपुष्पगुडधानांबुसंहितमितिमाधवः तथापिभेदमनादृत्योक्तं त्रीणिइक्षुशाकादिजन्यमद्यविशेषस्य शीधुरस्त्रियां आसवः पुमान् ॥ मे
दकः मेद्यति ञिमिदास्नेहने ॥ जगलः भृशंगलति गल्यतेवा गलअदने यङ्लुगंतात्अच् संज्ञापूर्वकत्वाद्वीर्घोकितइतिनदीर्घः मेदकोपिष्टमद्येनेत्यक्तत्वा

## मधुमाद्वीकमद्वयोः ४१ मैरेयमासवःशीधुर्मेदकोजगलःसमौ संधानंस्यादभिषवःकिण्वंपुंसितुनग्नहूः ४२ कारोत्तरःसुरामंडआपानंपानगोष्ठिका

न्जगलोमदनद्रुमेचेति हेमुकल्कस्य मद्यभेदस्येत्येके ॥ संधानं संधीयते संधानंस्यादभिषवेतथासंघट्टनेपिचेति-
विश्वः ॥ अभिषवः अभिषूयते षुञ्अभिषवे ऋदोरप् भवेदभिषवःस्नानेमद्यसंधानयज्ञयोरितिविश्वः हेमद्यसंधानस्य ॥ फलवंशांकुरादिकंबहुकालंयत्सं-
धीयतेतस्येत्येके ॥ किण्वं कणनं कणशब्दे उल्बादयश्चेतिसाधुः किण्वंपापेसुराबीजइतिविश्वः ॥ नग्नहूः ह्वानं ह्वयतेवा नग्नस्यहूः नग्नहूः नग्नह्वोनग्नह्वः
ह्वेञ्स्पर्धायांशब्देच अस्मात्संपदादित्वात्क्विपिसंप्रसारणेपूर्वरूपेहलइतिदीर्घेभावप्रत्ययांतेननग्नशब्दस्यसमासः कर्तृप्रत्ययांतेनवा एवंरूपाणीति हेतंडु
लादिद्रव्यकृतसुराबीजस्य ॥ मत्तनग्नकृताह्वानस्येत्यन्ये ॥ सुरायाःमंडः अग्रभागः कारोत्तरःस्यात् कारेणक्रियायाउत्तरः कारोत्तमइतिस्वामी एकं ॥ आ
पानं आसंभूयपिबंत्यस्मिन् अधिकरणेल्युट् ॥ पानगोष्ठिका पानस्यगोष्ठिका स्वार्थेकः हेपानसभायाः ॥

चषकः चष्यतेनेन चषभक्षणे चषकोस्त्रीसुरापात्रेमधुमद्यप्रभेदयोरितिमेदिनी ॥ पानपात्र पानस्यपात्र द्वेमद्यपात्रस्य ॥ सरक स्त्रियते सरतो कृञादिभ्योवुन् सर
क सीधुपानेसुराधुनोर्मद्यभाजनइत्यजय अपिशब्दात्सरकोप्यस्त्री सरकवानानुतर्षेनेतिरत्नकोश ॥ अनुतर्षण अनुतर्षणमनेन त्रितृषापिपासायाभावेकरणेवा
ल्युट चषकश्चानुतर्षश्चेतिभागुरि द्वेमद्यपानस्य चत्वारिमद्यपानपात्रस्येतिसुकुट ४३ धूर्त धूर्वति धुर्वीहिंसायां तन्प्रत्यय राल्लोप धूर्तंतुरक्तलवणेधत्तूरेनायिरे
धार्तइतिपाठेतु धावनेनआर्त धावुगतिशद्ध्यो सपदादि बाहुलकावलोप ॥ अक्षदेवी अक्षैर्दीव्यति सुप्यजातौइतिणिनि ॥ कितव कितवायति कितेन्वातिवा
के प्रत्यय कितवोधूर्तयन्मनेस्त्वकेकनकाह्वयइतिविश्व ॥ अक्षधूर्त अक्षेषुधूर्त सप्तमीशौण्डै इतिसमास ॥ द्यूतकृत् द्यूतकरोति क्विप् द्यूतकृत् सोगर्धस्वेच्छाणारइ-

चषकोऽस्त्रीपानपात्रंसरकोप्यनुतर्षण ४३ धूर्तोऽक्षदेवीकितवोऽक्षधूर्तोद्यूतकृत्समा स्युर्लग्निका प्रतिभुव सभिकाद्यूतकारका
४४ द्यूतोऽस्त्रियामक्षवतीकैतवंपणइत्यपि पणोक्षेषुग्लहोक्षास्तु तिरव्या ॥ लग्नक लज्जतेस्म आलस्जीव्रीडने गत्यर्थेतिक्त स्वार्थेक ॥ प्रति
भू प्रतिप्रतिनिधिर्भवति प्रतिभू देकरणादौप्रतिनिधिभूतस्य धनिकाधमर्णयोरन्तरेयः तिष्ठतिविश्वासार्थंतस्य जामीनइतिरव्या ॥ सभिक सभाद्यूतआश्रयत्वेनास्या-
स्ति व्रत्यादित्वाट्ठन् सभाद्यूतसभागृहइतिरुद्र ॥ द्यूतकारक द्यूतकारयति द्वेद्यूतकारयितेनेषा ४५ द्यूत देवन दिवुक्रीडादौभावेक्त ॥ अक्षवती अक्षा पाशका स
न्त्यस्या ॥ कैतव कितवस्यकर्महायनान्तेत्यादिनाअण् कैतवमुछलेद्यूतेकैतव कितवेरिपी ॥ पण पणोग्लहोऽस्त्यस्मिन् अर्थआद्यच् चत्वारिद्यूतस्य ॥ पण पण्यते उद्
ज्यते पणव्यवहारे अप्प्रत्यय ॥ ग्लह ग्लह्यतेनेन ग्लहआदाने गुह्यतेवा अक्षेषु ग्लह इतिसाधु द्वेद्यूतजयेलाप्यमानस्य ॥ अक्ष अक्षति अक्षूव्याप्तौ पचा-
द्यच् अक्षोज्ञानात्मशकटावयवेषुसुपाशके रुद्राक्षद्राक्षयोसर्पेबिभीतकनरावपि चक्रेकर्षेपुमान्क्लीबमक्षसौवर्चलेन्द्रियरव्य ॥

देवनः दीव्यतियेन करणेल्युट् देवनंव्यवहारेस्याज्जिगीषाक्रीडयोरपि अक्षेषुदेवन.प्रोक्तइतिविश्वः॥ पाशकः पाशयति पाशाबंधने त्र्ययंपासेइतिख्यातस्य ४५ शा
रीणामितस्ततोवामदक्षिणतोनयनंपरिणाय· परिन्योर्नीणोद्युताभ्रषयोरितिघञ् इत्येकं॥ अष्टापद अष्टौपदान्यस्य अष्टापदं अष्टन सज्ञायामितिदीर्घः अस्त्रियां॥
शारिफलं शारीणांफलंपट्टः अष्टापदोऽस्त्रीफलकेशारीणांफलकेपिचेतिमेदिनी फलंहेतुसमुत्थेस्यात्फलकेव्युष्टिलाभयोरितिविश्व·॥ द्वेशारीणारवेलनाधारपट्टस्य
सोंगस्यांचापटइति॥प्राणिद्यूतं प्राणिभि·कृतंद्यूतं ससमाह्वयइत्युच्यते घप्रत्ययः सम्यगाह्वयंतेत्र एकं॥ प्राणिद्यूतं मेषमहिषगवादिकृतयुद्धसमाह्वयइत्यर्थ·
अप्राणिभिःकृतमितिद्यूत मुच्यते प्राणिभिःक्रियतेयत्तुसविज्ञेयःसमाह्वयइत्युक्तत्वात् ४६ अत्रकेषांचिल्लिंगासंग्रहादसंपूर्णत्वंनिवारयति उक्ताइति अत्रशूद्रवर्गे

## देवनाःपाशकाश्चते ४५ परिणायस्तुशारीणांसमंतान्नयनेस्त्रियां अष्टापदंशारिफलंप्राणिद्यूतंसमाह्वयः ४६ उक्ताभूरिप्रयो गत्वादेकस्मिन्येऽत्रयौगिकाः ताञ्छूस्यादन्यतोवृत्तावूह्यालिंगांतरेऽपिते ४७ इतिशूद्रवर्गः इतिद्वितीयकांडःसमाप्तः

येयौगिकाः शब्दाः मार्दंगिकमालाकारवैणविकादिप्रमुखाः पुंसिबहुलप्रयोगत्वान्निबिडप्रयोगदर्शनादेकस्मिन्नेवलिंगेपुंसियेयौगिकाप्रोक्तास्तेतान्छूस्यद्योगवशा
त्तेषामन्यतोन्यत्रजातोवृत्तौसत्या अन्यत्रस्त्रियांक्लीबेचोह्नीयाः अपिशब्दा द्रूढाअपिकरणकुलालादयोजाःनिवचनात् पुंसिस्त्रियांचवर्ततेइतिज्ञेय यस्यावयव
शक्त्याएवार्थोबुध्यतेसयौगिक·स्यात् यस्यावयवशक्तिमनपेक्ष्यसमुदायशक्तिमात्रेणार्थोबुध्यतेरूढः तत्रयौगिकोलिंगांतरे यथा मालाकारीस्त्री मालाकारं
कुलं एवंकुंभकारीस्त्री कुंभकारंकुलमित्यादि अणंतत्वात्स्त्रियांङीप् अयौगिकोयथाकरणादयः अत्रजातेरस्त्रीविषयादितिङीष् ४७ इतिशूद्रवर्ग·
इतिसविग्रहामरकोशेद्वितीयकांडस्यव्याख्यानंसमाप्तम् २

को

श्रीगणेशायनम विशेष्यनिघ्नैरिति॥वक्ष्यमाणवर्गानाह सामान्येकाडे साधारणत्वात् एतैरक्षिप्तास्तन्नामकावर्गाउच्यते॥एते के विशेष्यनिघ्ने ॥वि-
शेष्यस्त्रीदारादिपूर्वोक्तितत्निघ्नअधीनयेषातै लिंगवचने सुकृत्वादिशब्दै संकीर्णे परस्परविजातीयार्थैं कर्मपरायणादिभिः॥नानार्थैश्च॥अनेकार्थेषुव
र्तमानैर्नाक लोकादिभि ॥अव्ययैराकादिभिर्लिंगादिसंग्रहै ॥लिंगान्यादौयेषानानितेषासंग्रहा ॥आदिशब्दान्नामानि॥लकाशोफालिकेत्यादीनिते ॥तेन्वव
र्गास्तत्नानेत्याह॥कीदृशा वर्गा ॥वर्गसंश्रया वर्गा पूर्वोक्तस्वर्गादिवर्गा संश्रया संबंधिनोयेषाते १ आश्रयाश्रयोरूपभेदेनअस्मिन्शास्त्रेलिंगनिर्णय ॥नह्येवा
नवर्गोपिस्यादितिभ्रमनिरासार्थव्यापकलक्षणमाह॥स्त्रीदाराद्यैरिति॥यादृशी स्त्रीलिंगत्वादियुक्ते स्त्रीदाराद्ये ॥आदिनाकलत्रादि॥पदैर्यद्विशेष्यस्त्रीदा

विशेष्यनिघ्नै संकीर्णैर्नानार्थैरव्ययैरपि लिंगादिसंग्रहैर्वर्गा सामान्येवर्गसंश्रया १ स्त्रीदाराद्यैर्यद्विशेष्ययादृशै प्रस्तुतप
दै गुणद्रव्यक्रियाशब्दास्तथास्युस्तस्यभेदका २ सुकृतीपुण्यवान्धन्योमहेच्छस्तुमहाशय

रादिरूपयथाप्रस्तुतप्रकानतस्य
विशेष्यस्यभेदका व्यावर्तकागुणद्रव्यक्रियाविशिष्टा शब्दस्तथास्यु ॥विशेष्यस्ययादृशेलिंगवचनेतादृशालिंगवचनाएवभवेयुरित्यर्थ ॥तत्रगुण सुकृता
दिस्तद्विशिष्टेयथा॥सुकृतिनीस्त्री॥सुकृतिनोदारा ॥सुकृतिकलत्र॥द्रव्यंदडादितद्विशिष्टेयथा॥दंडिनीस्त्री॥दंडिनोदारा ॥दंडिकलत्र॥क्रियापचनादिव्यापारस्तद्वि
शिष्टेयथा॥पाचकास्त्री॥पाचकादारा ॥पाचककुल २ सुकृती सुकृतिमस्यास्ति इनि ॥पुण्यवान् पुण्यमस्यास्ति मतुप्॥धन्य धनायअर्ह ॥धनलब्धेतिसु
क्तधन्याधान्यामलक्ष्यो स्याद्धन्यपुण्यवतीत्रिष्वितिविश्वमेदिन्यौ भयभाग्यसंपन्नस्य॥महेच्छ महतीच्छास्य गोस्त्रियोरितिह्रस्व ॥महाशय महानाशयास्य आ-
शयस्यादभिप्रायेमानसाधारयोरपि हेउदारचित्तयस्यतस्य॥

हृदयालु· प्रशस्तंहृदययस्य ॥सुहृदयः शोभनंहृदयमस्यास्ति मित्रत्वाविवक्षनाम्नात्कन्नाब. सत्हृदयइतिवापाठ. तत्रहृदयेनसहेतिबहुव्रीहिः प्राणिमात्रस्यतथात्वा दत्नप्रशस्तपरत्वंहृदयशब्दस्य द्वेविशाल्हृमनस. हृदयवान् हृदयिकइत्यपि ॥महोत्साह. महानुत्साहोयस्य॥ महोद्यम महानुद्यमोस्य द्वे दुःसाध्यकृत्येपिसाधनप रस्य ३ प्रवीण प्रकृष्टावीणास्य यद्वा वीणयाप्रगायति प्रगीयतेवा सत्यापेतिणयतादच् निपुण. निपुणाति पुणकर्मणिशुभेक अभिज्ञ अभिजानाति॥विज्ञ विजा- नाति उभयत्रापि आतश्चोपेतिक ॥निष्णात निष्णातेगत्यर्थेतिक्त ॥शिक्षित अशिक्षिष्ट शिक्षाविद्यापादाने कर्तरिक्त. वैज्ञानिक. विज्ञानंबुद्धि तत्रनियुक्तइतिठक् इत्याद्युक्तं॥कृतमुख. कृतमुखमस्य सर्वेषाकृतमुखत्वादवकृतशब्दस्यसंस्कृतपरत्व॥ कृती कृतकर्मप्रशस्तमस्य मत्वर्थेइति ॥कुशल कुशान्लातिक कौपृथि-

हृदयालुःसुहृदयोमहोत्साहोमहोद्यमः ३ प्रवीणेनिपुणाभिज्ञविज्ञनिष्णातशिक्षिताः वैज्ञानिकःकृतमुखःकृतीकुशलइ त्यपि ४ पूज्यःप्रतीक्ष्यःसांशयिकःसंशयापन्नमानसः दक्षिणीयोदक्षिणार्हस्तत्रदक्षिणइत्यपि ५

व्याशलतिवा शलचलने भ- न् कौशनयति चालयति राजकार्याणिवा कुशल· शिक्षितेत्रिषु क्षेमेचसुकृतेचापिपर्यासिननपुंसकमितिविश्वमेदिन्यौ दशप्रवीणस्य ४ पूज्यः पूज्यते पूजपू जाया आचोयत्॥ प्रतीक्ष्यः प्रतीक्ष्यते इक्षदर्शने यत् पूज्य·श्वशुरवध्वयोरितिहेम. प्रतीक्ष्य.प्रतिपाल्येस्यात्पूज्येचेतिहेम द्वे॥ सांशयिक संशयमापन्नइति ठ ञ् यद्वा संशयविषयीभूतोऽर्थ सांशयिकइतिदीक्षिता संशयापन्नमानस. संशयापन्नमानसयस्मिन् द्वे संदेहविषयस्य॥ दक्षिणीय. दक्षिणामर्हति॥अर्ह- पूजायां दक्षिणार्हः॥दक्षिण्यः कुडकरेतिछयतो दाक्षिणइत्यपि अण् त्रीणिदक्षिणायोग्यस्य ५

वदान्यः मायाचसेति वदति वदेरान्य वदान्योदानशौंडस्याद्वालवादिनिपात्यवत् वदन्यइत्यपि ॥स्थूललक्ष्य स्थूलैर्महद्भिर्लक्ष्यते ण्यत स्थूलकृतलक्ष्यम-
स्येतिवा॥दानशौन्ड दानेशौण्ड शौंडोमतेपिविख्यातइतिविश्व॥बहुप्रद बहुप्रददाति मेदाज्ञइतिक चत्वारिअतिदातु॥जैवातृक जीवति जीवेरातृकन् दीर्-
घ्न जैवातृक पुमान्सोमेरूपकायुष्मतोस्त्रिष्विति विश्वमेदिन्यौ॥आयुष्मान् अतिशयितमायुरस्य मतुप भत्वन हैमायुष॥अतर्वाणि अतर्वाणयस्य यदा अं
तर्वाणयति पणशब्दे ण्यतादन् शास्त्रवित् शास्त्रवेत्ति क्विप् द्वेशास्त्रज्ञस्य ६ परीक्षक परीक्षिते ईक्षदर्शने ण्वुल् कारणिक करुणैस्मरति चरतीतिठक् आदिह-
स्दि करणहेतुकर्मणोरिष्युक्त हेमप्रमाणेरर्थनिश्चायकस्य॥वरद वरददाति कमत्यय प्रसन्नेशातचित्तेचवरदास्तुकुमारिकाइतिहेम॥समर्दक सम्पृभोति कृभुश्च द्वो

स्युर्वदान्यस्थूललक्ष्यदानशौंडाबहुप्रदे। जैवात्रकस्यादायुष्मानतर्वाणिस्तुशास्त्रवित् ६ परीक्षक कारुणिकोवरदस्तुसमर्ध
क हर्षमाणो विकुर्वाण प्रमनात्दृष्टमानस ७ दुर्मनाविमनाअंतर्मना स्यादुत्कउन्मना दक्षिणेसरलोदारो ण्वुल् हेवराणादातरि॥हृ
र्षमाण हर्षीनि त्दुष्णअलीकेन्चानश् विकुर्वाणः विकुरुते शानच् प्रमना प्रकृष्टमनोस्य॥त्दृष्टमानस त्दृष्टमानसमस्य चत्वारित्दृष्टचेतस ७ दुर्मना दुस्थितमनो
स्य॥विमना विगतविविधवामनोस्य॥अंतर्मना अंतर्मनोस्य त्रीणिउद्विग्नमनस॥उत्क॥उन्मन उद्गतमनोस्य उत्उत्ब्दात्स्वार्थेकन् हेउत्कंठितमनस॥दक्षिण द
क्षते दक्षद्वौ शीघ्रार्थेच हुदक्षिण्याभिनच् दक्षिणोदक्षिणोद्भूतसरलच्छंदवर्तिषु अवामेत्रिषुयज्ञादिविधिदानेदिशिस्त्रिया॥सरल सरति सृगतौ अलच् सरल
तिकष्टेनार्थेदारावकृयोस्त्रिषु॥उदार उत्कृष्टमासमन्ताद्राति क उदारोदातृमहतोर्दक्षिणेप्यभिधेयवत् त्रीणि ऋज्वाशायस्य॥

दातृभोक्तरि दाताचासौभोक्ताचतत्रसुकलइत्येक ॥सुकल्पते कलशब्दसख्यानयो खल शोभनाकलास्येतिवा ॥तत्पर तत्परउत्तमंयस्य तेनपूर्यतेवा पृपालनपूरण
यो. अप् ॥प्रसितः पिञ्बंधनेक्तः॥ आसक्त. अतिशयेनसक्तः षंगे क्त त्रीणितात्पर्यसुक्तस्य ॥ इष्टार्थेद्युक्त. इष्टश्चासावर्थश्चतत्रउद्युक्तः॥उत्सुक. तदुद्योगंसवतिभ्वा
दे. सौति अदादिःसुनातिवास्वादिःषुप्रसवैश्वर्ययोःषुञ् अभिषवेवा क्विपिआगमानित्यत्वातुगभाव यद्वा उत्सवति षूप्रेरणे हेष्टार्थोद्यमवत. पंचापितत्पर्यायाइत्येके
॥प्रतीतः प्रतीयतेस्म इण्गतौक्तः॥प्रथित. प्रथतेस्म प्रथप्रख्याने॥ ख्यात. आख्यायि ख्याप्रकथने॥वित्तः आवेदिविद्लृलाभेक्तः॥विज्ञातः व्यज्ञापिज्ञाअवबो-
धनेक्तः यद्वा विजानाति ॥विश्रुत. व्यश्रावि श्रुश्रवणे इमेसर्वेक्तप्रत्ययाता. षट्प्रसिद्धस्य ९ कृतलक्षण· कृतंलक्षणंनामास्य लक्षणनाम्निचिन्हेचेतिविश्वः॥आहत-

स्फकलोदातृभोक्तरि ८ तत्परेप्रसितासक्ताविष्टार्थेद्युक्तउत्सुकः प्रतीतेप्रथितख्यातवित्तविज्ञानविश्रुताः ९ गुणैःप्रतीतेस्फकृत
लक्षणाऽहतलक्षणौ इभ्यआढ्योधनीस्वामीत्वीश्वरःपतिरीशिता१०अधिभूर्नायकोनेताप्रभुःपरिवृढोधिपः लक्षण· आहतमभ्यस्तं

लक्षणमस्य आहतंगुणितेपिस्यादितिविश्व द्वेगुण·प्रसिद्धस्य॥इभ्य. इभमर्हति दडादित्वात्य इभ्योधनवतीभ्यातुकरेण्वासल्लकीतराविनिहेमचंद्रः ॥आढ्य.
आध्यायतिके पृषोदरादि.॥धनी बहुधनमस्यइनि· त्रीणिबहुधनवतः॥स्वामी स्वगस्यास्ति स्वामीतिसाधुः स्वामिप्रभुविशेषयोरितिविश्व·॥ईश्वर ईष्टे ईशऐश्वर्ये व
रच् ईश्वरोमन्मथेशंभौनाथेस्वामिनिवाच्यवत्इतिविश्वमेदिन्यौ॥पति पाति पारक्षणे पातेर्डतिः पतिर्धवेनात्रिष्वीशेनेतिविश्व·॥ईशिता तृच् १० अधिभू. अधिभव-
ति क्विप्॥नायकः नयति नीञ्प्रापणे ण्वुलतृचौइतिसाधू नायकोनेतरिश्रेष्ठोहारमध्यमणावपीतिविश्वहेमचंद्रौ ॥प्रभु. प्रभवति विप्रेतिडु.॥परिवृढ परिवर्हति वृ
हनिवा वृहवृहिस्ढौ प्रभौपरिवृढइतिसाधुः॥अधिप अधिकंपाति आतश्चोपेतिकः. द्वादशप्रभोः॥

अधिकर्धि अधिकारूर्द्धिर्यस्य॥समृद्ध समृध्नोति ऋधुवृद्धौ अकर्मकत्वात्क्त इअतिसपन्नस्य कुटुंबव्यापृत कुटुंबेकुटुंबपोषणे॥व्यापृत व्याप्रियतेस्म पृङ्व्यायामे अकर्मकत्वात्क्त व्यापृतस्तरुणोसुवेतिवोपालित ११ अभ्यागारिक अभ्यागारेनियुक्त अगारानाठन् अभिअधिकआगारिकोवा॥उपाधि आधि उपागत उपाधिर्धर्मचिन्तायाकुटुंबव्यापृतेछल विशेषणेपुस्लितिविश्वमेदिन्यौ त्रीणिकुटुंबपोषणादिव्यापारयुक्तस्य॥वरांगरूपोय सासिंहसंहननइत्येकं अगानिवररूपाणिनागरूपाणिवराणिचतान्यगरूपाणिचतेरुपेन सिंहश्रेष्ठसंहननस्य संहननेनसिंहइतिवाराजदन्तादि १२ य सत्वसपदासपन्न सन्का र्यकर्त्तासनिर्धार्य॥सत्वस्यसपत् तदाह व्यसनेष्युदयेवापित्यविकारसदामन तत्सत्वमितित्रिप्रोक्तनयाविद्भिर्बुधे किल उद्यमकुर्वन् कार्यकरोति निश्चयेन

## अधिकर्द्धिं समृद्धः स्यात्कुटुंबव्यापृतस्तुयः ११ स्यादभ्यागारिकस्तस्मिन्नुपाधिश्चपुमानयं वरांगरूपोपेतोयः सिंहसंहननोहिसः १२ निर्वार्यः कार्यकर्त्ता यः सपन्नः सत्वसपदा अवाचिमूकोऽथमनोजवसः पितृसन्निभः १३ सत्कृत्यालंकृतां कन्यां योददातिसकूकुदः

ध्रियते धृञ्वरणे ण्यत् निर्धार्यइतिपाठेतु धृञ्धारणइतिधातु सपन्नइत्यनसंयुक्तइतिपाठ॥अवाक् नवाग्यस्य॥मूक मूभिनिकायति मूयतेवध्यतेवागस्य मूङ्बंधने बाहुलकादूक ई॥मनोजवस पैत्र्यत्येक. मनोजववेगवत्यस्मिन् मनोजवइत्यपि॥मनोजवपितृसध र्माणइतिनाममाला॥पितृसन्निभ पितेवसम्यग्निभाति भादीप्तौ आत्श्चोपसर्गेइतिक इपितृसमस्य १२ सत्कृत्यालंकृताकन्यापरिणेत्रेयोददातिस कूकु द इत्येक कोकति कुक् आदाने पृषोदरादि इत्याद्यूत्य॥

लक्ष्मीवान् लक्ष्मीरस्यास्ति मतुप् लक्ष्मणालोषधीभेदेसारस्यामपियोषिति रामभ्रातरिपुंसिस्यात्सश्रीकेत्वाभिधेयवत् लक्ष्म्याअन्वेतिसाधु, लक्ष्मण ॥ श्री-
ल श्रीरस्यास्ति श्रियलातिवा श्लीलइत्यपि ॥ श्रीमान् श्रीर्विद्यतेयस्य चत्वारिलक्ष्मीवत ॥ स्निग्धः स्निह्यतिस्म स्निहप्रीतौक्तः ॥ वत्सल. वत्सेपुत्रादिस्नेहपा
त्रे. भिलापोस्यास्ति हृस्नेहयुक्तस्य १४ दयालु· दयनेतच्छीलः आलुच् ॥ कारुणिक करुणाशीलमस्य शीलमितिठक् ॥ कृपालु. कृपालातिमतेतिडु .॥ सूरतः स्वम-
स्ययेदीर्घ. सूरतइति चत्वारिदयाशीलस्य ॥ स्वतंत्र स्व आत्मातंत्रप्रधानमस्य ॥ अपावृत· अपगतमावृतमावरणमस्य अपावृतस्त्वपहतेस्वतंत्रेपिचवाच्यवदि-
तिविश्वमेदिन्यौ ॥ स्वैरी स्वेनइरितुंशीलमस्य ईरगतौ सुप्यजातावितिणिनि· स्वैरइत्यपि ॥ स्वच्छंद. स्वच्छंदोभिलापोयस्य ॥ निरवग्रहः निष्क्रांतोवग्रहान्नियम

लक्ष्मीवाल्लक्ष्मणःश्रीलःश्रीमान्स्निग्धस्तुवत्सलः १४ स्याद्दयालुःकारुणिकःकृपालुःसूरतःसमाः स्वतंत्रोपावृतःस्वैरीस्वच्छंदो
निरवग्रहः १५ परतंत्रःपराधीनःपरवान्नाथवानपि अधीनोनिघ्नआयत्तोऽस्वच्छंदोगृह्यकोप्यसौ १६ खलपूःस्याद्बहुकरोदीर्घसूत्र
श्चिरक्रियः

नात् पंचस्वच्छंदस्य १५ परतंत्र· परःतंत्रप्रधानयस्य ॥ पराधीन. परस्मिन्नधीन· ॥ परवान् परवःस्वाम्यस्यास्ति मतुप् ॥ नाथवान् प्राग्वत् एव
मपि ॥ अधीनः इनमधिगतः अधिउपरिइनोस्येतिवा ॥ निघ्न. निहन्यते निगृह्यते हंतेर्घञर्थेकः आयत्त· आयतेस्म यतीप्रयत्ने केऽश्वेदितिइतिनेट् ॥ अस्वच्छंदः नस्व
छंदोस्य ॥ गृह्यक· गृह्यते ग्रहउपादाने पदेतिक्यप् क गृह्यकोनिघ्नकेच्छकइतिविश्वमेदिन्यौ पंचकअधीनमात्रे एकैनुनवापि: पर्यायमाहु· १६ खलपू. खलंचलरंपु
नाति पूञ्पवने क्विप् खलंभूस्थानकल्केष्वितिविश्वः ॥ बहुकर बहुकरोति अन् हे भूसंमार्जनवत् ॥ दीर्घसूत्र दीर्घंसूत्रंव्यवस्थायस्य सूत्रंतत्तुव्यवस्थयोरिति·
विश्व. ॥ चिरक्रियः चिरेणक्रियायस्य हेविलंबेनक्रियासंपादकस्य ॥

हा जाल्म जाल्मयति जाल्यतेवा नलअपवारणे वाहुलकान्म जाल्मस्तूपामरेऽसमीक्ष्यकारिणिचेतिहेम ॥ असमीक्ष्यकारी असमीक्ष्यः विचार्यकर्तुशीलमस्य द्वे
योगुणदोषानविमृश्यकरोतितस्य ॥ य क्रियासुमंदोऽलस मूढोपासकूठइत्येक ॥ कुठति कुठिचगतिप्रतिघाते आलस्येन १७ कर्मक्षम कर्मसुक्षम ॥ अलकर्मी-
ण कर्मणक्रियायैअलसमर्थ अपटुदक्षेविरव द्वे क्रियाकरणेसमर्थस्य ॥ क्रियावान् क्रियास्यास्ति मतुप् एककार्म कर्मशील कर्मशीलमस्य छत्रेतिणप्रत्य
य स्त्रियातुकार्मी नाच्छीलीतिङीप् द्वे कर्मसुफलमनपेक्ष्यप्रवृत्तस्य ॥ कर्मसूर कर्मणिसूर ॥ कर्मठ कर्मणिघटते कर्मणिघटोठच् द्वे प्रयत्नेनप्रारब्धकर्मपरि-
समापकस्य १८ भरण्यभुक् भरण्यंवेतनंभुंक्ते क्विप् कर्मण्यभुगित्यपि ॥ कर्मकर कर्मकरोति कर्मणिभृतोऽइति द्वेमूल्येनकर्मकुर्वत य तत्क्रिय स्वकर्मकार

जाल्मोऽसमीक्ष्यकारीस्यात्कुंठोमंद क्रियासुय १७ कर्मक्षमोलंकर्मीण क्रियावान्कर्मसूद्यत सकार्म कर्मशीलोय कर्मसूरस्तुकर्मठः १८
भरण्यभुक्कर्मकर कर्मकारस्तुतत्क्रिय अपस्नातोमृतस्नातआमिषाशीतुशाष्कुल १९ बुभुक्षित स्यात्क्षुधितोजिघत्सुरशनायित

कः तत्कर्मैवक्रियायस्य कर्मकरोति कर्मण्यण् ॥ अभृतक्रियइत्यर्थः योवेतनविनाकर्मकरोतितस्यैक ॥ अपस्नात अपकृष्टस्नात मृतस्नात मृतेस्नात द्वेमृतसुहृदिस्नातस्य
॥ आमिषाशी आमिषमश्नाति अशभोजने णिनि ॥ शौष्कुल शष्कुलीशष्कमासेपिमासमात्रेपिसामता नामन्ति शेषइत्यण् स्वामीतुशाष्कलइतिपठति नत्रपृषोदरा
दि शष्कुल-शष्कमासस्यपणिकेपिशिताशिनीतिहेम १९ बुभुक्षित बुभुक्षासंजातायस्य इतच् क्षुधित क्षुध्यतिस्म ॥ जिघत्सु अत्तुमिच्छु सनाशंसेतिउ
॥ अशनायित अशनस्येच्छा अशनायासासंजाताऽस्य चत्वारिबुभुक्षितस्य ॥

परान्न परस्यान्नंपरान्नंनित्यमस्यमत्वर्थे अन्॥परपिंडाद परस्यापिंड तमत्तिकर्मण्यण्पिंडा जीवनइतिधरणिः द्वे परान्नजीवन्तस्य॥भक्षक भक्षयतिभक्ष अदने ण्वुल्॥घस्मर घसतिघस्तृअदनेक्मरच्॥अद्मरः अत्तीतिअदभक्षणेक्मरच्त्रीणिभक्षण रस्य २० आद्यून आदेवीतादिव क्तः॥औदरिकः उदरेप्रसित औदरिकः उदरादितिठक्॥द्वे विजि॥ वर्त विवर्जितेउत्कर्षेच्छारहिउदरात्तुगाद्यूनइतिठक्॥आत्मंभरिः आत्मानविभर्ति॥कुक्षिंभरिः कुक्षिंविभर्त्ति फलेग्रहइति सूत्रेउभयोर्निपातनं॥द्वे स्वोदरंबिभर्तितस्य पेठभरूइतिख्या० २१ सर्वान्नीनः सर्वेषामन्नानितानिभक्षयतिअनुपदेतिखः॥सर्वान्नभोजीसर्वेषांअन्ना

परान्नःपरपिंडादे भक्षकोघस्मरोद्मरः २० आद्यूनःस्यादोदरिकोविजिगीषाविवर्जिते उभौत्वात्मंभरिः कुक्षिंभरिःस्वोदरपूरके २१ सर्वान्नीनस्तुसर्वान्नभोजीगृध्नस्तुगर्द्धनः लुब्धोभिलाषुकस्तृष्णक्समौलोलुपलोलुभौ २२

निसर्वान्नानिभोक्तुंशीलमस्य सप्यजातौवितिणिनिः द्वे सर्वान्नभक्षकस्य॥गृध्नः गर्द्धनशीलः गृधु अभिकक्षायां त्रसिगृधीतिक्नुः द्वे आकांक्षाशीलस्य॥लुब्धः लुभ्यतिस्म लुभगार्ध्ये गत्यर्थेतिक्तः लुब्धआकांक्षिणिव्याधइतिहेमचंद्रः॥अभिलाषुकः अभिलष्यति लषकांतौ लषपत्युकञ्॥तृष्णक् तृष्यति वितृषापिपासायां स्वपि तृषोनजिङ्॥तृष्णक् तृष्णजो तृष्णजः एवंज्ञेय त्रीणिअभिलाषशीलस्य पंचापिलुब्धस्येतिकेचित्॥लोलुपः गर्हितंलुंपति लुपूच्छेदने लुपसदेतियङ् ताहूरच्॥ लोलुभः भृशंलुभ्यति धातोरेकाचइतियङ् ताहूच् लुभगार्ध्येद्वे अतिलुब्धस्य २२

सोन्मदः उन्मादेन सह वर्त्तते ॥ सून्माद इत्यपि तत्र सः अतिशायित उन्मादोऽस्य उन्मद इत्यपि च पाठः तत्र तु उद्गतो मदो हर्षोऽस्य उन्मदिष्णुः उन्मादशील अ
लङ्कृञिती ष्णुच् हृ उन्मादशीलस्य ॥ अविनीत न व्यनायि णीञ् प्रापणे क्तः ॥ समुद्धत समुद्धतिस्म हन्तेः क्तः समुद्धन्यतेस्मेति वा समुद्धत समुदीर्णस्यावि
नीतेन वान्यनत् हृद् दुर्विनीतस्य ॥ मत्तः मद्यते स्म गत्यर्थेति मदेः क्तः ॥ शौण्ड शुण्डायां पानागारे भव तत्र भव शौण्डो मत्तेन च विख्याते पिप्पल्यानुमेव स्त्रियां
भितिनिरूनमेदिन्यां ॥ उत्कट उद्गत कट आवरण मावरको यस्य परस्समेदस्य कटच् उत्कटस्तीव्रमत्तयोरितिहैम ॥ क्षीब क्षीबते स्मास्मिन्नमेदे अनुपसर्गोन्निनिपाति

सोन्मादस्तून्मदिष्णुः स्यादविनीत समुद्धत मत्ते शौण्डोत्कटक्षीबा कामुके कमिताऽनुक २२ कम्र कामयिता भीक कमन का
मनाभिक विधेयो विनयग्राही वचनेस्थित आश्रव २४ वश्य प्रणेयो निभृत विनीत प्रश्रिता समा धृष्टे धृष्णग्वियातश्च प्रगल्भ प्रतिमान्विते २५

न शीवन् निनात्वेप्यस्ति च जा रमत्तस्य ॥ कामुक कामयते कमुकञ् लोपतिउकञ् ॥ कमिता णिङ भावतृन् ॥ अनुक अनुकामयते अभिकामयते अनुकाभिकीक साधुः २२ कम्र र
प्रत्ययः ॥ कामयिता कामयते तृन् ॥ अभिकामयते ॥ अभीक अनुकाभिकेति साधुः अभीक कामुके क्रूरे निर्भये मिथुना केवी अभिकारित्यपि अभीकोदार्यम भ्यान्ह रवम भ्यामच ॥ कमन
अमुपुकामेभिरूपे शोकपादेप ॥ कामनरित्यपि नव कामुकस्य ॥ विधेय मद्वैत्यो निदत्थे वाविधातुशस्य अचोयत् ॥ विनयग्राहितुशीलमस्येति णिनि ॥ वचनेस्थित वचनेनिष्ठति स्मतत्पुरु
षे कृतीत्यलुक् ॥ आश्रव आशृणोति श्रृ श्रवणे पचाद्यच् आश्रवो वचनेस्थिते प्रतिज्ञायां च क्लेशे च इति हैम च त्वारि वचनधारिणः २४ वश्य वशमर्पितस्य वशं गत इति यत् वशम
पननायास्यादिति वित्त ॥ प्रणेय प्रकर्षेण नेतुशक्य अचोयत् ह्रव शगतस्य अन्नविधेयादिषद् पिवशगतस्य वा ॥ निभृत नितरां अभारि भृञ् भरणे क्तः प्रत्यय विनीत व्यनायि इति ॥ प्रश्रि
तः प्रथयम श्राथिगुणः श्रिञ्स सयानि श्राभयो विनीतस्य ॥ धृष्टः धृष्णोति स्म ञिधृषा प्रागल्भ्ये निष्ठा ॥ धृष्णक् धृषेर्भवतिन क्विद् धृष्णगित्यपि धृष्णक् धृष्णजो धृष्णाज एवनेम ॥ वियातः विरु
द्धं यातं चेष्टितं यस्य वा पि निर्लज्जस्य ॥ प्रगल्भ प्रगल्भते गल्भ धार्ष्ट्ये पचाद्यच् ॥ प्रतिमान्वितः प्रतिभयान्वितः प्रज्ञानवनवोन्मेषशालिनी प्रतिभामते निरुद्धः हैम प्रत्युत्पन्नमतेः २५

अधृष्ट ॥ शालीन शालाप्रवेशमर्हतिशालीनकौपीनेतिसाधु हे सलज्जस्य ॥ विलक्षः विशेषेण लक्षयतिलक्ष आलोचने अच् ॥ विस्मयान्वित विस्मयेनाश्चर्येणान्वितः ॥ द्वे पर
कीयधर्मशालोदोषासाश्चर्यस्य ॥ अधीर नधीरोधैर्ययस्य ॥ कातर ईषत्तरति ईषदर्थेचेतिको कादेशः द्वे भयक्षत्पिपासादिव्याकुलस्य ॥ त्रस्त त्रस्यति त्रसीउद्वेगेक्त त्रस्नुरि-
त्यपि ॥ भीरु बिभेति ञिभीभयेक्रु भिरुरान्तेत्रिलिंग स्याद्भूरयोषितियोषितीतिविश्वमेदिन्यौ ॥ भीतइत्यपि ॥ भीरुक क्रुकन् बिभेति ॥ भीलुकः क्लुकन् चत्वारिभयशील-
स्य २६ आशंसु आशंसते आङ्शासुइच्छायां सनाशंसेरुः ॥ आशंसिता ताच्छील्ये तृन् द्वे इष्टार्थमाशंसितो ॥ गृहयालु गृह ग्रहणे आलुच् ॥ गृहीता गृहीतेत्यपि तृन् द्वे ग्र

स्यादधृष्टेतुशालीनोविलक्षोविस्मयान्विते अधीरकातरस्त्रस्तभीरुकभीलुकाः २६ आशंसुराशंसितरिगृहयालुर्ग्रहीतरि
श्रद्धालुःश्रद्धयायुक्तेपतयालुस्तुपातुके २७ लज्जाशीलेऽपत्रपिष्णुर्वंदारुरभिवादके शरारुर्घातुकोहिंस्रःस्याद्वर्द्धिष्णु
स्तुवर्द्धनः २८

हणशीलस्य ॥ श्रद्धा आस्तिक्यबुद्ध्यायुक्तस्तत्रश्रद्धालुरित्युच्यते ॥ श्रद्धधाति आलुच् ॥ पतयालु पतयतितच्छीलः पतगतौवा आलुच्
॥ पातुकः लषपतेत्युकञ् २७ लज्जाशील लज्जाशीलमस्य ॥ अपत्रपिष्णुः अपत्रपते इष्णुच् द्वे लोकलज्जायुतस्य ॥ वंदारु वंदतेतच्छीलः वदि अभिवादनस्तुत्यो
द्वे वंदारु ॥ अभिवादक अभिवादयति ण्वुल् द्वे वंदनशीलस्य ॥ शरारु शृणातितच्छील शॄहिंसायां ॥ घातुकः उकञ् हन्ति ॥ हिंस्र हिनस्ति हिसि हिंसायां नमि
कंपीतर हिंस्राकाकादनीमांस्यो स्त्रियां ॥ स्याद्घातुकेन्यवदितिविश्वमेदिन्यौ प्राणिहिंसाशीलस्य ॥ वर्द्धिष्णु वर्द्धतेतच्छील वृधुवृद्धौ इष्णुच् ॥ वर्धनः अनुदात्तेतश्चयु
च् ॥ वर्द्धन छेदनवर्द्धनवर्द्धनीतुलतिकेतुहेम द्वे वर्द्धनशीलस्य २८ ७ ७ ७ ७ ७ ७

उत्पतिष्णु उत्पतनशील पत्लृ गतौ ॥ उत्पतितोद्गु उत्पतनशीलस्य अत्रये त्रिल्निष्णुचस्नुकुक्लुकञिल्यादय प्रत्ययास्तेत च्छीलतद्धर्मतत्साधुकारिषुबोध्द्व्य ताच्छी-ल्येमयोगः शयेण ॥ अलंकरिष्णु अलंकरणशील ॥ मडन मडनशीलः मडि भूषाया क्रुधमंडार्थेभ्येश्चेतियुच् हे अलंकरणशीलस्य ॥ भूष्णुः ग्लाजिस्थश्च भवनशील ॥ भविष्णु ॥ भविता त्रीणि भवनशीले ॥ वर्तिष्णु वर्तनशीलः इष्णुच् ॥ वर्तनः वृतु वर्तने अनुदात्तेतश्च युच् हे वर्तनशीलस्य २९ निराकरिष्णुः निराकरणशील ॥ क्षिप्नुः क्षेपणशील क्षिप प्रेरणे क्नु क्षिष्णुरिति केचित् हे निराकरणशीलस्य ॥ सान्द्रस्निग्धः मेदुरः स्यात् ॥ सान्द्रो घनः सचासौस्निग्धश्च मदनशील ञिमिदा स्नेहने घुरच् एक ॥ ज्ञा

उत्पतिष्णुस्तूत्पतिताल्ंकरिष्णुस्तु मंडन भूष्णुर्भविष्णुर्भविता वर्तिष्णुर्वर्तन समौ २९ निराकरिष्णु क्षिप्नु स्यात्सान्द्रस्निग्धस्तु मेदुर ज्ञाता तु विदुरो विन्दुर्विकासी तु विकस्वर ३० विसत्वरो विसृमर प्रसारी च विसारिणि सहिष्णु सहन क्षन्ता तितिक्षु क्षमिता क्षमी ३१

ता जानाति तृन् ॥ विदुर वेदनशील विदिभिदी सकुरच् ॥ विंदु विदुरिछुरितिसाधु त्रीणि ज्ञानशीलस्य ॥ विकाशी विकसति कस गतौ वौकसे तिधिनुण् ताल्व्यातो पि ॥ विकस्वर विकसनशीलः वरच् विश्वक रइत्यपि विकाशः स्फुटने व्यक्तावितिदन्त्यतथरपि हे विकासशील ३० विसृत्वर विसरणशील सृ गतौ इण्नशजिसर्तिभ्यः क्वरप् तुक् ॥ विसृमर स्मरच् ॥ प्रसारी प्रसरणशील धिनुण् ॥ विसारी विसारोस्यास्तिइनिः चत्वारि प्रसरणशीले ॥ सहिष्णु सहनशील षह मर्षणे इष्णुच् ॥ सहन अनुदात्तेतश्च युच् ॥ क्षन्ता क्षमणशीलः क्षमु सहने तृन् तितिक्षुः तितिक्षणशीलः सन्नताद् ॥ क्षमिता तृन् पक्षे इट् ॥ क्षमी धिनुण् इति षट् क्षमशीले ॥ ३१ ७ ७ ७ ७

क्रोधन. क्रोधनशील. क्रुधकोपे क्रुधमंडेतियुच् अमर्षण:॥नमर्षणशील प्राग्वत्॥कोपी अनश्यंकुप्यति आवश्यकेणिनि. त्रीणिक्रोधनस्य॥ चंड चंडते चडिकोपे पचा-
द्यच् चडस्त्क यमदासेतिकोपने॥तीव्रेदेत्यविशेषेच चंडोतुशिवयोषिति चंडाधनहरीशंखपुण्योरितिहेमचंद्र ॥अत्यंतकोपन अत्यतकुप्यातिहृ अतिक्रोधनस्य क्रुधेतियु
च्॥जागरूक:जागरणशील जागृनिद्राक्षये जागर्तेरूक:॥ जागरितातृन् हृजागरणशीले॥घूर्णित घूर्णतेस्म घूर्णभ्रमणे गत्यर्थेक्त· घूर्णाजातास्येतिवा इतच्॥ प्रचला
यित: प्रचलइवाचरति क्यड् प्रचलायाजातास्येतिवा प्रचलायतेस्म गत्यर्थेतिक्त हृसजातघूर्णस्य २२ स्वप्नक् स्वपनशील. स्वपिइतिनजिङ्॥ शयालु: शयनशील:शी
ङ्स्वप्ने शीडोवान्थइत्यालुच् शयालु:स्यादजगेरनिद्राशीले चकुजेर इतिविश्वमेदिन्यो निद्रालु निद्राशील: द्राकुत्सायागतो आलुच त्रीणिनिद्राशीलस्यनिद्राण. स्वप्नक्श

क्रोधनोमर्षण:कोपीचंड स्त्वत्यंत कोपन: जागरूकोजागरिताघूर्णित: प्रचलायित: २२ स्वप्नक्शयालुर्निद्रालुर्निद्राणश
यितौसमौ पराङ्मुख:पराचीन:स्यादवाङप्यधोमुख:२३ देवानंचतिदेवद्र्यङ् विष्वद्र्यङ् विश्वगंचति य:सहांचतिसध्र्यङ्
ससतिर्यङ्यस्तिरोंचति २४

यालुर्निद्राणशयितौसमौ क्तसंयोगादिरीतिनत्वंनिद्रातिस्मनिद्रितइत्यपि इतच्॥ शयित. शेतेस्मक्त हृनिद्राप्राप्तस्य॥
पराङ्मुख परांचत्यनभिमुखोभवति अंचुगतिपूजनयो. परापूर्वकात्क्विन् पराचीन पराङ्मुखस्याविभाचीरितिख. हृविमुखस्य॥अवाङ् अवाञ्च त्यधोमुखोभवति अवाङ् क्वि
न्नंत अवांचो अवाच· एवमूत्य॥ अधोमुख अधोमुखंयस्य हृ २३ देवद्र्यङ् देवानंचतिगच्छतिपूजयतिवाक्विनि अन्चान्यादेश: एकं चांत स्त्रियांतुदेवद्रीची॥ विष्वद्र्यङ् वि
श्वक्समतात् अंचतिगच्छतिविश्वद्र्यङ् इतिताल व्यमध्यापि स्त्रियांविष्वद्रीची चांत एक सध्र्यङ् सहांचतितुल्यंगच्छति एकं सध्र्यङ् सध्र्यंचौ सध्र्यङ्च: एवमुन्नेयं
सर्वत्र अन्चे क्विनि अन्चादेश: स्त्रियांतुसध्रीची तिर्यङ् तिरोवक्रं अंचति क्विन्मात्रं एक २४

वद। वदति वदव्यक्तायांवाचि ॥ वदावद अतिशयेनवदति पचाद्यच् ॥ वक्ता वक्तिवक्त्वपरिभाषणेनृन् वक्तातु पंडितेपिस्याद्वाग्मिन्यान्यभिधेयवदितिविश्व भाणिवत्॥ वा गीशः वाचामीशः वाक्पति वाचांपति हेपट्वक्तु वाचोयुक्तिपटु वाचोयुक्तिः सयुक्तिकवल तत्रपटुः वाक्दिक्पश्यद्भ्य इति अलुक् ॥ वा ग्मी प्रशस्ता वागस्य वाचोग्मिनिः वाग्मीपटोसरावाच इतिविश्वमेदिन्योर्द्वैनैयायिकस्य ॥ वावदूकः दूकोवादिपठादूक ॥ अतिवक्ता अतिवक्ति साधुकारिण्युपसंख्यान इति अकृत्वौन्लोतिसूत्रोक्तपदार्थे द्वे बहुभाषिणि २५ जल्पाक जल्पति जल्प व्यक्तायांवाचि षाकन् ॥ वाचाल ॥ वाचाट। आलजाटचौबहुभाषिणि इतिसाधू ॥ बहुगर्ह्यावाग्यस्य जल्पाकिषट्त्वारूपाया द्वाप् ॥ चत्वारिबहुगर्ह्यभाषिणः ॥ दुर्मुख दुष्ट निंदितमुखयस्य दुर्मुख कापिभिनागभिदोर्नामुखेरत्रिष्विति विश्व ॥ मुखर निंदितमुखमस्य मत्वर्थेर खशद्वान्न-

वदोवदावदोवक्तावागीशोवाक्पति समौ वाचोयुक्तिपटुर्वाग्मीवावदूकोतिवक्तरि २५ स्याज्जल्पाकस्तुवाचालोवाचाटोबहु गर्ह्यवाक् दुर्मुखेमुखराबद्धमुखौशक्तुः प्रियंवदे २६ लोहल स्यादस्फुटवाग्गर्ह्यवादीतुकद्वद समौकुवादकुचरौस्याद- सौम्यस्वरोस्वरः २७

लक्षणयवचनपर ॥ अबद्धमुख नवध्नातियेमितिमुखमस्यत्रीण्यप्रियवादिनः ॥ शक्तु शक्नोति वक्तुमिति शाकुशन्ने क ॥ प्रियंवद प्रियंवदति प्रियवशेवद खच्मुम् शक्तइतिस्वामी शक्तइतिसर्वधर द्वेप्रियवक्तरि २६ लोहल लोहलाति कप्रत्यय लोहल रटसलाघा रा । व्यक्तवाचिनित्रिष्वितिविश्वहेमचंद्रौ ॥ अस्फुटवाक् नफुटावागस्य ॥ द्वे अस्फुटवादिनि ॥ गर्ह्यवादि गर्ह्यंवदति णिनि ॥ कद्वदः कुत्सितवदतिरपवदयोश्चोतिकु न्देकुत्सितवादिन ॥ कुवादः कुत्सितवदति बहुव्रीहिर्वा ॥ कुचरः कुत्सितचरति अन्द्वेदोषकथनशीलस्य ॥ असौम्यस्वर असौम्यारुक्ष स्वरोयस्य ॥ अस्वर अप्रशस्त स्वरोयस्य द्वेकाकादिवद्रूक्षस्वरस्य २७

रवण रवणशील. रुशब्दे उभयत्र चलनेति युच् ॥ शब्दन शब्दनशीलः द्वे शब्दशीलस्य ॥ नांदीवादी नांदीवदनशील णिनिः ॥ नांदीकरः नांदिं करोति वदतीति टप्रत्ययः नंदंत्याह आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रवर्तते देवद्विजनृपादीनां तस्मान्नांदीति कीर्त्यत इति रभस द्वे स्तुतिविशेषवादिनः नाटकादौ मंगलार्थं भेर्यादिवादनशी लस्येत्यर्थः ॥ जडः जलति जल घातने अच् डलयोरभेदः इष्टं वानिष्टं वा सुखदु:खं वानेच्छहयोर्मोहात् विंदति परवशगः स भवेदिह जडसंज्ञक: पुरुष ॥ अज्ञ. न जानाति इगुपधेति कः द्वे अत्यंतमूढस्य यो वक्तुं श्रोतुं च शिक्षितो न स्यात् स एडमूक. एडो बधिरश्चासौ मूकश्च पाठांतरे तु नास्त्येडो मूकोस्मादित्यर्थ त्रिलिंगोनेडमूकः

**रवणः शब्दनो नांदीवादी नांदीकरः समौ जडोऽज्ञ एडमूकस्तु वक्तुं श्रोतुमशिक्षिते २८ तूष्णींशीलस्तु तूष्णीको नग्नोऽवासा दिगंबरे निष्कासितोऽवकृष्टः स्यादपध्वस्तस्तु धिक्कृतः २९**

स्यान्न्केटे वागश्रुतिवर्जित इति रभसः एके २८ तूष्णींशील तूष्णीं शीलं यस्य शीले कोमलोपश्चेति साधु ॥ तूष्णीकः द्वे मौनशीलस्य ॥ नग्न. नजते स्म ओ नजी व्रीडे क्त नग्नावदिक्षपणयो पुंसि त्रिषु विवाससीति विश्वः ॥ अवासा न वासोस्य ॥ दिगंबरः दिश एवांबरं यस्य दिगंबर. स्यात्क्षपणे धने तमसि शंकरे त्रीणि नग्नस्य ॥ निष्कासितः निष्कास्यते स्म कसगतौ ण्यंतात् क्त निष्काशित इत्यपि ॥ अवकृष्ट. अवकृष्यते स्म कृष विलेखने क्तः द्वे निर्गमितस्य ॥ अपध्वस्यते स्म ध्वंस अधःपतने क्तः अपध्वस्तः परित्यक्ते विदितेप्यवचूर्णिते ॥ धिक्कृतः धिगिति कृतः द्वे निर्भर्त्सितस्य २९ ७ ७ ७ ७ ७

आत्तगर्व आत्तोगर्वोयस्य आत्तगर्धइत्यपिपाठांतरं गर्धोगर्धक आमोदे क्रोशसवध्यगवयोरितिविश्व गर्धोगर्वोलवोपिनेतित्रिकाण्डशेषः॥अभिभूत–अभिभूयतेस्म
क्त ह्रेभयग्रदर्पस्य चत्वारोपिपर्यायाइत्येके॥दापित दाप्यतेस्म दापयतीति॥साधित साध्यतेस्मसाधसंसिध्दौ हूधनादिकप्रदापितस्य प्रदापितस्य धनादेर्वा॥ प्रत्या
दिष्टः प्रत्यादिश्यतेस्मदिशअतिसर्जनेक्त निरस्तः निरस्यतेस्म असुक्षेपणेक्त पेषितशेरसत्यक्तेत्वरितोदिते निस्पुते प्रतिहतेचनिर्हेम ॥प्रत्याख्यात प्रत्याख्यायते
स्मख्याप्रकथनेचक्षिङ्वा॥निराकृत क्त चत्वारिनिराकृतस्य ४० निकृत न्यक्कारकृञ्‌क्त निकृतविप्रलब्धेस्याच्छठेभिषितिनिगदेमादिन्यौ॥विप्रकृत ह्रेविव-

आत्तगर्वोभिभूत स्याद्दापित साधित समौ प्रत्यादिष्टोनिरस्त स्यात्प्रत्याख्यातोनिराकृत ४० निकृत स्याद्विप्रकृ
तोविप्रलब्धस्तु वञ्चित मनोहत प्रतिहत प्रतिबन्धोहतश्चस ४१अधिक्षिप्त प्रतिक्षिप्तोवध्दे कीलितसंयतौ आप
न्नआपत्प्राप्त स्यात्कांदिशीकोभयद्रुत ४२

र्णीकृतस्य॥विप्रलब्धःविप्रलभ्यतेस्म वञ्चुगतौ॥वञ्चित वञ्च्यतेस्मक्त ह्रेवञ्चतोगतस्य॥मनोह
त मनोहतयस्य॥प्रतिहत प्रतिहन्यतेस्मह्रेतः क्त प्रेचत्सविहतदुष्टेप्रतिस्खलितरुध्दयो॥प्रतिबध्द प्रतिबध्यतेस्मबधबन्धने॥हत हन्यतेस्मचत्वारिमनसिहतस्य
कृत्तमनोमार्गस्येत्यर्थ४१अधिक्षिप्त अधिक्षिप्यतेस्म क्षिपप्रेरणेक्त अतिक्षिप्त प्रणिहितेकुत्सितेप्रर्सितेभिषितिविश्वहेमचन्द्रौ॥प्रतिक्षिप्त प्रतिक्षिप्तवारिते-
स्यात्प्रेषितपत्रकेभिषित्युक्तत्वात् ह्रेकृताक्षेपस्य कस्यचिच्छौर्यादिकृप्रतिस्पर्धमानस्यदुर्जनमधिक्षेपइतिराजमुकुटः॥बध्द बध्यतेस्म बधबन्धने॥कीलित की
ल्यतेस्मकीलबन्धने॥संयत संयम्यतेस्म यमउपरमेक्त श्रीणिरज्ज्वादिनानिबध्दस्य॥आपन्नःआपद्यतेस्मपदगतौ द्वेमसेर्वक्तप्रत्ययाता आपन्न सापदिप्राप्तेपिवा
च्यलिंगक॥आपत्प्राप्त आपदप्राप्तः ह्रेआपदप्राप्तस्य॥कांदिशीक कांदिशंयामीत्याह तदोहतिमाशङ्कादिभ्यइतिठक्पृषोदरादि ४२ ७ ७ ७

आक्षारित· आक्षार्यतेस्म क्षरसंचलने ण्यंतात्क्त· आक्षारोमैथुनप्रत्याक्रोशोस्य इतिवा॥ क्षारितः क्षारितःस्नावितेक्षारेरभिशस्तेपिचत्रिषु॥अभिशस्त अभिशा
स्यतेस्म शसुहिंसायांक्त· त्रीणिमैथुननिमित्तंमिथ्यादूषितस्य॥संकसुकः सकसतीति कसगतौ उकन्॥अस्थिर· नस्थिर. द्वेचलस्वभावस्य॥व्यसनार्त्तः व्य
सनेनार्त्त·॥उपरक्तःउपरज्यतेस्म रञ्जरागेक्तः उपरक्तोव्यसनार्तेराहुग्रस्तेइदुसूर्ययोरितिविश्वः द्वेव्यसनपीडितस्य॥विहस्तः विक्षिप्तःहस्तोयस्य॥व्याकुलः कुल
धातोरिगुपेतिकः ४३ विक्लवः विक्लवते क्लुङ् गतौ अच्॥विह्वल· विह्वलतीति ह्वलचलने अच् द्वेशोकादिनागात्रभगंप्राप्तस्य॥विवश विरुद्धंवष्टि वशकांतौ अच्
विवशास्त्रिष्ववश्यात्मादिष्टदुष्टधियोरपि॥अरिष्टदुष्टधी अरिष्टेनदुष्टाधीर्यस्य द्वे आसन्नमरणसूचित लक्षणेनदूषितमते·॥कश्य कशामर्हति दंडादित्वाद्यः

**आक्षारितःक्षारितोभिशस्तेसंकसुकोस्थिरे व्यसनार्त्तोपरक्तौद्वौविहस्तोव्याकुलौसमौ ४३ विक्लवोविह्वलःस्यात्तुविवशोऽरिष्ट दुष्टधीः कश्यःकशार्हेसन्नद्धेत्वाततायीवधोद्यते ४४ द्वेष्येत्वक्षिगतोवध्यःशीर्षच्छेद्यइमौसमौ विष्योविषेणयोवध्योमुसल्योमु सलेनयः ४५**

कश्यंकशार्हमद्ययोरित्युक्तत्वात्॥कशार्हः कशावेत्रंमर्हति अर्हइत्यच् द्वेताडनार्हस्य॥सन्नद्धे सन्नत्द्यतिस्म
णह्बंधनेक्त.॥वधोद्यते वधेउद्यतः तत्र आततायीत्येक आततयथातथाऽयितुशीलमस्य अयगतौ सुपीतिणिनि. ४४ द्वेष्यः द्वेष्टुमर्हः द्विषअप्रीतौण्यत्॥अक्षिग-
तः अक्षिविषयंगतः शाकपार्थिवादिः द्वेद्वेषार्हस्य॥वध्य. वधमर्हति दडादिभ्योयः यद्वाहन्तुमर्हः हनोवधश्चेतियत्॥शीर्षच्छेद्य. शीर्षस्यछेदस्तमर्हति शीर्षच्छेदा
द्यच्चेतियत् द्वेशिरच्छेदार्हस्यवध्य वधमर्हति॥योविषेणवध्य हतव्यः सविष्यइत्येक नोवयइतियत् य मुसलेनवध्य. समुसल्य दंडादि एक ४५

शिश्निदान: शिश्विदे श्वितिद्विपत्ये लिंड कानच अनित्यत्वान्नमुन्॥ अकृष्णाकर्मा अकृष्णशक्लकर्मास्यहेद्पुण्यकर्मण कृष्णावर्मेतिपाठांतर तत्रतु हेपापकर्मीण अकरिवनाव णइतिपाने श्वितेर्दम्भेत्यानन्दलसनोलुकुत्र श्वेतितुमिन्छाति॥ चपल चपति चपसाल्वने कलच् चपलश्चोरवेन्चलइत्यक्तत्वात् क्षणिकेचिकुर शीघ्रेपारदेमस्यरानेरे गीनेतुचपलापिस्यात्पिप्पल्यापियुतिश्रिया पुश्वल्यामपीनिहेम॥ चिकुर चिनिअव्यक्तकु रति कुरशब्दे इगुपेतिक चिकुरो:हेोगृहे वर्भो केशेचचलशैलयो पक्षि दस्तभिदोरन्यापिइतिहेम हेदोषमनिश्चित्यवधादिकमाचरत॥ दोषैकदृक् दोषएकस्मिन्हक् ज्ञानयस्य॥ पुरोभागी पुर पूर्वभजते भजसेवायाधिनुण् हेदोषैकग्र हस्य॥ निकृत निकृतति कृतीछेदने इगुपेतिक निकृतविप्रलब्धेस्यान्छठेविप्रकृतेत्रिष्वित्युक्तत्वात्॥ अनृजु नऋजु॥ शठ शठति शठकैतवे शठोमध्यस्थ

शिश्विदानोकृष्णाकर्माचपलश्चिकुरस्समो दोषैकदृक्पुरोभागीनिकृतस्त्वनृजु शठ ४६ कर्णेजप सूचक स्यात्पिशुनोदुर्जन खल नृशंसोघातुक क्रूर पुरुषेधूर्तेधत्तूरकेपिचेतिहेमचंद्र त्रीणिवञ्चकाशायस्य ४६ कर्णेजप कर्णेजपति जपव्यक्तायावाचि स्तवेतिअच्॥ सूचक सूचयति सूचपैशून्ये ण्वुल् सूचकस्तु कथकेसीवनद्रव्येमार्जारेवायसेपिचेतिहेम हेकर्णेपरापवादवदत विस्मृतबोधकस्येतिकेचित्॥ पिशुन पिशति पिश अवयवे उननेसचकित् पिशुनकुङ्कुमेपिचेत्यन्यत्रोक्त पिशुनतु कपिवक्त्रेचकाकेनासूचककूरयोस्त्रिषु पृच्छायापिशुनास्त्रीस्या दितिविश्वमेदिन्यो॥ दुर्जन दुष्टश्चासौजनश्च॥ खल खलति खलसचलने अच् खच्छिद्रलातिवा आतइतिक खल कल्केभुविस्थानेक्रूरेकर्णेजपे:धमेइतिहेमचन्द्रमेदिन्यो त्रीणिपरस्य भेदस्य गुरुचरणास्तु सूचकपर्यायाएवैतानाह॥ नृशस नृन्शंसति शंसुहिंसाया कर्मण्यण्॥ घातुक हननशील लषेत्युकञ्॥ क्रूर कृन्तति कृतीछेदने रकिपातो क्रूआदेश: क्रूरस्तु ॱठिनेघोरेनृशंसेप्यभि दितिवि ॥

पापः पापमस्यास्ति मत्वर्थेऽच् चत्वारिपरिद्रोहकारिणः॥ धूर्तः धूर्वति हिनस्ति धूर्वीहिंसायां क्तेवलोपः धूर्तंतुरवंडलवणे धूर्तोधत्तूरमायिनोरितिहेमचंद्रः ॥ वञ्चकः वंचयति वंचुगतौ ण्यंतात्ण्वुल् वञ्चकस्तुरवले धूर्तेग्रहवभ्रौ च जंबुके इति विश्वमेदिन्यौ द्वे प्रतारणशीलस्य ४७ अज्ञः नजानाति इगुपधेति कः अज्ञश्च जडमूर्खयोरितिविश्वः॥ मूढः मुह्यतिस्म मुहवैचित्त्ये क्तः मूढस्तंद्रितेजडेइतिविश्वः मुग्धइत्यपिस्यात् पात्वविकल्पात् यथाजातः जातंजन्मकालविशेषमनतिक्रम्यवर्ततेतदस्यास्ति अर्शआद्यच् ॥ मूर्खः मुह्यति खप्रत्यायात्.॥ वैधेयः विधेयंविधानं तस्यायमधिकारी तस्येदइत्यण्॥ बालिशः बलिशस्तु शिशौमूर्खइत्युक्तत्वात्॥ कदर्यः कुत्सितोऽर्यः कुगतीतिसमासः कोःकत्तत्पुरुषेइतिकत्॥ कृपणः कृपांकरोति यद्वा कृप्यते कृपाविषयीक्रियते

**पापोधूर्तस्तुवंचकः ४७ अज्ञेमूढयथाजातमूर्खवैधेयबालिशाः कदर्येकृपणक्षुद्रकिंपचानमितंपचाः ४८ निस्वस्तुदुर्विधो दीनोदरिद्रोदुर्गतोपिसः**

कृपूसामर्थ्ये बाहुलकात्साधुः इत्याद्यूह्यं॥ क्षुद्रः क्षुणत्ति क्षुदिरसंपेषणे स्फायितञ्चीतिरक् तदुक्तंहेमचंद्रे क्षुद्रोदरिद्रेकृपणेनिकृष्टेल्पनृशंसयोः क्षुद्राव्याघ्रीनटीव्यंगावृहतीसुरघासु च चांगेरिकायांहिंस्रायांमक्षिकामात्रवश्ययोरिति ॥ किंपचानः किंपचति ताच्छील्येतिचानश् ॥ मितंपचः मितनखेतिखच् यद्वा किंपचअनमितंपचइतिछेदः तत्रतु नमितपचोऽमितपच तद्भिन्नोनमितपच पचाद्यच् पचयोधर्मात्मपुत्रदारादिकंपीडयन् लोभाद्धसंचयकरोतितस्य ४८ निस्वः निर्गतंस्वमस्य स्वान्निष्क्रांतोवा ॥ दुर्विधः दुस्थाविधाप्रकारःसमृद्धिर्वास्य तदुक्तंकोशांतरे दुर्विधोवाच्यलिंगःस्याद्दुर्गतेपिखलेपिच ॥ दीनः दीयतेस्म दीङ् क्षये गत्यर्थेतिक्तेनत्वं॥ दरिद्रः दरिद्राति दरिद्रादुर्गतौ ण्वुल् तृचाविति सूत्रेसर्वधातुभ्योच् इतिवचनादच् यत्तुटिप्पण्यांपचाद्यजितितच्चिंत्यंदरिद्रेतिसूत्रस्यमहाभाष्यविरोधात् इतिसूरिभिस्तातएवउत्संइतिगुरुवआचार्या ॥ दुर्गतः दुर्गच्छतिस्म गत्यर्थेक्तः पंचदरिद्रस्य॥

वनीपकः वनिमिच्छति वनीयमित्वा वनिइच्छतिक्यच् ण्वुल् वनीयकइतिपाठेतु वनिपाति क्यजन्तात्क्विप् ॥ याचनकः याचति डुयाचृयाञ्चायां ल्युः स्वार्थेकः
॥ मार्गण मार्गति मार्ग अन्वेषणे बहुलमेनिसुच् ॥ याचक याचति ण्वुल् अर्थी अर्थोस्यास्ति इनि पञ्चयाचकस्य ४९ अहङ्कारवान् अहङ्कारोस्यास्ति
तुप् अहङ्कारमितिपातमव्यय ॥ अहंयु अहंविद्यतेयस्य अहङ्कारोनियुस् द्वेअहङ्कारिण ॥ शुभंयु शुभमस्यास्ति युस् ॥ शुभान्वित शुभेनान्वित द्वे
शुभयुक्तस्य मातापित्रादिदृष्टकारणनिरपेक्षाअदृष्टसहकृतेभ्योऽणुभ्योजातायेदेवास्तेदिव्योपपादुकाउच्यते उपपद्यते पद्गतो उकञ्दिविभवा युपेति
यन् तेनतेच नारकव्यावृत्तयेदिव्यपद एक ॥ नृगवाद्या नाचगौश्चाद्योयेषा आद्यशब्देनखराश्वादीनांग्रहणं ॥ जरायुजा स्युः जरायोर्गर्भाशयाज्जाता एक ५०

वनीपकोयाचनकोमार्गणोयाचनार्थिनौ ४९ अहङ्कारवानहंयु शुभंयुस्तुशुभान्वितः दिव्योपपादुकादेवानृगवाद्याजरायु
जा ५० स्वेदजा कृमिदंशाद्या पक्षिसर्पादयोऽण्डजा इतिप्राणिवर्गः उद्भिदस्तरुगुल्माद्याउद्भिदुद्भिज्जमुद्भिदं ५१ वृ
क्षोरुचिरञ्चारु

कृमिदंशाद्या कृमिश्चदंशश्चाद्योयेषा आद्यशब्देनमशकमत्कुणादिग्रहणं ॥ स्वेदजा स्युः स्वेदहेतुत्वादूष्मास्वेद ततोजाता स्वेद
जा ॥ पक्षिसर्पादय पक्षीचसर्पश्चआदीयेषा आदिशब्दान्नक्रमत्स्यपिपीलिकादय ॥ अण्डजा अण्डेभ्योजाता एक इतिप्राणिवर्ग तरुगुल्माद्या त
रुश्चगुल्मश्चाद्योयेषा आद्यशब्देनतृणौषधिलताग्रह ॥ उद्भिद् उच्यते एक शब्दउद्भिदिति भिदिरविदारणे द्वेउद्भित्पर्यायावाह ॥ उद्भिज्ज उद्भिदो

ऋषमं सुशोभनंसमंसर्वमस्य सुविनिर्दुष्यइतित्वं॥ साधु साधेरुण् तदुक्तंहेमचंद्रे साधुर्जैनेमुनौवार्धुषिकेसज्जनरम्ययोरिति॥ शोभनं शोभते शुभदीप्तौ अनु दात्तेतिश्च् शोभनंयोगभेदेनास्कंदरेवाच्यलिंगकइतिकोशांतरात्॥ कांतं कम्यतेस्म कमुकांतौ क्तप्रत्ययः यद्वा कनतिस्म कनीदीप्तादौक्तः तदाह कांतास्याच्चप्रियं गौस्त्रीशोभनेत्रिषुनाधवे लोहेचचंद्रसूर्यायःपर्यायात्तशिलासुचेतिविश्वमेदिन्यौ॥मनोरमं मनोरमयति रमक्रीडायां ण्यंतात्कर्मण्यण् मनोहरमितिपाठेतु म नोहरति॥ रुच्यं रोचते रुच्यतेवा राजसूयेतिसाधुः॥ मनोज्ञं मनसाजानाति इगुपेतिक.॥ मंजु मज्यते मजिध्वनौ इतिसौत्रोधातुः बाहुलकादुः॥ मंजुलं मं-जुमंजुत्वंलाति कः मंजुलंचजलांतरइत्यक्तत्वात् तदुक्तंचहेमे रम्येकंजेमंजुलस्तदात्यूहइति द्वादशसुंदरस्य॰ ५२ यस्यदर्शनात् तृप्तेरंतोनास्ति तदासेचन

**ऋषमंसाधुशोभनं कांतंमनोरमंरुच्यंमनोज्ञंमंजुमंजुलं ५२ तदासेचनकंतृप्तेर्नास्त्यंतोयस्यदर्शनात् अभीष्टेभीप्सि तंहृद्यंदयितंवल्लभंप्रियं ५३ निकृष्टप्रतिकृष्टार्व**

केस्यात् असेचनकमपि नसिच्यतेमनोज्ञ षिचक्षरणे॥ अभीष्टं अभीतइष्यतेस्म इषइच्छा यांक्तः॥ अभीप्सितं अभ्यासुमिष्यतेस्म आप्लृव्याप्तौक्तः॥ हृद्यं हृदिप्रियं यत् तदुक्तंविश्वप्रकाशे हृद्यंधवलजीरेचहृत्प्रियेहृन्द्वेपिच वशाकृद्दमंत्रेच-हृद्योहृद्यारव्यभेषजइति॥ दयितं दय्यतेस्म दयदानादौक्तः॥ वल्लभं वल्ल्यते वल्लतेवा वल्लसंवरणे अभच् तदुक्तंविश्वप्रकाशे वल्लभोदयितेध्यक्षेसल क्षणतुरंगभइति॥ प्रियं प्रीणाति प्रीञ्तर्पणे तदुक्तंहेमे प्रियोविध्यौषधेहृद्येधवेइति षडभीष्टस्य ५३ निकृष्टः निकृष्यतेस्म कृषविलेखलेक्तः॥ प्रति-कृष्टः प्रतिकृष्यतेस्म॥ अर्वा ऋच्छति ऋछगतौ वनिप् अर्वातुरंगमेपुंसिकुत्सितेवाच्यलिंगकइतिकोशांतरेउक्तत्वात्॥

रेफ रिफ्यते रिफकत्थनयुद्धनिंदाहिंसादानेषु अकर्तरीतिघञ् तदुक्तं विश्वप्रकाशे रेफोरवर्णेपुंसिस्यात्कुत्सितेवाच्यवत्पुनरिति रेपोपिस्यादेव तदेवाह रेफस्या न्निंदितेक्रूरइतिविश्वप्रकाशः ॥याप्य याप्यते यापापणे याप्यस्तुयापनीयेस्यान्निंदितेप्यभिधेयवदितिकोशान्तरेउक्तं॥अवम अवत्यस्मादवमान अवरक्षणादौ ॥अधम उर्ध्वौनिपातितौ तदुक्तंविश्वे अधम स्याद्गर्ह्यऊनइति॥कुपूय कुत्सितंपूयते पूयीविस्मरणे अच् पृषोदरादित्वात् अल्पकपूयइत्यपि॥कुत्सित कुत्सासंजातास्य इतच्॥अवद्य ॥खेट खेटति खिटत्रासे पचाद्यच् तदुक्तंकोशान्तरे खेट कफेग्रामभेदेचर्मण्यस्त्रवतित्रिषु ॥गर्ह्य गर्ह्यते गर्हकुत्सा यां ण्यत्॥अणक अणति अणशब्दे आणकइत्यपि त्रयोदशाधमस्य ५४ मलिमस मलोस्यास्ति इमसच् तदुक्तं विश्वमेदिन्योः मलीमसस्तुमलिने

रेफयाप्यावमाधमा कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः ५४ मलीमसंतुमलिनंकच्चरंमलदूषितं पूतंपवित्रंमेध्यंचवि ध्रंतुविमलात्मकं ५५ निर्णिक्तंशोधितंमृष्टंनिःशोध्यमनवस्करं असारंफल्गुशून्यंतु

पुष्पकासीसलोहयोरिति॥मलिन शटेप्यसतेधत्तूरेमलि नरूप्यदोषयोरितिकोशान्तरे तदुक्तंच मलिनीरजस्वलायानेतिहेमः ॥कच्चर योगविभागात्कुन् कुत्सितंचरति अच् ॥मलदूषित मलेनदूषितं चलार्थंतुउज्वलस्य॥पूत ति॥क्त॥पवित्र इत्र ॥मेध्य ममेधनार्ह मेधसमेचण्यत् त्रीणि॥चौक्षमित्येक॥विमलात्मक विमलआत्मास्वभावोयस्य हूस्वभावनिर्मलस्य विमलार्थकमित्यपिपा ठ ५५ निर्णिक्त निर्णिज्यतेस्म णिजिरशौचपोषणयो क्तः ॥शोधित शोध्यतेस्म शुधशुद्धौक्तः॥मृष्ट मृज्यतेस्म मृजूशुद्धौक्त ॥निःशोध्य निष्क्रान्तशोध्यमस्मात् शो ध्यान्निष्क्रान्तमितिवा॥अनवस्कर नावस्करोत्र पचापनीतमलस्य॥असार नसारोत्र॥फल्गु फलति फलपारीतिसाधु तदुक्तंविश्वे फल्गवसारेभिधेयवत् द्वेनिर्बल

वशिकः उश्यते वशाकांतौ ॥ तुच्छ तुदाव्यथयाहच्छति छोछेदने सुलविभुजादि ॥ रिक्तकं रिच्यतेस्म क्तः चत्वारिरिक्तस्य ५६ प्रधान प्रदधाति ल्युट्युज्वा तदुक्तंकोशांतरात् प्रधानस्यान्महामात्रेप्रकृतौपरमात्मनि प्रज्ञायामपिचक्लीबमेकत्वेनूत्तमेसदेति ॥ प्रमुखः प्रकृष्टमुखमस्य तदुक्तंहैमे प्रमुखंप्रथमेमुख्यइति प्रवेकः प्रविच्यते विचिरपृथग्भावे घञ् अनुत्तमः नोत्तमोस्मात् ॥ उत्तमः अतिशयेनोत्कृष्टः इत्याद्यूत्यं उत्कृष्टार्थवृत्तेरुच्छब्दात्तमप् ॥ मुख्यः मुखमिव शाखादित्वात्यः ॥ वर्यः वर्यते वरईप्सायां अचोयत् ॥ वरेण्य व्रियते वृञ्वरणे एण्य ॥ प्रवर्हः प्रवर्हति वृहवृद्धौ अच् ॥ अनवरार्ध्यः अवरस्मिन्नर्धेभव नअवरार्ध्यः अर्घाद्यत् परावराधमोपूर्वाच्चयत् ५७ परार्ध्यः परस्मिन्नर्धेभव अग्र अगति अगकुटिलायांगतौरत् तदुक्तंकोशांतरे अग्रंपुरस्तादुपरिपरिमाणेबलस्यच आलंबनेसमूहेचप्रांतेचस्यान्नपुंसकं अधिकेचप्रधानेचप्रथमेचाभि

**वशिकंतुच्छरिक्तके ५६ क्लीबेप्रधानंप्रमुखप्रवेकानुत्तमोत्तमाः मुख्यवर्यवरेण्याश्चप्रवर्होनवरार्ध्यवत् ५७ परार्ध्याग्र्यप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियं श्रेयान्श्रेष्ठःपुष्कलःस्यात्सत्तमश्चातिशोभने ५८ स्युरुत्तरपदेव्याघ्रपुंगवर्षभकुंजराः सिंहशार्दूलनागाद्याः पुंसिश्रेष्ठार्थगोचराः ५९**

धेयवत् ॥ प्राग्रहर प्रकृष्टमग्रप्राग्रहरति हरतेरित्यच् ॥ प्राग्र्यः प्राग्रेभव यत् ॥ अग्रीय घच्छौचेतिद्वयसाधू अग्रेभव ॥ अग्रियः सप्तदशाप्रधानस्य तत्रप्रधाननित्यंक्लीबे ॥ श्रेयान् इयसुन् अतिशयेनप्रशस्यः ॥ श्रेष्ठः श्रेष्ठोवरेकुबेरेचेतिहैमः इष्ठन् ॥ पुष्कलः पुष्यति पुषपुष्टौ पुषःकित्कलच्चेतिकलन् ॥ सत्तमः अतिशयेनसन् तदुक्तंकोशांतरे सत्तमः स्यात्पूज्यतमेसाधीयस्युत्तमेत्रिषु ॥ अतिशोभनः अतिशयेनशोभनः पंचअत्यंतशोभनस्य ५८ व्याघ्रदयएतेशब्दाउत्तरपदे ॥ श्रेष्ठार्थगोचराः श्रेष्ठार्थोगोचरोविषयोयेषांते क्वचिद्वाचकाइतिपाठः यथापुरुषव्याघ्रः पुरुषःव्याघ्रइवपुरुषश्रेष्ठइत्यर्थः आद्यशब्देनसोमादीनांग्रहणं तद्यथा नृसोमः व्याघ्रादिराकृतिगण उपमितंव्याघ्रादिभिः सामान्यप्रयोगे इतिविशेष्यस्यपूर्वनिपातेव्याघ्रादेरुत्तरपदत्वं ५९

अमाग्र्य माग्र्यादन्यत् प्रधानादन्यत् ॥ द्वयहीने द्वाभ्यां हीने न्यग्प्रधानस्य ॥ विशंकटं वे शंकटच् ॥ पृथु प्रथने प्रथप्रख्याने तदुक्तं हेमचंद्रे पृथुर्विशाले भूपाले चा-
ग्निकारूप्याजीरयोरिति ॥ बृहत् बर्हति बृहद्बृन्दे अनिप्रत्यय ॥ विशाल शालच् विशालाशिद्वारूप्यास्युज्जयिन्यात् पोधिनि नृपस्त्रसभिदो पुंसि पृथुले त्वभिधे-
यवदिति विश्वमेदिन्यो ॥ पृथुल पृथुलमस्यास्ति मत्वर्थे लच् पृथुलत्वानिता ॥ महत् महति महपूजाया वर्तमाने इति सूत्रे निपातितं ६० वड्र वलने वलसंवरणे सञ्चर
णे च रक् डलयोरेकत्वस्मरण ॥ ऊरू ऊर्णोति ऊर्णुञ् आच्छादने नुलोपे न्हस्व ॥ विपुल विपोलति पुलमहत्वे इगुपेतिक तदुक्तं विश्वे विपुलं पृथुले गाधे मेरुपश्चिमभू
धरे इति नवविस्तीर्णस्य ॥ पीन प्यायते स्म ओप्यायी इदितो क्तेनत्व ॥ पीव प्यायते प्योङ् इत्यो क्तनिप् संप्रसारण स्त्री पीवरी स्यात् ॥ स्थूल स्थूलयति स्थूलं बृंहणे अ

**अमाग्र्यद्वयहीनेद्वेअप्रधानोपसर्जने विशंकटंपृथुबृहद्विशालंपृथुलंमहत् ६० वड्रोरुविपुलंपीनपीव्नीतुस्थूलपीवले स्तो**
**काल्पक्षुल्लकाः सूक्ष्मंश्लक्ष्णंदभ्रंकृशंतनु ६१ स्त्रियांमात्रात्रुटिःपुंसि**

च् तदुक्तं हैमे स्थूलं पीने जडे इति ॥ पीवर प्यायते निपात तदु
क्तं हेमचंद्रे पीवरं स्थूलकर्मयोरिति चत्वारि स्थूलस्य ॥ स्तोक स्तूयते ष्टुञ् प्रसादे घञ् ॥ अल्प अल्पते वार्यते अलभूषणादौ पः ॥ क्षुल्लक क्षोदन क्षुदिर्
संपेषणे संपदादि लाति क परसवर्ण स्वार्थे क इत्याद्यूह्य तदाह क्षुल्लकस्त्रीषु नीचेल्पेइति ॥ श्लक्ष्ण श्लिष्यते श्लिष्यतिवा श्लिषआलिंगने श्लिषेरचो
पधाया इति साधु ॥ सूक्ष्म सूच्यते सूचपैशून्ये सूचे स्मन् सूक्ष्मं स्यात् कतके ध्यात्मे पुंस्यणौ त्रिषु चाल्पके इति विश्वे उक्तं ॥ दभ्र दभ्यते दभुदम्भने रक् ॥ कृश
कृश्यते स्म कृशतनूकरणे अनुपेति साधु ॥ तनु तन्यते तनुविस्तारे उ तदुक्तं विश्वमेदिन्यो तनुः कायत्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे इति ६१ मात्रा मीयते
माङ्माने ष्ट्रन् टाप् मात्रत्वं वशतो स्वार्थे कात्स्न्र्ये मात्रा परिच्छदे अक्षरावयवे द्रव्ये माने ल्पे कर्णभूषणे काले वृत्ते चेति हैम ॥ त्रुटि त्रुट्यते त्रुटछेदने इन् कित् ॥

लवः लूयते लूञ्छेदने अप् ॥ लेशः लिशति लिशगतौ लिश्यतेवा अच्घञौ वा ॥ कणः कणति कणनिमीलने अच् कणोधान्यांशलेशयोरित्युक्तत्वात् कणा-
जीरकपिप्पल्योरितिहेमचंद्रश्च ॥ अणुः अणति अण्यतेवा अणशब्दे अणश्चेत्युः अणुर्व्रीह्यल्पयोरितिहेमः ॥ लवादयः पुंसि तत्रस्त्रियोमात्रात्रुटीश्च त्रुटी-
तिङीबंतोपिक्वचित् एकादशसूक्ष्मस्य स्तोकाद्यपंचताएकार्था इतिकेचित् शेषविशेषनिघ्नं ॥ अल्पिष्ठं अतिशयेनअल्पं ॥ अल्पीयः ॥ कनीयः अतिशयेनअ-
ल्पं कनिष्ठंइत्यपि ॥ अणीयः अतिशयेनअणुः ईयसुन् चत्वार्यत्यल्पे ६२ प्रभूतं प्रभवतिस्म क्तः तदुक्तंहेमे प्रभूतमुत्कटंप्राज्यइति ॥ प्रचुरं प्रचोरति चुरस्ते-
ये णिजभावेइगुपेतिकः ॥ प्राज्यं प्रवीयते अजगतौ ण्यत् यद्वा प्रकर्षेणाज्यते काम्यते अञ्जूव्यक्त्यादौ क्यप् ॥ अदभ्रं दभ्रादन्यत् नञ्समासः नलोपः ब-

लवलेशकणाणवः अत्यल्पेल्पिष्ठमल्पीयःकनीयोणीयइत्यपि ६२ प्रभूतंप्रचुरंप्राज्यमदभ्रंबहुलंबहु पुरुहूःपुरुभूयि
ष्ठंस्फारंभूयश्चभूरिच ६३ हुलं बहून्लाति बहुलानीलिकायांस्याद्बहुलायांदिवियोषिति कृत्तिकास्त्रियांभूम्निविहायसिनपुंसकं पुंस्यग्नौकु
ष्णपक्षेचवाच्यवत्प्राज्यकृष्णयोरितिविश्वमेदिन्यौ ॥ बहु बहते बहिवृद्धौ उः नलोपः तदुक्तंविश्वे बहुत्रिष्वादिसंख्यासुविपुलेत्वभिधेयवदिति ॥ पुरुहुं पुरू-
न्हूति गच्छति डः यद्वा पुरूञ्जहाति जिहीतेवा कः पुरुहूइत्यपि पुरुहुः पुरुहे पुरुहः एवं पुरुहुपुरुहूबा ॥ पुरु पिपर्ति पूर्यतेवा पृपालनपूरणयोः कुप्रत्ययः उ-
त्वं तदुक्तंहेमे पुरुप्राज्येभिधेयवत् पुंसिस्याद्देवलोकेच्चनृपभेदपरागयोरिति ॥ भूयिष्ठं अतिशयेनबहु बहोर्लोपइतिसाधुः ॥ स्फारं स्फायते स्फायीवृद्धौ र-
क्पलोपः स्फिरमित्यपिपाठः तदुक्तंहेमचंद्रे स्फारस्तुकरकादीनांबहुधेविपुलेपिचेति ॥ भूयः बहुशब्दात्ईयसुन् ईलोपः प्रकृतेर्भूआदेशः भूरिः क्रिन् अतिशयेनब
हु भूयशब्दविग्रहः तदुक्तंहेमे भूरिस्यात्प्रचुरेस्वर्णेइति द्वादशबहुलस्य ६३

येषासख्येयानासख्याशतादिकात् पगते क्रमेणापर शताद्या स्यु तेचपरश्शता शतात्परे॥आद्येनपरस्सहस्रा एवेक राजदन्तादित्वान्छतसहस्रयो परनि
पात पारस्करादित्वात्सुट॥त्रिशाद्यानिमत्वाद्याल्लिगता॥गणनीय गण्यते गणसख्याने अनीयर॥गणेय चितिपूजीतिज्ञापकादिनासिद्धस्यगतिर्भिन्ननीया ह्रगणयित्तु
शक्यस्य॥सख्यातु शख्यायनेस्म ख्यामकथने चक्षिङ्स्वा ह्रसख्याकृतस्य॥सम समति पर्यवैकूल्ये अच्॥सर्व सरति सृगतौ यद्वा सर्वति सर्वगतो सर्वार्थेसर्वनाम
समासवत्सरेस्त्रियामित्युक्तत्वात् तदुक्तविश्वे सर्वसाधुसमानेषुसमस्यादभिधेयवदिति ६८ विश्व विशति विशप्रवेशने कन् तदुक्तकोशान्तरे विश्वकृत्स्नवभु
वनेविश्वेदेवेपुनागरे विश्वाध्यनिविशायास्यात्॥अशेष नशेषोस्य॥कृत्स्न कृत्यते कृतीवेष्टने कृत्यशाभ्याङ्इतिसाधु॰ कृत्स्नसर्वाङ्कुक्षिषु॥समस्त समस्यते

पर शताद्यास्तेयेषापरासख्याशतादिकात् गणनीयेतुगणेयसख्यातेगणितमथसमसर्व ६८ विश्वमशेषकृत्स्नसमस्तनि
खिलाखिलानिनि शेष समग्रसकलपूर्णमखडस्यादनूनके ६५ घननीरतरसान्द्रेपेलवविरलतनु स्य अस्युक्षेपणेक्त॥निखिल निर्

गतखिलयस्मात्॥अखिल नखिलमस्य॥नि शेष निष्क्रान्तशेषयस्मात्॥समग्र सगतमग्रमस्य समग्रमतेवा ग्रसुअदने अन्येष्व्यपीतिड॥सकल कलाभि सह॥पूर्ण
पूर्यतेस्म पूरीआप्यायने क्त पूर्ण शब्देसमग्रेनापूरितेत्त्वभिधेयवत् पूर्वमित्यपिपाठ तत्रपूर्वति पूर्वपूरणे॥अखड नखड्यते खडिभेदने घञ्॥अनूनक ऊनय
ति ऊनपरिहाणे अच् चतुर्दशासमग्रस्य ६५ घन हन्यते हनहिंसागत्यो हतेरप् घनादेश घन सान्द्रेदृढेदार्ढ्यविस्तारेशुद्धरेखुदे सघेसुस्तेघनमध्येनृत्यवाद्यम
भेदयोरितिहेमचद्र॥निरतर निर्गतमतरयस्मात् निर्गतमतरमस्मिन्वा॥सान्द्र सहअद्यते अदिबधने बाहुलकाद्रक् त्रीणिनिबिडस्य॥पेलव पिलक्षेपे रन्न घञ् पेलो
स्यास्तीतिव॥विरल विरति॥तनु तन्यते तनुर्वपुस्त्वचोरित्युक्तत्वात् त्रीणिविरलस्य॥

समीप समगताआपोयस्मिन् अपूंईत्वं॥निकट निकटति कटेरच्॥आसन्नः आसीदतीस्म क्तः असद्यतेस्मेतिवा॥ सन्निकृष्टः सन्निकृष्यतेस्म क्तः॥सनीडः समा
ननीडवासस्थानमस्य सहनीडेनेतिवा ६६ सदेश समानोदेशोस्य॥अभ्याश अभ्यश्यते अशूव्याप्तौ कर्मणिघञ्॥सविधः समानाविधास्य॥समर्यादः समा
नामर्यादास्य॥सवेश समानोवेशोस्य॥उपकंठ. उपगतःकंठं उपगतः कंठःसामीप्यमस्येतिवा॥अंतिकः अंतोस्यास्ति अंतिकं निकटेवाच्यलिंगस्त्रीशोभनोष-
धौ चुल्यांश्रेष्ठभगिन्यांचनास्त्योक्तौकीर्त्यतेतिकेतिविश्वमेदिन्यौ॥अभ्यर्णः अभ्यर्द्यतेस्म अभ्यर्दतिस्मेतिवा अर्दगतौक्तः॥अभ्यग्रः अभिमुखमग्रमस्य अ
भितोव्ययं पंचदशसमीपस्य ६७ संसक्त संसज्यतेस्म षजसंगे॥अव्यवहितं नव्यवधीयतेस्म अपदांतरं पदेनांतरंनपदांतरमत्र॥ अपदांतरमपि त्रीणिसल्लग्न

समीपेनिकटासन्नसन्निकृष्टसनीडवत् ६६ सदेशाभ्याशसविधसमर्यादसवेशवत् उपकंठांतिकाभ्यर्णाभ्यग्राअप्यभितो
व्ययम् ६७ संसक्तेत्वव्यवहितमपदांतरमित्यपि नेदिष्ठमंतिकतमंस्याद्दूरंविप्रकृष्टकं ६८ दवीयश्चदविष्ठंचसुदूरंदीर्घमायतं
वर्तुलंनिस्तलंवृत्तंबंधुरंतून्नतानतं ६९

स्य॥नेदिष्ठ अतिशयेनांतिक नेदादेश.॥अंतिकतमं द्वेअतिनिकटस्य॥दूरं दुःखेनेयते इणोलोप रक्॥विप्र
कृष्टं विप्रकृष्यतेस्म क्तः द्वेदूरं ६८ दवीय अत्यंतंदूरं ईयसुन्‌इष्ठन्॥दविष्ठ॥सुदूरं सुतरांदूरं त्रयअत्यंतदूरस्य॥दीर्घं दृणाति दृविदारणे॥आयतं आयम्यते
स्म क्तः आयततेवा अच् द्वेदीर्घस्य॥वर्तुलं उलच्॥निस्तलं निर्गतंतलमस्य तदुक्तंविश्वे निस्तलवर्तुलेचलइति॥वृत्तं वर्ततेस्म क्त. त्रीणिवर्तुलस्य॥यदून्न
तानतं तत्बंधुरस्यात्॥एकं उन्नतंचदानतंच बध्नाति बधबंधने मद्गुरादि बंधूरमित्यपि ६९

को ॥ उच्चिनोति उः उच्चैस्त्वमस्त्यस्य वा मत्वर्थे अन्॥ प्रांशुः प्रकृष्टा अंशवोऽस्य॥ उन्नत उन्नमति स्म नमप्रह्वत्वे क्तः॥ उदग्र उद्गतमग्रमस्य॥ उच्छ्रित उच्छ्रयति स्म श्रिञ्सेवायां उच्छ्रितनिष्ठुसजातेसमुन्नद्धमहद्ध्योरित्रिकाण्डकोशात्॥ तुङ्ग तुद्यते तुजिहिंसायां घञ् कुत्व पृषोदरादित्वात्॥ वामन वामयति मदं तुवम् उद्गिरणे ल्यु॥ न्यच् न्यञ्चति अञ्चुगतौ न्यक्त्वात् स्त्रियां तु नीची॥ नीच नीचैस्त्वमस्त्यत्र मत्वर्थे अन् नीच पामरखर्वयोरिति हेमचन्द्र॥ खर्व खर्वति खर्वगतौ अच्॥ ह्रस्व ह्रसति ह्रसशब्दे वप्रत्ययः पचन्ह्रस्वस्य॥ अवाग्र अवनतमग्रमस्य॥ अवनत अवनमति स्म क्तः ७० अराल ऋच्छति ऋगतौ भिन् अरमालातिक अरालातिवा तदुक्तं विश्वे अरालः कुटिले सर्जरसे समदहस्तिनीति॥ वृजिन वृज्यते वृजीवर्जने इनन् तदुक्तं कोशान्तरे वृजिनं किल्बिषे क्लीबं केशेना कुटिले त्रिषु॥

# उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेथवामने न्यङ्नीचखर्वह्रस्वाः स्युरवाग्रेवनतानत ७० अरालवृजिनजिह्ममूर्मि मत्कुञ्चितनतम् आविद्धकुटिलभुग्नवेल्लितवक्रमित्यपि ७१

जिह्म जहाति ह्रीयते वा ओहाक्त्यागे मन् तदुक्तं हैमे जिह्मस्तु कुटिले मन्दे जिह्मस्तगरपादपे इति॥ ऊर्मिमत् ऊर्मिरस्यास्ति मतुप्॥ कुञ्चित कुञ्चति स्म कुञ्चकौटिल्ये क्तः॥ नत नमति स्म तदुक्तं कोशान्तरे नतं तगरपादपास्यान क्लीबं कुटिलनम्रयोरिति॥ आविद्ध आविध्यते स्म व्यधताडने क्तः तदुक्तं कोशान्तरे आविद्धोवाच्यलिङ्गः स्यात्कुटिले च परा हत इति॥ कुटिल कुटति वा कुटकौटिल्ये इलच् तदुक्तं कोशान्तरे कुटिलात्परगात्यास्त्री भुग्नेत्वाच्यलिङ्गकः॥ भुग्न भुजति स्म भुजो कौटिल्ये क्तः॥ वेल्लित वेल्लति स्म वेल्लचलने क्तः वेल्लितं गमने क्लीबं कुटिले विधुते त्रिष्विति स्मृतः॥ वक्र वञ्चति स्म वञ्चुगतौ रक् एकादशवक्रस्य ७१

ऋजुः अर्जीति अर्जअर्जने अर्जिदृशीतिसाधुः॥ अजिह्मः भिन्नोजिह्मात्॥ प्रगुणः प्रकृष्टागुणास्य त्रीण्यवक्रस्य ॥ व्यस्तः व्यस्यतेस्म असुक्षेपणेक्तः तदुक्तं विश्वे व्यस्तस्तव्याकुलेव्यासइति॥ अप्रगुणः भिन्नःप्रगुणात्॥ आकुलः आकोलति कुलसंस्त्याने इगुपधेतिकः त्रीणिव्याकुलस्य॥ शाश्वतः शश्वद्भवः तत्र त्यण्॥ ध्रुवः ध्रुवति ध्रुवस्थैर्ये कः॥ नित्य. नियतंभवः त्यप्॥ सदातन. सदाभवः॥ सनातनः सनाभवः सायंचिरेतिसाधू पंचनित्यस्य ७२ स्थास्नुः स्थानशील. कस्नुः॥ स्थिरतरः अतिशयेनस्थिरः तरप्॥ स्थेयान् स्थेयांसौ स्थेयांसः ईयसुन् एवमूल्यं त्रीण्यतिस्थिरस्य यएकरूपतया एकेनैवस्वभावेन॥ कालव्यापी कालस्यव्यापक. आकाशादिः सकूटस्थः सुपिस्थइतिकः स्यात् एकं कूटोनिश्चलः सन्तिष्ठतीति तदुक्तंमेदिन्यां कूटः स्त्रीनिश्चलेमूलेराशाविति॥ स्था

ऋजावजिह्मप्रगुणोव्यस्तेत्वप्रगुणाकुलौ शाश्वतस्तु ध्रुवोनित्यसदातनसनातनाः ७२ स्थास्नुःस्थिरतरःस्थेयानेकरूपतयातुयः कालव्यापीसकूटस्थःस्थावरोजंगमेतरः ७३ चरिष्णुजंगमचरत्रसमिंगंचराचरं चलनंकंपनंकंप्रंचलंलोलं चलाचलं ७४

वरः स्थानशील वरच्॥ जंगमेतरः जंगमादितरः द्वेअचरस्य ७३ चरिष्णु चरणशील चरगतौ इष्णुच्॥ जंगमं वक्रंगच्छति नित्यमितियङ्॥ चरं चरति तदुक्तंकोशांतरे चरोक्षयूतभेदेचभौमेचारेत्रसेचलइति॥ त्रसं त्रसति त्रसीउद्वेगे अच्॥ इंगं इंगति इगिगतौ अच् चराचरचरिचलीतिसाधुः तदुक्तंविश्वमेदिन्योः चराचरं जंगमेस्यादंगविष्टपयोरपि षट्चरस्य॥ चलनं चलनशीलं चलगतौ चलनेतियुच् चलनंभ्रमणेकंपेकंप्रेतुवाच्यलिंगकमिति विश्वमेदिन्यौ॥ कंपनं कंपनशीलं कपिचलनेयुच् तदुक्तंकोशांते कंपनंनद्वयोः कंपेकंपेस्यादभिधेयवत्॥ कंप्रं नमिकंपीतिरः त्रयंकंपनशीलस्य॥ चलं चलति अच्॥ लोलं लोडति लुडविलोडने अच् डलयोरेकत्वं॥ चलाचलं चरिचलीतिद्वित्वादि ७४

चचल चचति चचुगतौ बाहुलकादलच् चचलातुनढिल्लुस्म्योश्चचलश्चपलेनलइत्यक्तत्वात्॥तरल तरति तरलश्चचलेखिगेभास्वरेपित्रिलिगक हारमध्यमणौ॥
पुसियवागूसूरयोस्त्रियामितिविश्वपेदिन्यौ॥पारिप्लव परिप्लवते प्लुङ् गतौ अच् प्रज्ञात्यण् तदुक्तहैमे पारिप्लवश्चाकुलेस्याच्चचलइति चपलश्चटुलश्चैवेत्यपिपाठ॥
अतिरिक्त अतिरिच्यतेस्म रिचिरविरेचनेक्त॥समधिक सम्यगधिक द्वेअधिकस्यभूतस्य॥दृढसंधि दृढसंधानमस्यस॥संहत संहन्यतेस्म क्त संहतसंगत
दृढेदतिहैम द्वेदृढसंधानस्य ७५ खक्खट खक्खटमिति कक्खहसनेअटन् कवर्गद्वितीयादीत्यन्येकठिन कठकृच्छ्रजीवने॥क्रूर कृतति कृतीछेदने रक्धातोः क्रू
आदेश तदुक्तहैमे क्रूरानृशंसघोरोष्णाकठिनाद्रवि॥कठोर कठिचकिभ्यामोरन्॥निष्ठुर निनिष्ठति॥दृढ दृंहति दृहतिस्मवा दृहदृहिदृढौ दृढ स्थूलेतिसाधु त

चचलतरलश्चैवपारिप्लवपरिप्लवे अतिरिक्तः समधिको दृढसंधिस्तुसंहत ७५ कर्कशःकठिनःक्रूरःकठोरनिष्ठुरःदृढ जठरःमूर्ति
मन्मूर्तंप्रवृद्धंप्रौढमेधितम् ७६ पुराणेप्रतनप्रत्नपुरातनचिरतना प्रत्यग्रोभिनवोनव्यो नवीनोनूतनोनव ७७ दुष्कोशांतरे दृढ

स्थूलेनितान्तेचभृशादेवलवत्यपि॥जठर जीर्यते जूष्वयोहानौ अठच् तदुक्तविश्वे जरठ कर्कशेपाण्डौकाठिनेप्यभिधेयवदिति॥मूर्तिमत् मूर्ति का
स्ति मतुप्॥मूर्त मूर्छतिस्म मूर्तस्यात्त्रिषुमूर्छालेकठिनेमूर्तिमत्यपीतिविश्वः मूर्छामोहसमुच्छ्राययो क्त नवकठिनस्य॥प्रवृद्ध प्रवर्धतेस्म दृधुवृद्धौक्त
॥प्रौढ प्रोह्यतेस्म वहप्रापणेक्त॥एधित एधतेस्म एधवृद्धौक्त भयप्रवृद्धस्य ७६ पुराण पुराभव सायञ्चिरेतिसाधु पुराणप्रोक्तेइतिनिपातनात् पुराणप्र
लशास्त्रयोरित्युक्तत्वात्॥प्रतन॥प्रत्न तनप्त्नौ॥पुरातन पुराभव॥चिरतर चिरभव सायंचिरेतिसाधु पञ्चपुरातनस्य॥प्रत्यग्र प्रतिनवअग्रमस्य॥अ

नूत्नः लः सप्तनूतनस्य ॥ सुकुमारं सुष्टुकुमार्यते कुमारक्रीडायांघः॥ कोमलं कमेरलच् अतउत्वंच कोमलंमृदुलेजलइतिविश्वः॥ मृदुलं मृदुर्गुणोस्यास्ति
मत्वर्थे ॥ मृदु मृद्यते मृदक्षोदेकः मृदूतीक्ष्णेचकोमलइतिहेमः चत्वारिकोमलस्य ॥अन्वक् अन्वचति अंचुगतौ क्विन्॥अन्वक्ष अनुगतमक्षमिंद्रिय॥अ
नुगं अनुगच्छति गम्लृगतौडः॥अनुपदं पदस्यानुपश्चात् चत्वारिपश्चादित्यर्थे अव्ययीभावत्वात्क्लीबंअव्ययंच ७८ प्रत्यक्ष अक्षमिंद्रियंप्रतिगतं प्रासा
दिमासः समक्षमित्यपि ॥ ऐंद्रियकं इंद्रियेणानुभूयते द्वेइंद्रियग्राह्यस्य ॥ प्रत्यक्षत्वात् अप्रत्यक्षं अक्षेषुप्रतिगतंप्रत्यक्षंन अनध्यक्षमितिपाठइतिकेचित्
तत्रेत्थं अक्षेषुअध्यक्षंअतिक्रांत अध्यक्षंविभक्त्यर्थेव्ययीभाव ॥अतींद्रियं इंद्रियेभ्यः अतिक्रांतं तत्रेत्थं अपरोक्षमैंद्रियकंपरोक्षस्यादतींद्रियमिति द्वेइं-

**नूत्नश्चसुकुमारंतुकोमलंमृदुलंमृदु अन्वगन्वक्षमनुगोऽनुपदंक्लीबमव्ययं ७८ प्रत्यक्षंस्यादैंद्रियकमप्रत्यक्षमतींद्रियं ए
कतानोनन्यवृत्तिरेकाग्रैकायनावपि ७९ अथैकसर्गएकाग्र्योप्येकायनगतोपिसः पुंस्यादिःपूर्वपौरस्त्यप्रथमाद्याअथास्त्रियां ८०**

द्रियैरग्राह्यस्य ॥एकतानः एकंतानयति तनुश्रद्धोपकरणयोः कर्मण्यण् ॥ एकस्तानोविस्तारोस्यवा अनन्यवृत्तिः नअन्यावृत्तिरस्य पुंवद्भावः॥ एकाग्र· ए
कमेकस्मिन्वाग्रमस्य ॥ एकायनः एकमयनमस्य ७९ एकसर्गः एकएकस्मिन्वासर्गोनिश्चयोस्य ॥ एकाग्र्य एकअग्रजेयमस्य ॥ एकायनगतः एकंचतद
नंचएकायनंगतः एकस्मिन्नयनेगतंज्ञानमस्येतिवासपेकाग्रस्य ॥आदिः आप्रथमंदीयतेगृह्यते उपसर्गेघोः किः॥ पूर्वः पूर्वति पूर्वपूरणे पूर्वंतुपूर्वजेप्राच्यांप्रा
गभ्यश्रुतिभेदकइत्युक्तत्वात्॥पौरस्त्यः पुरोभवः दक्षिणेतित्यक् ॥ प्रथम प्रथते प्रथप्रख्याने प्रथेरमच् तदुक्तंकोशान्तरे प्रथमस्त्वभवदादौप्रधानेपिचवाच्यव
त्॥ आद्य· आदौभवः दिगादित्वात् यत् पंचकमाद्यस्य ८०

अतः अमति अमगतौ बाहुलकात्तृन् अजतिवा अतिबधने अच् अत स्वरूपेनिकटेमातेनिश्चयनाथयोरितिहेमचंद्र ॥ जघन्य जघनेभवमत् तदुक्तकोशांतरे जघन्यहेगनिक्लीवचरमेगर्हितेन्यवदिति ॥ चरम चरति चरगतौ अमच् ॥ अत्य अतेभव यत् तदुक्तहेमचंद्रे अंत्यस्त्वंतभवेधमइति ॥ पाश्चात्य पश्चाद्भव त्य क् ॥ पश्चिम अग्रेतिडिमच् तत्रअतस्त्पुंसि क्लीवेच पश्चात्स्वछदास्त्रीकुलस्यात् षडत्यस्य ॥ मोघ मुह्यत्यस्मिन् मुहवैचित्ये अत्रन्यक्वादित्वात्कुत्व मोघोधी नेनिष्फलेत्वमोघोस्यात्पाटलीतरावितिहेम ॥ निरर्थक निर्गतोर्थोयस्यात् कप् द्वे व्यर्थस्य ॥ स्पष्ट स्पश्यतेस्म क्त ॥ स्फुट स्फुटविकसने इगुपधेतिक स्फुटोव्यक्तप्र फुल्लयोरितिउक्तत्वात् ॥ प्रव्यक्त प्रव्यज्यतेस्म क्त प्रव्यन्धतेस्मेतिवा अनुविशेषणेक्त ॥ उल्बण पच् उद्गृणाति वणशब्दे अच् पृषोदरादि चत्वारिस्पष्टस्य ॥

अतोजघन्यचरममत्यपाश्चात्यपश्चिमाः मोघनिरर्थकस्पष्टस्फुटप्रव्यक्तमुल्बण ८१ साधारणतुसामान्यमेकाकीत्वेकएक क भिन्नार्थकाअन्यतरएकस्त्वोऽन्येतरावपि ८२ उच्चावचनेकभेदमुच्चडमविलंबित साधारण आधारणेनसह सहस्यसादेश सा-मान्य समानस्यभावः घञ् जातिवाचिसामान्यतुक्लीव एकमप्यनेकसंबंधिसाधारण द्वे ॥ एकाकी एकाद्वाकिनच् ॥ एक पक्षेकन् इणभीकापाशल्यतिमर्चिभ्यःकन् एकसंख्यांतरेश्रेष्ठेकेवले तरयोस्त्रिषु त्रीणिअसहायस्य भिन्नः अन्यतर अन्यएवस्वार्थेतरबित्यर्थ कश्चिदेकतरइतिपाठ तत्रत्य एकात् ॥ इतरच्प्रत्ययः इण कन् ॥ एक त्व तनोति तनोत त्वः क्विप् आगमानित्यत्वान्नतुक् तुक्पक्षेत्वत ॥ अन्य अनिति अनप्राणनेय ॥ इतर इनाकामेनतरति इतर पामरेन्यस्मिन्नितिहेमचंद्र त्वशब्दस्तुसर्वनाम-वत् ॥ षट्भिन्नार्थका भिन्नस्यवाचकाःस्युः ८२ उच्चावच उदक्चअवाक्च मयूरव्यंसकादि ॥ नैकभेद एकोभेदोस्य नएकभेद सुप्सुपेतिनशब्देनसमासः द्वेबहुविध स्य ॥ उच्चड उच्चडन चडिकोपेपचन् ॥ अविलंबित विलंब्यतेस्म नविलंबित लबिअवस्रंसनेक्त स्वामीतुअविलंबनमितिपठति द्वेतूर्णस्य ॥

अरुंतुद· अरूंषितुदति विध्यरुषोरुकदइतिखच्मुम् ॥ मर्मस्पृक् मर्मस्पृशति स्पृशउतापेधिन् द्वे मर्मभेदिनः॥ अबाधं नबाधास्य ॥ निरर्गलं निर्गतार्गलास्य द्वे निर्बाधस्य ८३ प्र
सव्य प्रगतसव्यात् प्रसव्यंवाच्यलिंग. स्यात्प्रतिकूलानुकूलयोरिति ॥ प्रतिकूलं प्रतीपंकूलात् ॥ अपसव्यं अपगतंसव्यात् अपसव्यंत्रिलिंगंतुदक्षिणप्रतिकूलयोरि
तिविश्व.॥अपष्ठु अपतिष्ठति सुषामादि कु. तदुक्तंकोशांतरे अपष्ठुःपुंसिकालेचवामेस्यादन्यलिंगकइति चत्वारिविपरीतस्य यद्वामंशरीरंतत्सव्यं ॥ सूयते षूप्रेरणे
अन्योयत् एकं यद्दक्षिणशरीरंतदपसव्यंस्यात् अपक्रांतंसव्यात् एकं ८४ संकटं संबाधार्थात्संशब्दात्संप्रोदश्चकटच् संकटति कटेवर्षावरणयोः॥ संबाध. सम्यग्बा
धतेत्र बाधृलोडने घञ् तदुक्तंविश्वे संबाधःसंकटेभयइति नापुमान् द्वे अल्पावकाशोवर्त्मादौ ॥ कलिलं कलतेकल्यतेवा कलशब्दसंख्यानयोः इलच् ॥ गहनं गाह्य

अरुंतुदस्तुमर्मस्पृगबाधंतुनिरर्गलं ८३ प्रसव्यंप्रतिकूलंस्यादपसव्यमपष्ठुच वामंशरीरंसव्यंस्यादपसव्यंतुदक्षिणं ८४ संकटं
नातुसंबाधःकलिलंगहनंसमे संकीर्णंसंकुलाकीर्णेमुंडितंपरिवापितं ८५ ग्रंथितंसंदितंदृब्धं

ते गाहृविलोडने युच् ह्रस्वः पृषोदरादित्वात्
तदुक्तंकोशे गहनंवनदुःखयोरिति द्वे दुरधिगम्यस्य यथागहनंशास्त्रंदुर्ज्ञानमित्यर्थः॥ संकीर्णं संकीर्यतेस्म क्तः संकीर्णंनिचितेपिस्यादशुद्धेचाभिधेयवत् ॥ संकु
लं संकोलति कुलसंस्त्याने इगुपधेतिकः॥ आकीर्णं आकीर्यतेस्म कृविक्षेपेक्तः त्रयंजनादिभिरत्यंतमिश्रस्य यथासंकीर्णवर्गः केचित्तुएतान्पूर्वपर्यायानाहुः संकीर्णमृषिपल्ली
नामितिप्रयोगात् ॥ मुंडितं मुंड्यतेस्म मुडिखंडनेक्तः ॥ परिवापितं परिवाप्यतेस्म द्वे कृतमुंडनस्य ८५ ग्रथितं ग्रथ्यतेस्म सानुस्वारपाठे ग्रथिकौटिल्ये ग्रंथसंदर्भे ग्र-
थितमित्यपिपाठः. ग्रंथितंगुंफितक्रांतेहिंसितेचत्रिलिंगकमित्युक्तत्वात् ॥ संदितं संदीयतेस्म दोअवखंडनेक्तेद्यतीतित्वं गुंफितमितिपाठे गुंफग्रंथे ॥ दृब्धं दृभ्यतेस्म दृभी
ग्रंथेक्तः त्रीणिगुंफितस्य ॥

विरक्त । शरारिरिसा स्वगनौ ॥ विस्तृत विस्तर्यतेस्म स्तृञ् आच्छादने क्तात तत तन्यतेस्म तनुविस्तारेक्त तदुक्तकोशांतरे ततन्यासेविस्तृतेचेति तवेचोक्तकोशांतरेच
नीदतीर्णरिवारेम्यासुल्लिगस्तसदाततोऽदवि ॥ पिनब्धप्रसरस्य ॥ अतर्गत अतर्गम्यतेस्म अतर्गच्छतिस्म्यसा गम्लृगतौक्त तदुक्तविश्वकोशे अतर्गतविस्मृतेस्यान्म
ध्यमापन्नवान्यवदिति ॥ विस्मृत विस्मर्यतेस्म स्मृआध्यानेक्त द्वे विस्मृतस्य ॥ भास भाष्यतेस्म आपृव्याप्तौक्त ॥ तदुक्तकोशांतरे भासलब्धसमजसरदनि ॥ प्रणिहित
प्रणिधीयतेस्म दधातेर्हि क्त द्वे स्थापितस्य ८६ वेल्लित वेल्ल्यतेस्म वेल्लचलनेक्त तदुक्तकोशांतरे वेल्लितगमनेकुंचितकुटिलेविधुतेत्रिष्विति ॥ प्रेंखित प्रेंख्यतेस्म इ
खिगतौ प्रखाडितस्तरलितोल्लासिताच्छोलितावपीतिकोशांतर ॥ आधूतः आधूयतेस्म धूञ्विधूनने धूञ्कंपनेवा ॥ चलितः चल्यतेस्म चलकंपने ॥ आकंपित आकंप्य

विस्तृतविस्तृततत अतर्गतविस्मृतस्यात्प्राप्तप्रणिहितेसमे ८६ वेल्लितप्रेंखिताधूतचलिताकंपिताधुते नुन्ननुन्नास्तनिष्ठ्यूताविद्धक्षि
प्तेरिता समा ८७ परिक्षिप्ततुनिवृतमूषितमुषितार्थक

तेस्म कंपिचलने ॥ धूतः धूयतेस्म धूञ्कंपने तदुक्तहैमकोशे धुतस्त्यक्तेविधूतेचेति ष
ट्ईपत्कंपितस्य ॥ नुन्न नुद्यतेस्म णुदप्रेरणेक्त नुत्तविदेतिवानत्व ॥ नुन्न ॥ अस्त अस्यतेस्म असुक्षेपणेक्त तदुक्तहैम अस्त क्षिप्तेपश्चिमाद्रावपि ॥ निष्ठ्यू
त निष्ठीव्यतेस्म ष्ठिवुनिरसनेक्त ॥ आविद्ध आविध्यतेस्म व्यधताडने तदुक्तकोशांतरे आविद्धोवाच्यलिंगःस्यात्कुटिलेचपराहतेति ॥ क्षिप्त क्षिप्यतेस्म
क्षिपप्रेरणे ॥ ईरित ईर्यतेस्म ईरगतौकंपनेच समप्रेरितस्य ८७ परिक्षिप्त परितःक्षिप्यतेस्मक्त ॥ निवृत निव्रियतेस्म वृञ् आवरणे द्वे प्रा
कारादिनासर्वतोवेष्टितस्य ॥ मूषित मुष्यतेस्म मूषमुषस्तेये तदुक्तविश्वे मुषित स्तेयखण्डितयोरिति द्वे चोरितस्य ॥

प्रवृद्धं प्रवर्द्धतेस्म ॥ प्रसृतं प्रसरतिस्म सृधुवर्धने सृगतौ गत्यर्थेतिक्तः हे प्रसरणयुक्तस्य ॥ न्यस्तं न्यस्यतेस्म असुक्षेपणे ॥ निसृष्टं निसृज्यतेस्म सृजविसर्गेहे निक्षिप्तस्य ॥ गुणितं गुण्यतेस्म गुणआमंत्रणे ॥ आहतं आहन्यतेस्म हन्क्तः हे अभ्यावर्तितस्य यथापंचभिराहताश्चत्वारोविंशतिः इमेसर्वेक्तांताः ८८ निदिग्धं निदिह्यतेस्म दिहउपचये ॥ उपचितं उपचीयतेस्म चिञ्चयने तदुक्तंकोशांतरे भवेदुपचितेदिग्धेसमृद्धेचान्यलिंगकमिति हे पुष्टिंप्रापितस्य ॥ गूढं गुह्यतेस्म गुहूसंवरणे तदुक्तंविश्वे गूढंरहसिगुप्तेचनद्वयोःसंवृतेत्रिष्विति ॥ गुप्तं गुप्यतेस्म गुपगोपनादौ तदुक्तंहेमे गुप्तंगूढेत्रातइति हे गोपनयुतस्य ॥ गुंठितं गुंठ्यतेस्म गुडिवेष्टने गुठिवेष्टने ॥ रूषितं रूष्यतेस्म रूषिर्वेष्टनार्थः ष्यादेराकृतिगणत्वात्ज्ञेय. हे धूलिलिप्तस्य हे गुंडालितइतिख्यातस्य ॥ द्रुत द्रूयतेस्म द्रु-

प्रवृद्धप्रसृतौन्यस्तनिसृष्टेगुणिताहते ८८ निदिग्धोपचितेगूढगुप्तेगुंठितरूषिते द्रुतावदीर्णेउद्गूर्णोद्यतेकाचितशिक्यिते ८९ घ्राणघ्रातेदिग्धलिप्तेसमुदक्तोद्धृतेसमौ

गतौ तदुक्तंहेमे द्रुतंशीघ्रविलीनयोरिति ॥ अवदीर्णं अवदीर्यतेस्म दृविदारणे हे द्रवीभूतस्य ॥ उद्गूर्णं उद्गूर्यतेस्म गुरीउद्यमे ॥ उद्यतं उद्यम्यतेस्म यमउपरमे ॥ काचितं काचेधृतं ॥ शिक्यितं प्रातिपदिकाद्धात्वर्थेइतिच् हे शिक्येस्थापितस्य ८९ घ्राणं घ्रायतेस्म घ्रागंधोपादाने घ्रातंनुदविदेतिवानत्वं तदुक्तंहेमे घ्राणंतुघ्रातघोणयोरिति हे आघ्रातस्य ॥ दिग्धं दिह्यतेस्य दिहउपचये तदुक्तंकोशांतरे दिग्धोविषाक्तबाणेस्यात्पुंसिलिप्तेन्यलिंगकइति ॥ लिप्तं लिप्यतेस्म लिपउपदेहे तदुक्तंहेमे लिप्तभुक्तिविलिप्तयोरिति हे विलिप्तस्य ॥ समुदक्तं समुदच्यतेस्म अंचुगतौ केनलोप. ॥ उद्धृतं उध्रियतेस्म हृञ्हरणे धृञ्धारणेवा तदुक्तंअन्यकोशे उद्धृतंस्यात्त्रिषुक्षिप्तेपरिभुक्तोज्झितेपिचेति कूपादेर्जलादेः ॥

समेस्याशेरणेपिआजिःस्यात् अंजत्यस्यां अजगतौ तदुक्तंमेदिन्यां अथाजिःस्त्रीसमक्ष्मासंग्रामेइति संगतोजनेनप्रजास्यात् प्रजायते उपसर्गेस्थितिः शंखेशशांके अब्जःस्यात् अप्सुजायते चकारात् धन्वंतरिपर्याययोर्ग्रहणंपद्मेक्लीबं स्वकेस्त्रीकृतेनित्येसत्येनिजंत्रिषुस्यात् निजायते यथानिजःपदः इतिजांताः ३२ अंतानाह आत्मनिपुरुषेक्षेत्रज्ञःस्यात् क्षेत्रंजानाति ज्ञाअवबोधने आतइतिकः प्रवीणेतुवाच्यलिंगकःस्यात् चेतनानाम्नोः चितेनामनिसंज्ञास्यात् हस्ताद्यैरर्थसूचना तत्रापि आदिना चक्षुलोचनादिग्रहणं तदुक्तंमेदिन्यां संज्ञानामनिगायत्र्यांचेतनार्थविबोधितो अर्थस्यसूचनायांचहस्ताद्यैरपियोषितीति इतिञांताः ३३ काकेभगंडौकरटौस्यातां के

समेस्यांशेरणेप्याजिःप्रजास्यात्संगतोजने अब्जोशंखशशांकोच्चस्वकेनित्येनिजंत्रिषु ३२ इतिजांताः॥ पुंस्यात्मनिप्रवीणेच क्षेत्रज्ञोवाच्यलिंगकः संज्ञास्याच्चेतनानामहस्ताद्यैश्चार्थसूचना ३३ इतिञांताः काकेभगंडौकरटौगजगंडकटीकटौ शिपिविष्टस्तुखलतौदुश्चर्मणिमहेश्वरे ३४ देवशिल्पिन्यपित्वष्टादिष्टंदैवेपिनद्वयोः

निरटति रट्शब्दे पचाद्यच् तदुक्तंमेदिन्यां करटोगजगंडेस्यात्कुसुंभोनिंद्यजीवने एकादशाहादिश्राद्धेदुर्दुरूढेपिवाद्यको करटोवाद्यभेदेइति गजगंडकटीकटौस्यातां गजगंडश्चकटिश्च तदुक्तंविश्वे कटःश्रोणौक्रियाकारेकालिंजेऽतिशयेशवे समयेगजगंडेपिपिपिल्यांतुकटीमतेति कटिःश्रोणौद्वयेपुंसिकलत्रेतिशयेशवेइति खलतौ दुश्चर्मणिमहेश्वरोशिपिविष्टःस्यात् शापिपुरशिमसुपशुषु चाविष्टः तदुक्तंरभसे शिपिविष्टःशिवःशौरिर्दुश्चर्मखलतिस्तथेति खलिति रुजाकेशरहितइत्यर्थः शिपविष्टःशिविपिष्टइति विश्वप्रकाशनेक्तः राजमुकुटः ३४ देवशिल्पिन्यपित्वष्टास्यात् त्वक्षति त्वक्ष्यतेच त्वक्षतनूकरणे औणादिकः त्वष्टापुमान्देवशिल्पिनस्यादित्यभिद्यपीतिविश्वः दैवेपिदिष्टंस्यात् दिश्यतेस्म दिशअतिसर्जनेक्तः प्राक्तनकर्मणिद्वयोः नअपितुक्लीबं तदुक्तंविश्वे दिष्टंदैवेपुमान्कालइति॥

रसेनिंबादिरसेकटु स्यात् कट्यते अकार्येकटुनपुंसक मत्सरतीक्ष्णयो त्रिषु कटुस्त्रीकटुरोहिण्यालताराजिकयोरपि नपुंसकमकार्येस्यात्सुद्धिगोरसमात्रके
इतिमेदिनी क्षेमाशुभाभावेपुंरिष्टस्यात् अभाव क्षेमस्य रिष्टस्यादशुभेनसोरित्यजय रिष्टक्षेमाशुभाभावेपुंसिखड्गेचफेनिलेइतिविश्व शुभाशुभेअ
रिष्टस्याता नरिष्टनतुक्तयेदिन्या अरिष्टोलशुनेनिंबेफेनिलेकाककङ्कयो अरिष्टमशुभेतक्रेसूतिकागारआसवे शुभेमरणचिन्हेचेति ३५ मायारिसीरागाते
युनवस कूटस्यात् कूटअप्रदानेअन् ननस्त्रिया विपरीतदर्शनमायामृगबधनविशेष यत्र आयुधविशेषः अयोघन हलाग्रपुंज राशिः अन्यत्स्पष्टम ३६

रसेकटु कट्वकार्येत्रिषुमत्सरतीक्ष्णयो ३५ रिष्टक्षेमाशुभाभावेष्वरिष्टेतुशुभाशुभे मायानिश्चलयन्त्रेषुकैतवानृतरा
शिषु ३६ अयोघनेशैलशृंगेसीरांगेकूटमस्त्रियां सूक्ष्मैलायांत्रुटि स्त्रीस्यात्कालेल्पेसंशयेपिसा ३७ अत्युत्कर्षाश्रय
कोट्योमूलेलग्नकचेजटा व्युष्टि फलेसमृद्धोत्थदृष्टिर्ज्ञानेक्षिदर्शने ३८ इष्टियागेच्छयो सृष्टंनिश्चितेबहुनित्रिषु कष्ट
तुकृच्छ्रगहनेदक्षामदागदेष्वच ३९ सूक्ष्मैलाया अल्पेकालेसंशयेपित्रुटि स्यात् त्रुट्यति त्रुट्यतेअनेनवा त्रुटच्छेदने त्रुटि स्त्रीसंशयेस्वल्पे
सूक्ष्मैलाकालमानयोरितिविश्व ३७ अत्युत्कर्षाश्रय चापाग्रप्रकर्षकोणाः कोट्य तद्वाचकास्तु कोट्यते कुटप्रतापने अचइ तदुक्तविश्वे कोटि स्त्रीधनु
षोग्रेसौसंख्याभेदप्रकर्षयोरिति लग्नकचेमूलेजटास्यात् जटति जटसंघाते पचाद्यच् जटालग्नकचेमूलेमांस्यांप्लक्षेपुनर्जटीइतिविश्व ३८ फलेसाधितार्थे
समृद्धौ व्युष्टि व्युछन व्युछतेवाक्तिन् ज्ञानेअक्ष्णावर्शनै दृष्टि स्यात् दर्शन दृशिरप्रक्षणे करणेवा ३९

यागेच्छयोः इष्टिःस्यात् इषे क्तिन् तदुक्तंमेदिन्यां इष्टिर्मताभिलाषेपिसंग्रहश्लोकयागयोरिति ॥ निश्चिते बहुनिबले स्पष्टंस्यात् तदुक्तंरुद्रे मुक्तनिर्मितयोःप्रा
ज्येत्रिषुस्पष्टंतुनिश्चितेइति कृच्छ्रगहने दुःखदुरधिगमे कष्टेस्तः कष्यतेस्म कषहिंसायां क्तः दक्षामंदागदेषु अनलस स्तीक्ष्ण रोगहीनेषु पटुःस्यात् तदुक्तं
मेदिन्यां पटुर्दक्षेचनीरोगेचतुरेप्यभिधेयवदिति द्वौकष्टपटू वाच्यलिंगौस्तः इतिटांताः नीलकंठःशिवेपिच नीलःकंठोस्य अपिशब्दात्मयूरेपि अंतर्जठरंको
ष्ठःस्यात् कुषेःथन् पुंसिच जठरस्यांतः कोष्ठःकुसूलेचात्मीयेमध्येकुक्षेर्गृहस्यचेतिविश्वः अंतर्गृहंकुसूलःस्यात् गृहस्यांतः कुसूलोधान्यागारमित्यर्थः

पटुद्वौवाच्यलिंगौच इतिटांताः नीलकंठःशिवेपिच पुंसिकोष्ठोंतर्जठरंकुसूलोंतर्गृहंतथा ४० निष्ठानिष्पत्तिना
शांताःकाष्ठोत्कर्षेस्थितौदिशि त्रिषुज्येष्ठोतिशस्तेपिकनिष्ठोतियुवाल्पयोः ४१ इतिठांताः

४० निष्पत्तिनाशांता निष्पादनादर्शनप्रध्वंसाः निष्ठा स्युः निष्ठानं ष्ठागतिनिवृत्तौ आतश्चोपसर्गेङित्यङ् तदुक्तंविश्वे निष्ठानिष्पत्तिनाशांतयांचानिर्बर्हणेषुचेति उत्क
र्षेस्थितौदिशिच काष्ठास्यात् काशते काशृदीप्तौ काष्ठादारुहरिद्रायाकालमानप्रकर्षयोः स्थानमात्रेदिशिचस्त्रीदारुणिस्यान्नपुंसकमितिमेदिनी अतिशस्तेपि
ज्येष्ठःस्यात् अतिशयेनप्रशस्यः ज्यचेति प्रशस्यस्यज्यादेशः त्रिषु अतिशस्तअतिप्रशस्तइत्यर्थः तदुक्तंविश्वे ज्येष्ठःश्रेष्ठेचवृद्धेचत्रिषुमासांतरेपुमान् ज्ये
ष्ठातुगृहगोधाख्याजंतुनक्षत्रभेदयोरिति अतियुवाल्पयोः कनिष्ठःस्यात् युवाल्पाभ्यांइष्ठन् कनादेशः कनिष्ठोतियुवाल्यल्पानुजेस्त्रीदुर्बलांगुलावितिविश्वः
४१ इतिठांताः

को॰ लगुडेपिदन्स्यात् दडयति अच् अननपाथ तदुक्तविश्वे दण्डोदमेमानभेदेलगुडेयमसैन्ययो व्यूहभेदेमकाडश्चेकोणमथानयोरपि अभिमानेग्रहेदण्ड्य

डाशो पारिपार्श्विकइति॥ गोलेक्रूपाकयो मुद्गादिगुडकइक्षुविकारयो गुड स्यात् गुडति गुडवेष्टने इगुपेतिक तदुक्तंमेदिन्या गुड स्याद्गोलकेहस्तिसन्नाहेक्षु

विकारयो गुडास्तुत्थानकथितागुडिकायान्चयोषितीति स्नुहीगुडिकयोर्गुडेत्युक्तत्वात् सर्पमासात्परभूव्याडोस्याना व्याडति अडउद्यमे अच् व्याडोव्याघ्रेलपे

सर्पइतिरभस मासअतीतिमासात् सचासौडलयोरैक्यात् व्यालश्चगोमूत्रवाचस्तकइडाइला स्यु गोर्धेनु ॥ इलति इलउत्क्षेपे डलयोरेकत्वस्मरणात॥ इला

दडोस्त्रीलगुडेपिस्याद्गुडोगोलेक्षुपाकयो सर्पमासात्परभ्व्याडोगोमूत्रवाचास्त्वडाइला ४२ क्ष्वेडावंशशलाकापिनाडीकालेपिषट्क्षणे काडोस्त्रीदडबाणार्ववर्गावसरवारिषु ४३

इडातुभुयोषिति सौरभेय्यान्ववचनेवस्त्रमत्यावपिस्त्रियामित्युक्तत्वात् ४२ वशशलाकापिवेणुशलाका इत्यर्थयेत्यर्थ॥ क्ष्वेडास्यात् क्ष्वेलति क्ष्वे

लचलने डलयोरैक्य क्ष्वेडावशशलाकायासिहनादेचयोषिति लोहितार्कपर्णफलेघोषपुष्पेनपुसक दुरासदेचकुटिलेवाच्यालिग मकीर्तितइतिविश्व॥ काले-

पट्क्षणेनालेचनाडीस्यात् नाडीनालेव्रणातरइत्युक्तत्वात् तथा शिरायागडदूर्वायान्चर्यायाकुहकस्यचेतिमेदिनीकार ॥ षट्क्षणे षट्क्षणकालेइत्यर्थ ॥ वि

शेषणेतात्पर्य दडादिनार्यतेषु षट्स्वपदेषुकाड स्यात् अस्त्रीच कनति कनदीप्तौ अमताड्ड अनुनासिकेतिदीर्घ अर्वाकुत्सितःवर्ग परिछेद अवसर प्रस्ता

व तदुक्तधरिण्या काडचावसरेबाणेनालेस्कन्धेचवारिणा स्तबेरहसिवर्गेचेति ४३

अश्वाभरणे अमत्रे मूलवणिग्धने भाडं स्यात् भण्यते भणशब्दे भांडं भूषणपात्रे स्यादिति धरणिः तदुक्तं विश्वेच भांडं पात्रे वणिङ्मूलधने भूषाश्वभूषयोरि-
ति अमत्रे पात्रे इतिडांता॥ भृशप्रतिज्ञयोः अत्यर्थस्वीकारयोः बाढं स्यात् ऊह्यतेस्म वह प्रापणे क्षुब्धस्वांतेतिसाधुः भृशकृच्छ्रयोः अत्यर्थदुःखयोः प्रगाढं स्यात्
[illegible]गाह्यतेस्म गाहू विलोडने तदुक्तं धरण्यां प्रगाढं स्याद्दृढे कृच्छ्रे इति ५४ शक्तस्थूलौ समर्थबलवतौ दृढौ स्यातां त्रिषु च दृंहति दृंहतिस्मवा दृह दृहि वृद्धौ दृढः स्थूलब
[illegible]रितेसाधुः तदुक्तं मेदिन्यां दृढः स्थूले नितांते च प्रगाढे बलवत्यपि विन्यस्तसंहतौ व्यूढौ स्यातां विशेषेणोह्यतेस्म गत्यर्थेक्तः तदुक्तं विश्वे व्यूढः सततविन्यस्ते पृथु

[illegible]ंडमश्वाभरणेऽमत्रे मूलवणिग्धने इतिडांताः भृशप्रतिज्ञयोर्बाढं प्रगाढं भृशकृच्छ्रयोः ५४ शक्तस्थूलौ त्रिषु दृढौ व्यूढौ विन्य
[illegible] स्तसंहतौ इतिढांताः भ्रूणोऽर्भके स्त्रैणगर्भे बाणो बलिसुते शरे ५५ कणोऽतिसूक्ष्मे धान्यांशे संघाते प्रमथे गणः पणो द्यूतादि

[illegible]ढांता॥ अर्भके स्त्रैणगर्भे भ्रूणः स्यात् भ्रूण्यते भ्रूण आशायां कर्मणि घञ् स्त्रिया अयं स्त्रैणः स्त्रैणश्चासौ गर्भश्च भ्रूणः स्त्रीगर्भडिंभ
[illegible]शरे बाणः स्यात् बाणयति बाण शब्दे स्वार्थेण्यंतात्पचाद्यच् तदुक्तं मेदिन्यां बाणः स्याद्बलिस्तने दैत्यभेदे केवलकांडयोः बाणा तु बाणमूल्ये
[illegible] ५५ अतिसूक्ष्मे पदार्थे धान्यांशे च कणः स्यात् कणति कण निमीलने पचाद्यच् कणा जीरककुंभीरमक्षिकापिप्पलीषु च कणो
[illegible]संघाते प्रमथे गणः स्यात् गण्यते गण संख्याने घञ् गणः स्यात्प्रमथे संघे संख्यासैन्यप्रभेदयोरितिविश्वः रुद्रपार्षदेपि॥
[illegible] पण्यतेऽनेनवा तत्र द्यूतांतर्गतादिनामेषकुक्कुटादिनायुद्धादिकं द्यूतमक्षादिक्रीडनं॥

उत्तरएस्यमत्तार्थ फ्रणि पेनन मूल्येविक्रेपवस्तद्र्व्यपन काकणिकाचतुष्टय तदुक्तधरिण्या पणोमानेवराटानामूल्येकार्षापणेपन पूतेविक्रयग्लाकादौवद्दमुष्टौ तृ
ग्लहेग्रहनाविति ४६ मौर्व्यांद्रव्याश्रितेसत्वशौर्यसंध्यादिकेगुण स्यात् गुण्यते गुणआमन्त्रणे घञ् गुणोमौर्व्यामप्रधानेरूपादौसूदइद्रिये त्यागेशौर्यादिकेसंध्या
सत्वाद्यागनिरज्जुषु शुक्लादावपिवृक्षानेतिमेदिनी द्रव्याश्रितादि संध्यादिकातेषुपदेषुपर्यायानाह रसगंधादौ सत्वरजआदौ शौर्यचातुर्यादौ संधिविग्रहा
दौ प्रत्येकआदिशब्दस्यसंबंध निर्व्यापारस्थितौ व्यापाराभावस्थितौ कालविशेषजातकर्माद्युत्सवयो क्षणःस्यात् क्षणोति क्षणुहिंसायां तदुक्तरुद्र क्षणोव्या
पारशून्यत्वमुहूर्तोत्सवपर्वस्विति ४७ द्विजादौब्राह्मणक्षत्रियवैश्यशूद्रेषु शुक्लादौ शुक्लपीतनीलादिषु स्तुतौगुण्यावर्णं स्यात् वर्ण्यते वर्णवर्णने तदुक्तमेदि-

पूतस्ग्लहे द्यूतौमूल्येधनेपिच ४६ मौर्व्यांद्रव्याश्रितेसत्वशौर्यसंध्यादिकेगुण निर्व्यापारास्थितौकालविशेषोत्सवयो क्षण ४७
वर्णोद्विजादौशुक्लादौस्तुतौवर्णतुचाक्षरे अरुणोभास्करेपिस्याद्वर्णभेदेपिचत्रिषु ४८ स्थाणुशर्वेप्यथद्रोण काकेप्याजौरवेरण

न्या वर्णोद्विजादिशुक्लादिप्रशोगुणकथासुच स्तुतौनानस्त्रियांभेदरूपाक्षरविलेपन इति अक्षरे वर्णंतुधातुसि भास्करे वर्णभेदेकपिले अरुण स्यात् अपि
शब्दाभ्यांमेदिनीस्यपक्षसंग्रह तदुक्तमेदिन्या अरुणोव्यक्तरागेर्केसंध्यारागेर्कसारथौ नि शब्देकपिलेकुष्ठभेदेनागुणिनित्रिषुदति अरुणातिविषाश्यामामंजि
ष्ठात्रिवृतासुचेतिविश्व ४८ शर्वेपिस्थाणु स्यात् तिष्ठतीति तदुक्तस्थाणु कीलेहरेपुमानिति काकेपिद्रोण स्यात् द्रुवति द्रुगतौ नप्रत्ययेगुण तदुक्तमेदिन्या
द्रोणोस्त्रियामाढकेस्यादाढकादिचतुष्टये पुमान्कृपीपतौकृष्णकाकेस्त्रीनीवृद्दतरइति रवेशब्देरण स्यात् रणति रणशब्दे तदुक्तमेदिन्या रण क्वाणेक्वण पु
सिसमरेत्ननपुंसकमिति ॥

नापितेपुंसिश्रेष्ठेग्रामाधिपेत्रिषु ग्रामणीःस्यात् ग्रामंनयति णीञ्प्रापणेसत्सूद्विति क्विप् अग्रग्रामाभ्यांइतिणत्वं ग्रामणिर्भोगिकेपत्यौप्रधानेनापितेपिच ग्रामणी-
नीलिकायांच्चग्रामीणापण्ययोषितोरितिविश्वः ४९ मेषादिलोम्निऊर्णास्यात् ऊर्णोति ऊर्णञ् आच्छादने आदिनाशशोष्ट्रमृगादीनांगृह्यं तल्लोमभिः ऊर्णाभवतीत्य
र्थः. हेमप्रतिमायाञ्च हरिता हरिद्वर्णा हरिणीस्यात् हरिणस्यस्त्री तदुक्तंमेदिन्यां हरिणीहरितायाञ्चनारीभीदृत्तभेदयोः सुवर्णप्रतिमायाञ्चेति पांडौ पांडुरवर्णे हरि
ण स्यात् हरति तदुक्तंमेदिन्यां हरिणःपुंसिसारंगेशबलेलभिधेयवदिति वेश्मनः गृहस्यस्तंभेस्थूणास्यात् तिष्ठति अपिशब्दात्लोहप्रतिमा तदुक्तंविश्वे स्थूणा-

**ग्रामणीर्नापितेपुंसिश्रेष्ठेग्रामाधिपेत्रिषु ४९ ऊर्णामेषादिलोम्निस्यादावर्त्तेचांतराभ्रुवो हरिणीस्यान्मृगीहेमप्रतिमाहरिताचया ५० त्रिषुपांडौचहरिणःस्थूणास्तंभेपिवेश्मनः तृष्णेस्पृहापिपासेद्वेजुगुप्साकरुणेघृणे ५१ वणिक्पथेचविपणिःसुराप्रत्यक्च वारुणि करेणुरिभ्यांस्त्रीनेभेद्रविणंतुबलंधनं ५२ शरणंगृहरक्षित्रोःश्रीपर्णंकमलेपिच विषाभिमरलोहेषुतीक्ष्णंक्लीबेखरेत्रिषु ५३**

स्यात् भूम्यांस्तंभेपिवेश्मनारिति स्पृहापिपासेइच्छापानेच्छे तृष्णेस्यातां तर्षणं जुगुप्साकरणे निंदारूपेघृणे घर्षणं घृणुदीप्तौ ५१ वणिक्पथे विपणि विप-
ण्यते अस्यांवा पणव्यवहारे आपणेपण्यवीथ्यांच्चपण्येचविपणिः स्त्रियामितिरुद्रः सुरामद्यं प्रत्यक् प्राग् दिक्वारुणीस्यात् वरुणस्येयं तदुक्तंविश्वे वारुणी
गण्डदूर्वायाप्रतीचीसुरयोःस्त्रियामिति ईभ्यांहस्तिन्यांकरेणुःस्यात् स्त्रीकरोति इभेहस्तिनिनास्यात् बलंधनंचद्रविणंस्यात् द्रूयते द्रवतिवा द्रूगतौ द्रविणंतद्वयोर्वित्तेकांचनेन्न
पराक्रमइतिविश्वः ५२ गृहरक्षित्रोः शरणं शृणाति शॄहिंसायां तदुक्तंकोशांतरे शरणंगृहरक्षित्रोर्वधरक्षणयोरपि कमलेश्रीपर्णंस्यात् श्रीपर्णाकुंभिगंभार्योः
क्लीबेपद्माग्निमथयोरितिरभसः विषाभिमरलोहेषु अभिमरःयुद्धं तीक्ष्णंस्यात् क्लीबे तेजयति तेजनिशातने तदुक्तंमेदिन्यां तीक्ष्णंसामुद्रलवणेविषलोहाजि

सुप्तके क्लीबयनाग्रजेपुसितिम्मात्मत्यागिनोस्त्रिष्वीति भवेदभिमरोसुरूवपेस्त्वबलसाध्वसेरति स्वेग्रिपु हेत्वादिप्रमात्रांतेपुपंचस्क प्रमाणस्यात् प्रमीयते प्रमि
मीतेनेनना पर्यायानाह धूमादि सीमापरिच्छेद ज्ञाता तदुक्तमेदिन्या प्रमाणनित्यमर्यादाशास्त्रेपुसत्यवादिनि इयत्तायांचहेतौनक्लीबैकत्वेप्रमातरिदति ५३से
त्रादिपुत्रिपु साधकतमकरणस्यात् अतिशयनसाधक क्षेत्रे बीजोसतिस्यान तदुक्तमजये करणकारणेकायेसाधनेद्रियकर्मस्क कायस्येत्रतवपेचनात्यगीतप्र
भेदयाः पुमान्रुद्राविशो पुत्रेयानरादौनकीर्त्यतइति॥ प्राण्युत्पाते प्राणिजन्मनि असबाधचमूगतौ निरुपद्रवसेनागमने घंटापथे ससरण सम्यक्सरत्यनेन

प्रमाणहेतुमर्यादाशास्त्रेयत्ताप्रमातृषु करणसाधकतमक्षेत्रगात्रेंद्रियेष्वपि ५४ प्राण्युत्पादेससरणमसबाधचमूगतौ घ
टापथेथवातान्भेससुद्दिरणमुन्नये ५५ अतस्त्रिषुविषाणस्यात्पशुशृगेभदंतयो प्रवणक्रमनिम्नोर्व्यामह्वेनात्तुचतुष्पथे ५६
सकीर्णोनिचिताशुद्धावीरणशून्यमूषरम् सगतौ वातान्भेउन्नयेचसमाहिरणस्यात् समुध्रियने तदुक्तविश्वे गक्तोस्मितोन्मूलितयो स्यादु-
द्धरणमुन्नयेइतिरभस ५५ अत परवक्ष्यमाणानशब्दास्तेत्रिषु पशुशृगेभदंतयो विषाणस्यात् तदुक्तविश्वे विषाणीस्त्रीरकाक्षोल्यामजशृग्यानयोपिति॥
कुष्ठनामौषधौक्लीबत्रिपुश्टगेभदंतयोरिति॥क्रमनिम्नोर्व्याक्रमेण निम्नाचासौउर्वीचि प्रवणस्यात् मह्वेचतुष्पथेचनापुल्लिंग प्रवण क्रमनिम्नोर्व्यामह्वेचस्या
चतुष्पथे आपन्नेचतथाक्षीणेप्रगुणेसमुदात्वतइतिधरणि ५५ निचिताशुद्धो मिश्रोसकीर्णोस्याता सकीर्यतेस्म कृविक्षेपे सकीर्णसकटेव्याप्तेकुत्राचिदुर्णास
करे॥ सकीर्णनिचितेपिस्यादशुद्धेचाभिधेयवदित्याजय ॥ शून्य निर्जनस्थल उषर स्थलभेद ईरणस्यात् ऋतियस्मिन् ऋगतौ ईरणमूषरेशून्यइत्यक्तत्वात्
इत्यादिरपि इतिणातरः॥

३ॱ

अथतातानाह ॥ देवसूर्यौविवस्वतोस्यांतां विवस्तेजोस्यास्ति मतुप् तदुक्तंविश्वे विवस्वास्तुसुरेसूर्येतन्नगर्याविवस्वती ॥ नदार्णवौ सरस्वतोस्याता सरोगमनमस्या
स्ति मतुप् सरस्वास्तुनदेचाब्धौनान्यवद्रसिकेस्त्रियामितिविश्वः ५७ पक्षितार्क्ष्यौ गरुत्मंतो गरुतःसत्यस्य ॥ भासपक्षिणौ शकुंतोस्यातां शक्नोति भासः गोष्ठ
कुक्कुटः पक्षिमात्रवा तदुक्तंविश्वे भासिभासिसमाख्यातोगोष्ठकुक्कुटगृध्रयोरिति ॥ अग्न्युत्पातौ धूमकेतूस्यातां धूमःकेतुश्चिन्हमस्य तदुक्तंविश्वे धूमकेतुःस्मृतो
वन्हावुत्पातग्रहभेदयोरिति ॥ मेघपर्वतौ जीमूतोस्यातां जीवनंमुंचति पृषोदरादिः जीमूतोद्रौधृतिकरेदेवतारेपयोधरइतिमेदिनी ॥ पाणिनक्षत्रेहस्तौ हसति हसेहस
ने तन् तदुक्तंमेदिन्या हस्तःकरेकरिकरेसप्रकोष्ठकरेपिच ॥ ऋक्षेइति पवनामरौमरुतौ मरुद्देवसमीरेनाग्रथिपर्णे नपुंसकमितिमेदिनी ॥ हस्तिपकेमहामात्रेसूतोसा

देवसूर्यौविवस्वंतोसरस्वंतोनदार्णवौ ५७ पक्षितार्क्ष्यौगरुत्मंतोशकुंतोभासपक्षिणौ अग्न्युत्पातौधूमकेतूजीमूतौमेघपर्वतौ ५८
हस्तौतुपाणिनक्षत्रेमरुतौपवनामरौ यंताहस्तिपकेसूतेभर्ताधातरिपोष्टरि ५९ यानपात्रेशिशौपोतःप्रेतःप्राण्यंतरेमृते ग्रहभे
देध्वजेकेतुःपार्थिवेतनयेसुतः ६० रथी यंतास्यात् यच्छति यमउपरमे तृच् ॥ धातरिपोष्टरि भर्ता विभर्तरि भरतिवा डुभृञ्धारणपोषणयोः तदुक्तंविश्वे भ
र्तास्वामिनिधारकइति ॥ भर्तास्वामिनिपुंसिस्यात्त्रिषुधातरिपोष्टरीतिमेदिनी ५९ यानपात्रेवहित्रे शिशौपोतःस्यात् पुनाति पूयतेवा पूञ्पवने तदुक्तंविश्वे पोतःशि-
शौवहित्रेचगृहस्थानेचवाससीति ॥ प्राण्यंतरेभूतांतरेमृतेप्रेतःस्यात् प्रकर्षेणइतः प्रेतोभूतांतरेपुंसिमृतेस्याद्वाच्यलिंगकइतिमेदिनी ॥ ग्रहभेदेध्वजे केतुःस्यात् तदु
क्तंविश्वे केतुर्नारुग्पताकारिग्रहोत्पातेषुलक्ष्मणीति ॥ पार्थिवेतनयेसुतः सूयतेस्म सौतिस्मवा षुञ्अभिषवे षुप्रसवैश्वर्ययोः सुतःस्यात्पार्थिवेपुत्रेस्त्र्यपत्येतु
सुतास्मृतेति ६०

गुरुणोदेस्थपतिः स्यात् तिष्ठत्यस्मिन् घञर्थे क स्थश्चासौपतिश्चस्थपतिः ऋतुकिन्यपीत्युक्तत्वात् जीवेधियाज्ञके शिल्पिभेदेनासत्तमेभिश्चितिमेदिनी भूभिधरे नृपे भूभृत् भुवविभर्ति इग्गृत् भूपेमूर्धाभिषिक्तः मूर्धनिअभिषिच्यतेस्म षिचक्षरणे तदुक्तमेदिन्यामूर्धाभिषिक्तोभूपालेमात्रेणक्षत्रियेपिचेति ॥ स्त्रीकुसुमे ऋतुस्यात् स्त्रीरजसि तदुक्तधरिण्या ऋतुर्मासिवसन्तादौधारेस्त्रीकुसुमेपिचेति ६१ विष्णावपि अजिताव्यक्तौस्याताम् अजितश्चाव्यक्तश्चेति नव्यज्यते स्म अजूव्यक्तयादौ क्त तदुक्तविश्वे अव्यक्तः शंकरेविष्णावव्यक्तमहदादिषु आत्मन्यपिस्यादव्यक्तअस्फुटेत्वभिधेयवदिति ॥ त्वष्टृसारथ्योःसूत सूयतिसू

स्थपतिः कारुभेदेपि भूभृद्वर्ष्मधरेनृपे मूर्धाभिषिक्तोभूपेपिऋतुः स्त्रीकुसुमेपिच ६१ विष्णावप्यजिताव्यक्तौसूतस्त्वष्टरिसारथौ व्यक्तः प्राज्ञेपिदृष्टान्तावुभौशास्त्रनिदर्शने ६२ क्षत्तास्यात्सारथौद्वाःस्थेक्षत्रियायांचशूद्रजे वृत्तान्तस्यात्प्रकरणेप्रकारेकार्त्स्न्यवार्तयोः ६३ प्रेरणे सूतस्तक्षसारथौतद्विक्षत्रियाद्ब्राह्मणीसूते बंदिपारदयोःपुंसिप्रसूतेप्रेरितेत्रिष्विति ॥ प्राज्ञेपिस्फुटेव्यक्तः स्यात् व्यज्यतेस्म अजू व्यक्तः स्फुटमनीषिणोरित्युक्तत्वात् उभौदृष्टान्तौ शास्त्रनिदर्शनेस्याताम् शास्त्रतर्कादिउदाहरणेच ॥ दृष्टअन्तोत्र तदुक्तविश्वे अन्त भातेतिकेनाशाइति ६२ सारथौ द्वास्थेक्षत्रियायांचशूद्रजे ॥ क्षत्ता तदुक्तविश्वे क्षत्ताशूद्रात्क्षत्रियाजेपतिहारेचसारथौ भुजिष्यातनयेक्षत्तानियु-क्तेचप्रजासृतीति ॥ प्रकरणे प्रस्तावे ॥ प्रकारेभावेकार्त्स्न्यवार्तयोः साकल्यप्रवृत्तयोः वृत्तान्त वर्ततेऽस्य वृत्तस्यान्तइतिवा क्लीवोवासरेभावेकार्त्स्न्यवार्ताविशेषयोः ॥ वृत्तान्त प्रक्रियायांचेति ६३

समरेनृत्यस्थाननीवृद्विशेषयोः आनृत्यंत्यत्र नृतीगात्रविक्षेपे आनर्तोनृत्यशालायांजनेजनपदांतरइत्यजयः आनर्तोदेशभेदेपिनित्यस्थानेजनेरणेइति-
विश्वश्च यमादद्याकुशलकर्मानितेषुचतुर्षुपदेषु कृतांतःस्यात् कृतःअंतोयेन ६४ पर्यायानाह देवदिष्टं अकुशलकर्मपापं रसरक्तादि श्लेष्मादिस्यात् रस अथ-
माहारस्यविकारः आदिशब्दात्वसामज्जाशुक्रादिश्लेष्मादिधातुशब्दवाच्य आदिनापित्तादिग्रहणं महाभूतानिपृथिव्यादिनी तद्गुणा गंधादयःस्यु इंद्रिया
णि चक्षुरादीनि ॥अश्मविकृति. मनःशिलादिस्यात् धातव शब्दयोनिः दधाति धीयतेवाधातुन् भूसत्तायामित्यादिः भूवादयोधातवइतिसूत्रात् ६५ नृपस्य अ

आनर्तःसमरेनृत्यस्थाननीवृद्विशेषयोः कृतांतोयमसिद्धांतदेवाकुशलकर्मसु ६४ श्लेष्मादिरसरक्तादिमहाभूतानितद्गुणाः॥
इंद्रियाण्यश्मविकृतिःशब्दयोनिश्चधातवः ६५ कक्षांतरेपिशुद्धांतोनृपस्यासर्वगोचरे कास्ूःसामर्थ्ययोःशक्तिर्मूर्तिःकाठिन्य
काययोः ६६ विस्तारवल्ल्योर्व्रततिर्वसतीरात्रिवेश्मनोः क्षयार्चयोरपचितिःसातिर्दानावसानयोः ६७

सार्वगोचरेकक्षांतरे शुद्धांत स्या
त् शुद्धः अंतोस्य असर्वेतिकक्षांतरविशेषणं तदुक्तंअजये शुद्धांतोंतःपुरेतुल्यकक्षाभेदेचभूपताविति कास्ूःसामर्थ्ययोःशक्तिशक्यतेनया शकूशक्तौस्त्रि
यांक्तिन् शक्तिरस्त्रांतरेगौर्यांसुत्साहादौबलेस्त्रियां कास्ूर्विकलवाचीस्यात्कास्ूःशक्त्यायुधेपिचेतिविश्वः॥काठिन्यकाययोः मूर्तिः मूर्च्छ्यते मूर्च्छामो
हादौक्तिन् ६६ विस्तारवल्ल्योः॥व्रततिः व्रजंतीततिरस्याः पृषोदरादिः॥ रात्रिवेश्मनोः॥ वसतिः वसंत्यस्यां वसनिवासे अति. वसतिःस्यात्स्त्रियावासेयामि
न्यांचनिकेतनइतिविश्वः॥ क्षयार्चयोः॥ अपचितिः अपचीयते अपचाय्यतेस्म चायृपूजादौ तदुक्तंमेदिन्यां भवेदपचितिःपूजाव्ययनिष्कृतिक्षतिषुइति॥
दानावसानयोःसाति सननं सानंच षणुदाने षोंतकर्मणि अवसानसमाप्त्यंतयोः ६७

पीडाधनुष्कोट्यो अर्त्तिः अर्दनं अर्दहिंसायां सामान्यजन्मनो ॥जाति जननं अनया वा तदुक्तं जातिश्छन्दसि सामान्ये मालत्यां गोत्रजन्मनो जातिर्जातीफल धात्र्यां चुल्लीकाम्पिल्लयोरपीति विश्वात् ॥ प्रचारस्पन्दयो लोकाचारप्रस्रवणयोः ॥ राति रीयते रिणाति वा रयणं वा रीः प्रवणं रीगतिरेषणयोः तदुक्तं विश्वे रीतिः प्रचारे स्यन्दे चलाहके दारकूटयोरिति ॥ डिंबे प्रवासे च ईतिः ईयते अनया ईङ् गतौ क्तिः डिंबो विप्लवः तदुक्तं विश्वे ईतिर्डिंबप्रवासेति वृष्ट्यादि षट्स्वपि स्त्रियामिति ६८ सप्तसप्तगार अति वृष्टिरनावृष्टिः शलभा मूषकाः शुकाः स्वचक्रपरचक्रं च सप्तैता ईतयः स्मृता इति ॥ उदये अभ्युदये अधिगमे लाभे माप्ति स्यात् त्रेता अग्नित्रये दक्षिणगार्हपत्याहवनी याख्ये ॥ युगे स्यात् त्रीन् भेदानिता त्रेता शब्दं आवृत वीणाभेदेपि महती महते मह पूजायां महती वल्लकी भेदे राज्ये तु स्यात् भेदे तु पुमान् श्रेष्ठे वाच्यवदिति

अर्ति पीडाधनुष्कोट्योर्जातिः सामान्यजन्मनो प्रचारस्यन्दयो रीतिरीतिर्डिंबप्रवासयो ६८ उदयेधिगमे माप्तिस्त्रेता त्वग्नित्रये युगे वीणाभेदेपि महती भूतिर्भस्मनि संपदि ६९ नदीनगर्योर्नागानां भोगवत्यथ संगरे सगे सभायां समितिः क्षयवासावपि क्षितिः ७० रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः जगती जगति छन्दोविशेषेपि क्षितावपि ७१

स्व भस्मनि संपदि च ॥ भूति भवति अनया भूति-र्भस्मनि संपति हस्तिशृंगारयो स्त्रियामिति विश्व ६९ नागानां नदीनगर्यो भोगवती भोगोस्त्यस्या मतुप् अथ भोगवती नागपुर्गे नद्योरहो पुमानिति विश्व ॥ स गरे सगे सभायां च समितिः स्यात् समयनं समीयते वास्यां इणगतौ क्तिन् क्षयवासावपि क्षितिः स्यात् क्षयणं क्षीयते स्यां वा क्षि क्षये क्षिनिवासगत्यो तदुक्तं मेदिन्यां क्षितिर्निवासे पेदिन्या काल भेदे क्षये स्त्रियामिति ७० रवे अर्चि शस्त्रं वह्निज्वाला एते हेतय इति हिनोति वा हन्यते अनया वा जगति लोके छंदोविशेष द्वाद शाक्षरपादे क्षितौ अपिशब्दात् जने जगती स्यात् गच्छति तदुक्तं विश्वे जगत्स्यात् विष्टपे क्लीबं नावायो जंगमे त्रिषु जगती च भवे स्यायां छंदोभेदे जनेपि चेति ७१

दशमछंद दशाक्षरपादक पंक्तिः स्यात् पंक्तिर्दशाक्षरच्छंदोदशसंख्यालिपुंस्त्रियामितिमेदिनी ॥ प्रभावे आयतिः स्यात् आयम्यतेनया आयमनंवा यमउपरमे उत्तरकालेपि तदुक्तंविश्वे आयतिःसंयमेदैर्घ्येप्रभावागामिकालयोरिति ॥ गतौ पंक्तिः स्यात् ॥ वीरसैन्यभेदयोरपि ॥ पतति पत्लृगतौ पंक्तिर्नापदगेस्त्रियामित्युक्तत्वात् तदेवोक्तंमेदिन्यां गतावेकरथैकेभकत्र्यश्वपंचपदातिकइति ॥ पक्षभेदयोः शुक्लकृष्णाख्ययोः स्वगावयवयोश्च मूलेप्रतिपदिपक्षिपक्षमूलेचपक्षतिः ॥ पक्षस्यमूलं ७२ योनौलिंगेचप्रकृतिः योनिर्लिंगेहृदूक्य तदुक्तंरभसे प्रकृतिर्गुणसाम्येस्यादमात्यादिस्वभावयोः योनौलिंगेपौरवर्गेइति ॥ के शिक्याद्याः ॥ वृत्तमः वृत्तिर्विवरणे ॥ आदिनाकोशोक्तगृहण तदुक्तंभरतेन भारतीसात्वतीचैवकैशिक्यारभटीतथा चतस्त्रोवृत्तयश्चैषयासुनाट्यप्रसंभितमिति ॥ तदुक्तंविश्वे वृत्तिर्विवरणेजीव्येकैशिक्यादिषुचेष्यतइति ७३ वालुका.

**पंक्तिश्छंदोपिदशमंस्यात्प्रभावेपिचायतिः पंक्तिर्गतौचमूलेतुपक्षतिःपक्षभेदयोः ७२ प्रकृतिर्योनिलिंगेच्चकैशिक्याद्याश्चवृत्तयः**
**सिकताःस्युर्वालुकापिवेदेश्रवसिचश्रुतिः ७३ वनिताजनितात्यर्थानुरागायांचयोषिति गुप्तिःक्षितिव्युदासेपिधृतिर्धारणधैर्ययोः ७४**

का. सिकताःस्युः सिकतेत्यत्रभिनेरतन् कुत्व पृषोदरादित्वात् सिकताशब्दोबहुवचनांतः वालुकायांस्त्रियां तदुक्तंमेदिन्यां सिकताःस्त्रीसिकतिलेवालुकायांतुभूम्नीइति ॥ वेदेश्रवसिचश्रुतिः श्रूयतेनयावा श्रुश्रवणेस्त्रियांक्तिन् तदुक्तंविश्वे श्रुतिःश्रोत्रेतथाम्नायेवार्तायांश्रोत्रकर्मणीति ७३ जनितात्यर्थानुरागायांयोषितिच ॥ वनितास्यात् वन्यतेस्म वनुयाचनेक्तः यस्येत्यस्यांनित्यत्वादिट् ॥ जनितात्यंतानुरागोयस्यां चकारात्योषिन्मात्रेपि तदुक्तंविश्वे वनिताजनितात्यर्थरागयोषितियोषितीति ॥ क्षितिव्युदासे भूविवरेगुप्तिः गुप्यतेगोपनंच गुप्तिः कारागृहेप्रोक्ताभूगर्तेरक्षणेऽधमेइतिविश्वः ॥ धारणाधैर्ययोः धृतिःस्यात् धरणं धृञ्धारणे धारणायोगः तदुक्तंविश्वे धृतिर्योगांतरेधैर्येधारणाध्वरतुष्टिष्विति ७४

:को

क्षुद्रवार्ताकी बृहतीस्यात् वर्त्तमाने स्त्यकणादिसूत्रेणात्साधु साछंदोभेदेमहत्यपिस्यात् तदुक्तंविश्वे बृहतीक्षुद्रवार्ताक्यांकंटकार्यान्निवाचिके वारिधान्यामहत्यां
चछंदोवसनभेदयोरिति॥क्षुद्रवार्ताकी ओषधिविशेष॥स्त्रीकरिण्यो हस्तिन्यो वासिता वासयति वसनिवासे वासउपसेवायांवा क्त तदुक्तंविश्वे वासिताक
रिणीनार्योवासितंत्वसुभीकृते ध्यानमात्रेस्वगारावेवासितवस्त्रवेष्टितइति॥रामस्वामीतुतालव्यमध्यपाठमाह तत्रवाश्शब्दे इत्तोउपजीविकाया जनश्रुतोमइस्या
वार्तीस्यात् मत्वर्थेण वात्याविनिगणेइत्तोवार्ताकृष्यादुदंतयोरितिविश्वः ७५ फल्गुनिस्सारे अरोगेवार्त्तंत्रिषु दृतामृतेअप्सुक्त्वस्यात॥ वार्त्तंफल्गुन्यरोगेस्याद्वाराग्यदृत्तिम
पीति धरणि॥मियते जिघर्तिवाघृस्सरणदीप्त्योः अजिघ्रसिभ्यः क्त तदुक्तंविश्वे दृतमाज्येजलेक्लीबेमदीमेलभिधेयवदिभि॥ नमृतमरणामत्र तदुक्तंविश्वे अमृत

बृहतीक्षुद्रवार्ताकीछंदोभेदेमहत्यपि वासितास्त्रीकरिण्योश्चवार्ताद्वृत्तोजनश्रुतो ७५ वार्त्तंफल्गुन्यरोगेचत्रिष्वप्सुचदृतामृते॥क
लधौतरूप्यहेम्नोर्निमित्तहेतुलक्षणोः॥श्रुतशास्त्रावधृतयोर्युगपर्याप्तयोःकृतम् अत्याहितमहाभीति कर्मजीवानपेक्षिच ७७

यज्ञशेषेस्यात्पीयूषेसलिलेदृते अयाचितेचमोक्षेचनाधन्वंतरिदेवयोरिति॥रूप्यहेम्नो कलधौतस्यात् कलं मलं धौतोस्य तदुक्तंमेदिन्या कलधौतंसुवर्णेस्याद्रजते
चनपुंसकमिति॥हेतुलक्षणो निमित्तस्यात् मिमिद्यते त्रिमिदास्नेहने अनात्मनेपदनिमित्तेइतिनिर्देशान्नत्व लक्ष्मचिन्हमित्यर्थः ७६ शास्त्रावधृतयो
श्रूयतेस्म श्रवणंच श्रुश्रवणे क्त अवधृतमाकर्णितमित्यर्थः॥युगपर्याप्तयोः कृतस्यात् कृञ क्त तदुक्तंमेदिन्या कृतंयुगेलमर्थेचविहितेहिंसितेत्रिष्विति॥जीवा
नपेक्षिजीवस्यअनुहनकर्म महाभीतिः महद्भय अत्याहितस्यात् अतीवाधीयतेस्म मनसि डुधाञ् क्त दधातेर्हि ७७

युक्तेऽन्याय्येक्ष्मादौक्षित्यादिपञ्चकेऽऋतेसत्येप्राणिनिजंतौअतीतेवृत्तेसमेसदृशभूतंस्यात् भूधातोः क्तः प्राण्यतीतइतिसमाहारद्वंद्वः तदुक्तंमेदिन्या भूतंक्ष्मादौ-
पिशाचादौजंतौक्लीबंत्रिषूचिते प्राप्तेवृत्तेसमासत्येदेवयोन्यंतरेत्वनाइति ॥ भूतंक्ष्मादौपिशाचादौन्याय्यंसत्योपमानयोरितिविश्वश्च ॥ पद्येश्लोकेअतीतेभूते
वृत्तनिस्तलेगाढवर्तुलेदृढेक्यं अतीतादिकेत्रिलिंग्याद्वृत्तंस्यात् वृतुवर्तनेक्तः ७८ राज्यंमहत्स्यात् मह्यते महपूजायां वर्तमानेपृषदितिसाधुः तदुक्तंमेदिन्यां
महतीवल्लकीभेदे राज्येतस्यान्नपुंसक तत्त्वभेदेपुमान्श्रेष्ठेवाच्यवदिति ॥ जन्येजनापवादे गर्हितेनिंदिते अवगीतं अवगीयतेस्म गैशब्दे क्तेईत्वं ॥ अवगीतस्तु

युक्तेक्ष्मादावृतेभूतंप्राण्यतीतेसमेत्रिषु वृत्तंपद्येचरित्रेत्रिष्वतीतेदृढनिस्तले ७८ महद्राज्यंचावगीतंजन्येस्याद्गर्हितेत्रिषु ॥
श्वेतंरूप्येपिरजतंहेम्निरूप्येसितेत्रिषु ७९ त्रिष्वितोजगदिंगेपिरक्तंनील्यादिरागिच अवदातःसितेपीतेशुद्धेबद्धार्जुनौसितौ ८०

निर्वादेदुष्टगर्हितयोरपीतिविश्वः ॥ रूप्ये श्वेतंस्यात् श्वितते श्विता वर्णे पचाद्यच् तदुक्तंविश्वे श्वेतंरूप्येऽन्यवच्छुक्लेश्वेतोद्वीपाद्रिभेदयोरिति ॥ हेम्निरूप्येसिते
चरजतं ॥ रजति रज्यतेनेनवा रंजरागे अतच्ः किच्चान्नलोप रजतंरजनेरूप्येशोणितेहृदहारयोरित्यजयः ७९ अत रजनात् परेनाना शब्दास्त्रिषु इंगेजं
गमेविष्टपेचजगत् गमेःक्विपिद्वित्वमलोपे तुक् तदुक्तंमेदिन्यां जगत्स्याद्विष्टपेक्लीबंवायौनाजंगमेत्रिष्विति ॥ नील्यादिरागिच रक्तंस्यात् रंजरागेक्तः रक्तोऽनुर
क्तेनील्यादिरंजितेलोहितेत्रिषु क्लीबंतुकुंकुमेताम्रइतिमेदिनी ॥ सितादित्रिके अवदातः अवदायतेस्म दैप्शोधने आत्वेक्तः अधुत्वादित्वन बद्धेअर्जुनेसितं सी
यतेस्म षिञ्बंधने सितमवसितेचबद्धेधवलेत्रिषुशर्करायांस्त्रीउक्तत्वात् ८०

युक्तेन्याय्येअतिसंस्कृते अतिप्रशस्ते मर्षिणी क्षन्तरि अभिनीत स्यात् अभिनीयतेस्म॥कृत्रिमे घटादौ लक्षणोपेते पाणिन्यादिसूत्रव्युत्पादिते॥संस्कृत स स्कृत्न्तेस्म तदुक्तकोशान्तरे संस्कृत कृत्रिमेशस्तेभूषितेप्यन्यलिंगक॰ क्लीबतुलक्षणोपेतेइति॥अनवधौ अनक नञ्अनोस्य अनत केशवेशेषेपुमान्निरवधौ त्रिष्विति मेदिनी॥अनन्तरवेनिरवधाविति हैमस्य ८१ ख्याते प्रसिद्धेदृष्टेन प्रतीत प्रतीयतेस्म इण्गतौ प्रतिपूर्वादिण क्त प्रज्ञातज्ञातहृष्टेषु प्रतीत सादरत्रिष्विति रभस॥तदेवोक्तंहैमे प्रतीत सादरेप्राज्ञे प्रथिते ज्ञातहृष्टयोरिति॥कुजले कुलीनेबुधेपण्डिते अभिजात अभिजायतेस्म गत्यैर्नित्त जनेरात्त तदुक्तमेदिन्यां

युक्तेतिसंस्कृतेमर्षिण्यभिनीतोथसंस्कृत कृत्रिमोलक्षणोपेतेप्यनन्तोनवधावपि ८१ ख्यातेहृष्टे प्रतीतोभिजातस्तु कुलजेबुधे विविक्तोपूतविजनौ मूर्च्छितौ मूढसोच्छ्रयौ ८२ द्वौचाम्लपरुषौशुक्तौ शितौधवलमेचकौ सत्येसाधौविद्यमाने प्रशस्तेभ्यर्हितेच सत् ८३

अभिजात पण्डितेस्यान्न्याय्यपण्डितयोस्त्रिष्विति॥पूतविजनौ पवित्रजनाभावस्थले विविक्तौस्यातां विविच्यते विचिर्पृथग्भावे विनिरावि नेवा विविक्तस्यादसंपृक्तेरहः पूतविवेकिष्विति हैम॥मूढसोच्छ्रयौ द्वौ मूर्छितौस्यातां मूर्छतिस्म मूर्छामोहसमुच्छ्राययोरित्युक्तत्वात्॥मोहगतवृद्धियुक्ता वि त्यर्थ॥अम्लपरुषौशुक्तौस्यातां ईशुचिरपूतिभावेक्त तदुक्तमेदिन्या पूताम्लनिष्ठुरेशुक्तमिति॥मृन्मयादिशुक्तौभाण्डेमधुरसौद्रकाञ्जिक धान्यराशौत्रिरा त्रस्थशुक्तंशुक्तंतदुच्यतइत्युक्तत्वात्॥धवलमेचकौशितौस्यातां शीयते शिनोतिस्मवा शिञ्निशाने क्तिन्क्तिजवा निशितेपिशितिर्भूर्जेवासितासितयोस्त्रि- तिमेदिनी॥मेचकौकृष्णवर्ण स्यादित्यर्थ सत्याद्याभ्यर्हितान्तेषुपञ्चसुसत् स्यात् अस्ति असभुवि लट शतृअल्लोप तदुक्तमेदिन्या सन्साधौधीरशस्तयोरिति

८३

अरात्यभियुक्ते अरातिनाअभियुक्तेकाले अग्रतः कृतेपूजितेपुरस्कृतः पुरोकारि कृञः क्तः पुरोव्येतिगतिसंज्ञत्वम्पुरेतिसः आश्रयावातौनिवातसश्वातवर्जितौ एतौनिवातौ निवृत्तोवातोस्मात् यच्छस्त्राभेद्यंवर्मकवचं तदपिनिवातमेवस्यात् निवातोऽस्सन्नाहेनिवातेवातवर्जितेइत्यजयः ८४ जातोन्नद्धप्रवृद्धाः उत्पन्नदसप्रवृद्धाः उच्छ्रि-
ताः स्युः उच्छ्रयति उच्छ्रीयतेस्मावा श्रिञ्सेवायां गत्यर्थेतिकर्तरि कर्मणिवा क्तः उच्छ्रितंत्रिषुसंजातेसमुन्नद्धप्रवृद्धयोरितिमेदिनी ॥ अमीवक्ष्यमाणाउत्थितादयः ॥
उत्थिताः उत्तिष्ठंतिस्म गत्यर्थेइतिक्तः तदुक्तंमेदिन्यां उत्थितंस्यात्त्रिषूत्पन्नेप्रोद्यतेवृद्धिमत्यपीति ॥ वृद्धिमत्प्रोद्यतोत्पन्नौ सादरार्चितौ आदृतौ आद्रियतेस्मा त्व

पुरस्कृतःपूजितेरात्यभियुक्तेग्रतःकृते निवातावाश्रयावातौशस्त्राभेद्यंचवर्मयत् ८४ जातोन्नद्धप्रवृद्धास्युरुच्छ्रितारुत्थिता
स्त्वमी वृद्धिमत्प्रोद्यतोत्पन्नाआदृतौसादरार्चितौ ८५ इतितालाः अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिषु निपानागम
योस्तीर्थमृषिजुष्टजलेगुरौ ८६

दृङ्आदरेक्तः प्रोद्यतश्चउत्पन्नश्चवृद्धिमाश्च ८५ इतितालाः अभिधेयरैवस्तुप्रयोजननिवृत्तिषु अर्थःस्यात्
अर्थ्यते ऋच्छतिवा ऋगतौ थन्प्रत्ययः यद्वा अर्थ्यते अर्थउपयाच्ञायां पर्यायानाह वाच्य रा धन वस्तुतत्त्व निवृत्तिर्निवर्त्तनं तदुक्तंमेदिन्यां अर्थोविषयार्थनयो
र्धनकारणवस्तुष्वितिं ॥ तदुक्तंचहैमे अर्थोहेतौप्रयोजने ॥ निवृत्तौविषयेवान्येप्रकारद्रव्यवस्तुष्विति ॥ निपानागमयोः जलकूपयाश्रयोः ऋषिजुष्टे जलेगु
रौउपाध्यायेतीर्थंस्यात् तीर्यतेऽनेनवा तॄप्लवनतरणयोः थक्ईत्वं तदुक्तंमेदिन्यां तीर्थंशास्त्राध्वरक्षेत्रोपायनारीरजःसुच अवतारर्षिजुष्टांबुपात्रोपाध्याय
मंत्रिष्विति ॥ निदानागमयोरित्यपिपाठः निदानमुपायइतिमुकुटः ८६

को॰

शक्तिस्थेशक्तमिति सवद्धार्थेसमर्थपदविधो हिते॰नुकूलेसमर्थः त्रिलिम्वासमर्थयते समर्थ्यतेवा अर्थउपपान्त्वाया पचाद्यच् घञ्वा ॥ क्षीणरागवृद्धो दशमीस्थौस्त दश म्यात्तिष्ठति सुपिस्थइतिक. दशमीस्थोनष्टजीवेस्थविरेप्यन्यलिंगकइतिविश्वः ॥ क्षीणोरागोरसोस्य पदवी वीथीस्यात् वीथ्यतेनया विथृयाचने करणेघञ् पृषोदरादि-त्वात् वीत्यस्यदीर्घ तदुक्तंमेदिन्या वीथीपंक्तौगृहांगेचरूपकांतरवर्त्मनोरिति ८७ आस्थानीयलयो सभामयञ्यो आस्था आतिष्ठत्यस्या आतश्चोपसर्गइत्यड् तदुक्तंमेदि न्या आस्थात्वालंबनस्थानयत्नापेक्षास्कयोषितीति ॥ सानुमानयो शिखरपरिमाणभेदयो प्रस्थः प्रतिष्ठत्यस्मिन् अनेनवा घञर्थेक अस्त्री प्रस्थोस्त्रियामानभेदेसा नावुन्नितवस्तुनीतिमेदिनी ॥ शास्त्राद्रविणयोः ग्रथ सस्थाधारेस्थितौमृताविलन्यत्र ॥ इतिथान्ता ॥ अभिप्रायवशौ आशायापीनौछंदो छद्यते छदिसंवरणेघञ् तदु

समर्थस्त्रिषुशक्तिस्थेसंवद्धार्थेहितेपिच दशमीस्थोक्षीणरागवृद्धौवीथीपदव्यपि ८७ आस्थानीयलयोरास्थाप्रस्थोस्त्रीसानुमानयोः ॥ इतिथान्ता ॥ अभिप्रायवशौछंदावद्बोजीमूतवत्सरौ ८८ अपवादौतुनिंदाज्ञेदायादौसुतबांधवौ पादारश्म्यंघ्रितुर्यांशाश्चंद्राग्न्यर्कास्तमोनुद ८९

क्तंहैमे छंदोवशो॰भिप्रायेचरुषत्पाषाणमात्रके निष्पेषणार्थपट्टेऽपीति ॥ जीमूतवत्सरौ अब्दौस्याता अपोददातीति आतोनुपेतिक तदुक्तंविश्वे अब्दःसंवत्सरेमेघेगिरिभेदेसमुस्तकइति ८८ निंदाज्ञेकुत्साशासने अपवादो वदे कर्मणिभावेवाघञ् अववादइत्यपिपाठ तदुक्तंविश्वे अ पवादस्तुनिंदायामाज्ञाविस्रंभयोरपीति ॥ सुतबांधवौ दायादौस्त दायमति अदभक्षणे कर्मण्यण् दायादस्तुभवेत्सुतसपिंडेतनयेपिचेतिविश्वः ॥ रश्म्यंघ्रितुर्यां शा पादा पद्यते पदगतौ पदरुजेतिघञ् रश्मितुर्यांशौ किरणचतुर्थभागाविल्यर्थः पादोब्रुध्नेतुरीयांशेशैलप्रत्यंतपर्वते चरणेचमयूखेचेतिविश्वः ॥ तदुक्तंचहैमे पा दोमूलास्त्रतुर्यांशाभिष्ठुप्रत्यंतपर्वतेइति ॥ चंद्राग्न्यर्का तमोनुद तमोनुदतीतितमोनुन् णुदप्रेरणे कर्तरिक्विप् गुणाभाव ८९

जनवादे जनापवादे निर्वाद निर्वदन वदव्यक्तायांवाचि भावेघञ् निर्वाद स्यात्परीवादपरिनिश्चितवादयोरितिविश्वः॥ जंबालशष्पयोः पंकघासयोः शादः शद्यतेअनेनवा शद्लृशातने करणेभावेवाघञ् आरावादिरणानेषुचर्तुषुपदेषु आरुतः आरावः आर्त्तध्वनि त्रातारस्याक्रः आक्रंदनं आक्रंदते आक्रंद्यतेस्मिन् आक्रंदयतिवा क्रदिआव्हाने रोदनेच घञ् पचाद्यच्वा तदुक्तंमेदिन्यां आक्रंदः क्रंदनेव्हानेमित्रदारुणयुद्धयोरिति ९० अनुरागेप्रसादःस्यात् प्रसदनमनेनवा षद्लृविशरणादौ घञ् भावेकरणेवा अनुरागः अनुग्रहइत्यर्थः तदुक्तंमेदिन्यां प्रसादोनुग्रहेकाव्यप्राणस्वास्थ्यप्रसत्तिष्विति व्यंजने सूदःस्यात् सूद्यति सूदयतिवा षूद क्षरणे सूदस्तुस्तूपवलसूपकारेचव्यंजनेपिनेतिविश्व॥ गोधाध्यक्षेगोविंदः गाविंदति विद्लृलाभे तदुक्तंविश्वे गोविंदोवासुदेवेस्यान्दवाध्यक्षेबृहस्पताविति॥

**निर्वादोजनवादेपिशादोजंबालशष्पयोः आरावेरुदितेत्रातर्य्याक्रंदोदारुणेरणे ९० स्यात्प्रसादोनुरागेपिसूदःस्याद्व्यंजनेपिच गोधाध्यक्षेपिगोविंदोहर्षेप्यामोदवन्मदः ९१ प्राधान्येराजलिंगेचवृषांगेकुकुदोस्त्रियां स्त्रीसंविज्ज्ञानसंभाषाक्रियाकाराजिनामसु ९२**

गोधस्यगोस्थानस्य अध्यक्षेगोपालादावित्यर्थ॥ हर्षेआमोदवन्मद स्यात् आमोदोगंधहर्षयोरित्युक्तत्वात् मदोरेतसिकस्तूर्यांगर्वेहर्षेभदानयोरितिविश्वः ९१ प्राधान्ये प्रधानमेवप्राधान्यतत्र राजलिंगे छत्रचामरादौवृषांगेकुकुद स्त्रियां कस्कुत्वकोति कुशब्दे क्विप् तुक् पृषोदरादिः ज्ञानादिनामांतेषु पंचसु संवित् स्त्रीस्यात् संवेदन संविद्यतेनयावा विदज्ञानेविदन्वेतनादौच संपदादिः क्रियायाः कारोनियम पणबंधोवा आजिर्युद्धं अन्यत्सुगमं तदुक्तं हेमे संवित्संभाषणेज्ञानेसंयमेनाम्नितोषणे क्रियाकारेप्रतिज्ञायांसंकेताचारयोरपीति॥ संवित्स्त्रियांप्रतिज्ञायामाचारेज्ञानसंगरे संभाषणेक्रियाकारेसंकेतेनाम्नितोषणेइतिविश्वस्य ९२

धर्मरहसि उपनिषत्स्यात् उपनिषदन उपनिषीदति श्रेयोस्यात्वा षद्लृविशरणादौ सपदादि तदुक्तमेदिन्या भवेदुपनिषद्धर्मेवेदान्तेविजनेस्त्रियामिति ॥ कृतीव
त्सरेशरत्स्यात् शृणाति शृहिंसाया आदिप्रत्यय शरत्स्त्री व्यवसितादिवस्तुतेषुषट्सुपदेषु पदस्यात् पद्यति पद्यते पदस्थैर्ये पदगतौवा पचाद्यच् भाव
कर्मकरणेषुघञ् तदुक्तंहैमे पदस्थानेविभक्त्यन्तेशब्देवाक्यौकवस्तुनो त्राणेपदेपादचिन्हेव्यवसायापदेशयोरिति १३ सेविते गोसेवितप्रदेशोमानेखुरमा-
ने गौष्पदस्यात् गावःपद्यन्तेस्मिन्देशे गोःपदतन्मात्रस्वेत्र प्रतिष्ठाकृत्यंआस्पदस्यात् आपद्यतेस्मिन् आस्पदप्रतिष्ठायामितिसाधु प्रतिष्ठास्थानकृत्यकार्य

धर्मेरहस्युपनिषत्स्यादृतौवत्सरेशरत् पदव्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु १३ गोष्पदंसेवितेमानेप्रतिष्ठाकृत्य
मास्पदं त्रिष्विष्टमधुरौस्वादूमृदूचातीक्ष्णकोमलौ १४ मूढाल्पापटुनिर्भाग्यामन्दाः स्युर्द्वौतुशारदौ प्रत्यग्राप्रतिभौ
विद्वत्सुप्रगल्भौविशारदौ १५ इतिदाता.

इत.परनर्गसमाप्तेर्दानास्त्रीषु इष्टमधुरौस्वादु स्वदआस्वादनेउण् तदुक्तंविश्वे स्वादुमिष्ट-
मनोज्ञयोरिति इष्टोमनोहरइत्यर्थः ॥ अतीक्ष्णकोमलौ मृदूस्यात्वा म्रदमर्दने कुत्सम्प्रसारण तदुक्तंविश्वे मृदु स्यात्कोमलेस्वरइति १४ मूढाल्पापटुनिर्भाग्याः
एतेमन्दा स्यु मदीहर्षे मदिस्तत्स्यादौवा पर्यायानाह मूर्ख असमर्थ भाग्यहीन मत्ययाप्रतिभौ अभिनवाप्रगल्भौ एतौद्वौतुशारदौ साधिवेलेत्यण् तदु
क्तंविश्वे शारदोहेस्त्रियातोयेपिप्पलीसप्तपर्णयो सस्येक्लीवशरज्जातनूतनाप्रतिमेत्रिष्विति ॥ विद्वत्सुप्रगल्भौविशारदौस्त्त विशिष्टोविपरीतोवाशार-
द विशारद पण्डितइत्यर्थः विशारदोबुधेधृष्टइतिहेम १५ इतिदाता ॥

तृ

न्यामः वटश्चन्यग्रोधोस्त. न्यक्रुणद्धि रुधिरआवरणे कर्मण्यण् तदुक्तंविश्वे न्यग्रोधोव्यामवटयोर्न्यग्रोधश्चशमीतराविति ॥ व्याम.प्रसारितकुंडलाकारभुजद्वय
मित्यर्थ ॥ कायेउन्नति उत्सेधः पर्याहारः परित. आन्हियतेअनेन उभयतोबद्धशिक्यस्कंधवात्यंकावडीतिरन्यातमित्यर्थ.॥ मार्ग· पंथा. एतौविविधसंज्ञकौस्याता
विविधः वधःहननंगमनंवा अनेनना मादिष्योधातुइतिराधु अन्येषामितिदीर्घः तदुक्तंविश्वे विवधोवीवधश्चापिपर्याहारेध्वभारयोरिति ॥ यज्ञियतरोः पलाशादिकस्य
शाखायांसमिधियाउपसूर्यकेसूर्यसमीपेपरिमंडलइत्यर्थ·॥ परिधिः परिधीयते डुधाञ् उपसर्गेघो किः बंधकंव्यसन आपत्ति· चेतःपीडा अधिष्ठान अध्यासनं ए

**व्यामोवटश्चन्यग्रोधाउत्सेधःकायउन्नतिः पर्याहारश्चमार्गश्चविवधोवीवधौचतौ १६ परिधिर्यज्ञियतरोःशाखायामुपसूर्य
के बंधकेव्यसनंचेतःपीडाधिष्ठानमाधयः १७ स्युःसमर्थननीवाकनियमाश्चसमाधयः दोषोत्पादेनुबंधःस्यात्प्रकृत्यादि
विनश्वरे १८**

तेआधयः आधिशब्दवाच्या.स्युः तदुक्तंविश्वे आधिःपुमांश्चित्तपीडाप्रत्याशाबंधकेपिच व्यसनेचाप्यधिष्ठानेइति ॥ आधान अ
नेन अस्मिन्वा अधिकरणेकरणेकिः उत्तमर्णसह्यनिकृपाभुक्तिपर्यंतंविश्वासाययन्निक्षिप्यते.तद्बंधकमित्यर्थ १७ समर्थननीवाकनियमा.समाधयःस्युः
पर्यायागाह चोद्यपरिहारः वचनाभावः मूल्योत्कर्षार्थधान्यादिसंग्रहोवा ॥ अंगीकार. समाधानंअनेनवा भावेकरणेवाकिः तदुक्तंरभसे समाधिर्ध्याननीवा
कनियमेष्वसमर्थनइति ॥ दोषोत्पादे प्रकृत्यादिः विनश्वरेप्रकृत्यादिषु प्रकृतिप्रत्ययागमादेशेषु यत् विनश्वरं इत्संज्ञालोपाभ्यामदर्शनशीलमक्षरंतस्मिन्अ
नुबंधःस्यात् अनुबध्यते बधबंधने घञ् अकर्तरीतिशास्त्रेणाकर्मणीतिभावः १८

मुख्यानुयायिनि मुख्यपित्रादिक अनुयातीतितस्मिन्शिशौ प्रकृतस्य आरब्धस्य अनुवर्तने निवर्त्तने सएवस्यात् तदुक्तमेदिन्या कलुबधीतुहिकरयातृच्छायामपियो पिति विनयकेरमण्डलादे प्रकृतस्यानिवर्त्तने मुख्यानुयायीबालेनदोषस्योत्सादनेपुमानिति ॥ विष्णौ चन्द्रमसि विधुः विध्यतिविरहिणं व्यधताडने कुपत्ययेकमसार ण विधुःशशांकेकर्पूरेहृषीकेशेचराक्षसइतिविश्वः ॥ परिच्छेदे सीम्नी बिले अवधि अवधान उपसर्गेघ कि अवधिस्त्ववधानेस्यात्सीम्निकाले — बिलेपुमानितिविश्वः ९९ विधाने कर्तव्ये दैवेभाग्यकर्मणि अपिशब्दात् परमेष्ठिनि विधि भावेथवाकरणेकि तदुक्तमेदिन्या विधिर्नानियतोकालेविधानेप

मुख्यानुयायिनिशिशौप्रकृतस्यानुवर्त्तने विधुर्विष्णौचन्द्रमसिपरिच्छेदेबिलेऽवधि ९९ विधिर्विधानेदैवेपिप्रणिधि:प्रा र्थनेचरे बुधवृद्धौपण्डितेपिस्कंधःसमुदयेपिच १०० देशेनदविशेषेब्धौसिन्धुर्नासरितिस्त्रियां विधाविधौप्रकारेचसाधूर म्येपिचत्रिषु १०१ रमेष्ठिनीति ॥ विधानअनेनवा प्रार्थने चरे प्रणिधि स्यात् प्रणिधान प्रणिधीयतेवा अत्रापिकि प्रणिधिःप्रार्थनेचरेइत्युक्तत्वात् ॥ प्रणि धिरवधानेपिबुधवृद्धो एतौ धातौ शब्दौ पण्डितेपिस्याता बुध्यते बुधअवगमने इगुपेतिक तदुक्तंविश्वे बुधःकवौरोहिणेयइति ॥ वर्द्धतेस्म वृधुवृद्धौ गत्यर्थेतिक्त तदुक्तंविश्वे वृद्धोजीर्णेप्रवृद्धेभिषुक्तोपलक्षणेइति ॥ अपिशब्दात्सौम्येस्थविरेच समुदयेसमूहेपिस्कंध स्यात् कधिरोहयानि पारस्कारादि तदुक्तंविश्वे स्कंधः स्यान्नृपतौ व्यूहेसम्परायसमूहयोः कायेतरुप्रकांडेच भद्राद्यावितिति ॥ तदुक्तंहैमे स्कन्धःप्रकांडेकायेंऽसेविज्ञानादिषुपंचसु नृपेसमूहेचेति १०० देशेनदविशेषेअ ब्धौसिंधुःस्यात् पुंसि सरितिस्त्रियां सएवस्यात् स्यंदते स्यंदप्रस्रवणे उप्रत्ययेसंप्रसारणधादेशाश्च तदुक्तंविश्वे सिंधुःसमुद्रेनद्यांचनदेदेशोपसदनयोरिति ॥

विधोविधानेप्रकारेच विधास्यात् विधानडुधाञ् आतइत्यङ् यथाहिविधंकिंविधमित्याद्यूह्यं रम्येपिसाधु.स्यात् त्रिषुसाध्नोति साधसंसिद्धौ उण् तदुक्तंविश्वे साधुर्वार्धुषिकेचारेसज्जनेचाभिधेयवदिति १०१ जायाभार्यास्यात् स्नुषापुत्रस्यपत्नीस्यात् स्त्रीमात्रेचवधूःस्यात् वहति वहप्रापणे वहोधश्चेत्यूः वधूः स्नु
॰षोदारस्त्रीभार्यास्पृक्कांगनासुचेतिविश्वात् ॥ सर्वत्रापि सम. लेपः चूर्णविशेषः सुधास्यात् सुष्ठुधीयते डुधाञ् आतइत्यङ् सुधागंगेष्टकाचूर्णस्नुहीचामृत
॰र्वयो· इत्यजय ॥ तदेवोक्तंमंजर्यां सुधाप्रासादभाक्द्रव्यंसुधाविद्यत्सुधामृतं सुधाहिभोजनज्ञेयंसुधाधात्रीसुधास्नुहीति ॥ लिप्यतेअनेनेतिदेवालय

वधूर्जायास्नुषास्त्रीचसुधालेपोमृतंस्नुहि संधाप्रतिज्ञामर्यादाश्रद्धासंप्रत्ययःस्पृहा २ मध्वमद्येपुष्परसेक्षौद्रेप्यंधं तमस्यपि अतस्त्रिषुसमुन्नद्धोपंडितमन्यगर्वितौ ३ ब्रह्मबंधुरधिक्षेपेनिर्देशेथावलंबितः

मित्यर्थ. करणेघञ् अमृतंस्नुहीस्यात् प्रतिज्ञास्वीकार. संधा आतइत्यङ् मर्यादाश्रद्धासंप्रत्यय· आदरःस्पृहा कांक्षा १०२ मद्येपुष्परसेक्षौद्रेमाक्षिकेमधु
॰त्तेति ॥ तदुक्तंविश्वे मधुक्षौद्रेजलेक्षीरेमद्येपुष्परसेमधु दैत्येचैत्रेवसंतेचजीवाशोकेमधुद्रुमइति ॥ तमस्यपिअंधंस्यात् अंधयति अंधदृष्ट्युपघाते प
चाद्यच् अंधस्तुतिमिरेक्लीबंचक्षुर्हीनेभिधेयवदितिविश्व ॥ अत.परेधांतवर्गपर्यंतास्त्रिषुस्युः ॥ पंडितंमन्यगर्वितौ समुन्नद्धौ समुन्नह्यतेस्म णहबंधने आ
॰ डितमन्यनेसौ तदुक्तंविश्वे समुन्नद्ध.समुन्नूतेपडितमन्यदृप्तयोरिति ३ अधिक्षेपेनिर्देशेब्रह्मबंधु· ब्रह्मैवब्राह्मणः जाति. बंधुरस्य निंदापरत्वा
त् हे ब्रह्मबंधोदुष्टोसीति प्रयोगोपि तदुक्तंविश्वे ब्रह्मबंधुरधिक्षेपेनिर्देशेचद्विजन्मनामिति ॥ अवलंबित. आश्रितः अपिशब्दात्बद्धोपि ॥

अविदूरश्च संनिहितश्च अवष्टब्धः अवष्टभ्यतेस्म छभिस्तंभे स्तम्भुरोधनेवा प्रत्ययेअवाच्चेतिष तदुक्तंमेदिन्या अवष्टब्धोविदूरेस्यादाक्रान्तेचावलंबित इति॥ख्यातभूषितौ प्रसिद्धोस्त्र प्रसिद्ध्यति प्रसिध्यतेस्मवा षिधुसंराद्धौगत्यावा कर्तरिकर्मणिवाक्तः ५ इतियाता सूर्यवन्ही चित्रभानुस्त्र चित्रभानवोरश्मयोयस्य रश्मिर्दिवाकरोभानुः भाति भाद्धीप्तौ दाभाभ्यानु धातुर्देहोभूतात्मानौस्तः भूतानांआत्मा भूतानिआत्मास्वभावोस्यवा॥मूर्खनीचौ पृथग्जनौ पृथक्कार्येजनः शाकपार्थिवादि ५ शैलपाषाणौ ग्रावाणौ ग्रसते ग्रसुअदने ग्रम्मासोआवाच आवननिवनसमक्तोशब्देवा शरपक्षि-

अविदूरोप्यवष्टब्धःप्रसिद्धौख्यातभूषितौ ५ इतियाता सूर्यवन्ही चित्रभानू भानुरश्मिदिवाकरौ भूतात्मानौधातृदेहौमूर्खनीचौपृथग्जनौ ५ ग्रावाणौशैलपाषाणौपत्रिणौशरपक्षिणौ तरुशैलौशिखरिणौशिखिनौवन्हिबर्हिणौ ६ प्रतियत्नाबुभौलिप्सोपग्रहावथसादिनौ द्वौसारथिहयारोहौवाजिनोश्वेषुपक्षिणः ७ णौपत्रिणौ पत्राणिसन्त्यस्य मत्वर्थेइनि विश्वे पत्रीरथेनेरथेकाडेखगवृरथिकाद्रिषुति॥ तरुशैलौशिखरिणौ शिखरमस्तियस्य वन्हिबर्हिणौ शिखिनौस्त शिखा सत्यस्य अतइनि तदुक्तं शिखीवन्हौबलीवर्देशरेदेतुग्रहेद्रुमे मयूरेकुक्कुटेपुंसिशिखावव्यन्यलिंगकेइति ६ लिप्सोपग्रहौ वाछानुकूल्ने उभौप्रतियत्नौस्त यजयाचेतिनङ् तदुक्तंमेदिन्यां प्रतियत्नस्तुसंस्कारेलिप्सोपग्रहणेषुचेति॥सारथिहयारोहौद्वौसादिनौ अवश्यसीदति सादयतिवा षद्लृविशरणादौ नंदिग्रहीतिणिनि तदुक्तंहैमे सादीतुरगमारोहेनिषादिरथिनोरपीति॥ अश्वेषुपक्षिणः वाजिनः वाजाः पक्षाः सन्त्यस्य ७

कुले जन्मभूम्यानजननस्थाने अभिजनः अभिजायतेऽस्मिन् हलश्चेतिघञ् अभिजनःकुलेऽख्यातोजन्मभूम्यांकुलध्वजइतिविश्वः ॥ वर्षार्चिर्व्रीहिभेदाः हायनाः जहाति जिहीतेवा हलश्चेतिण्युट् अब्दरश्मिपर्यायौ तदुक्तंमेदिन्यां हायनोनस्त्रियांवर्षेपुंस्यर्चिर्व्रीहिभेदयोरिति ॥ व्रीहिभेद षाष्टिकइत्यर्थः चन्द्राग्न्यर्काः विरोचनाः विरोचते रुचिदीप्तौ अनुदात्तेतिश्चयुच् प्रह्लादतनयोऽपि ८ केशेवृजिन वृज्यते वृजीवर्जने वृजे किच्चेतिनन् अपिशब्दात्कल्मषेक्लीब तदुक्तंहैमे वृजिनःकेशेवृजिनमुग्रे धेरक्तचर्मणीति ॥ वृजिनकल्मषेक्लीबकेशेनाकुटिलेत्रिष्विति रभसश्च ॥ अर्कसुरशिल्पिनो विश्वकर्मा विश्वंकर्मास्मादस्येतिवा विश्वकर्मासहस्रांशोमुनिभिदेवशिल्पिनोरितिमेदिन्या ॥ यत्नादिवर्ष्मान्तेषुषट्स्वपदेषु आत्माशब्द स्यात् अतति अतसातत्यगमने मनिन् तदुक्तंधरण्या आत्माकलेवरेयत्नेस्वभावेपरमा

कुलेऽप्यभिजनोजन्मभूम्यामप्यथहायनाः वर्षार्चिर्व्रीहिभेदाश्चचंद्राग्न्यर्काविरोचनाः ८ केशेपिवृजिनोविश्वकर्मार्कसुर शिल्पिनोः आत्मायत्नोधृतिर्बुद्धिःस्वभावोब्रह्मवर्ष्मच ९ शक्रोघातुकमत्तेभोवर्षुकाब्दोघनाघनः घनोमेघेमूर्त्तिगुणेत्रिषुमूर्त्ते निरंतरे १० अभिमानोर्थादिदर्पेज्ञानेप्रणयहिंसयोः इनःसूर्येप्रभौराजामृगांकेक्षत्रियेनृपे ११ त्मनि निरोधृतोचबुद्धोचपरव्यावर्त्तनेपिचेति

९ घातुकमत्तेभः शक्रःस्यात् हन्ति हनहिंसागत्योः उकञ् घातुकश्चासौमत्तेभश्च वर्षुकाब्दा घनाघन पचाद्यच्गणवचनेनसाधु अन्योन्यघट्टनेचैवघातुकेचघनाघ नइतिधरणि ॥ अर्थादिदर्पे ज्ञानेप्रणयहिंसयो अभिमान अभिमननं मनज्ञाने मीञ्हिंसायां आदिशब्दात्कुलरूपगुणादिग्रहः १० मेघेमूर्तिगुणेकाठिन्येचघन स्यात् पुंसि मूर्तेकठिणेनिरंतरेसान्द्रेचत्रिषुस्यात् तदुक्तंधरण्या घनसान्द्रघनवाद्यघनोमुस्तोघनोम्बुद घन काठिन्यसंघातेविस्तरेलोहमुद्गरेचेति ॥ मूर्तोघनइतिसाधु सूर्येप्र भौइन एतिईयतेवा मृगांकेचन्द्रेक्षत्रियेनृपेच राजा राजति राजृदीप्तौ कनिन् राजाप्रभौचनृपतौक्षत्रियेरजनीपतौ यक्षेशक्रेचपुंसिस्यादितिमेदिनी ११

नर्तकीदूत्यौ वाणिन्यौस्त अवश्यवणति वणशब्दे आवश्यकेतिणाइत्तिवाणिनि वाणिनीनर्त्तकीमत्ताविदग्धावनितासुचेतिमेदिनी ॥ स्रवन्त्यांवाहिनीस्यात् अपिशब्दात्सेनायामपिवहति ग्रत्यादित्वाण्णिनि. तदुक्तविश्वे वाहिनीस्यात्तरगिण्यासेनासैन्यप्रभेदयोरिति ॥ वज्रतडितौ ह्लादिन्यौस्त ह्लादतेवश्य ह्लादतेअव्यक्तेशब्दे आवश्यकेणिनिः इस्तेअपिशब्दात्विजातीयप्ररोहेच वदात्याकामिनीस्यात् आवश्यकाम्यते कमुकान्तौ णिनिः पूर्ववत् कामिनीभीरुवदयोरिस्युक्तत्वात् ॥ योषिन्मात्रेविलासिन्यामपिवदाकामिन्यामपि १२ त्वग्देहयोरपितनु तनोति तन्यतेवा तनुविस्तारे उप्रत्यय तदुक्तमेदिन्या तनुःकायेत्वचिस्त्रीस्य

वाणिन्यौनर्तकीदूत्यौस्रवन्त्यामपिवाहिनी ह्लादिन्यौवज्रतडितौवदायामपिकामिनी १२ त्वग्देहयोरपितनु सूनाधोजिह्विकापिच क्रतुविस्तारयोरस्त्रीवितानन्त्रिषुतुच्छके १३ मदेथकेतनकृत्येकेतावुपनिमन्त्रणे वेदस्तत्वतपोब्रह्मब्रह्माविप्र प्रजापति १४

त्रिस्वल्पेविरलेकृशाइति ॥ अधोजिह्विकास्त्रीस्यात् सवनसूयतेवा सूप्राणिगर्भविमोचनेक्तेनत्वं तदुक्तमेदिन्या सूनापुत्र्यावधस्थानेगलकाठिकारपिइति ॥ क्रतुविस्तारयो तुच्छकेच शून्ये मंदे वितानन्त्रिषुस्यात् वितनन वितन्यतेवा उभयत्रघञ् वितानोयज्ञविस्तारोल्लोचेषुक्रतुकर्मणि इत्तभेदावसरयोर्वितानतुच्छमदयोरितिविश्व ॥ तदुक्तचमेदिन्या वितानोयज्ञउल्लोचेविस्तारपुनपुंसक क्लीबवृत्तविशेषेस्यात्त्रिलिंगोमदतुच्छयोरिति १२ कृत्येकेतोध्वजेउपनिमन्त्रणेकेतनस्यात् कितेर्भावादेल्युट् तदुक्तहैमे केतनतुध्वजेकार्येनिमन्त्रणनिवासयोरिति ॥ वेद तत्त्वेतन्त्यं तपःब्रह्म स्यात् बंहति शाद्वणचीमनिन् तदुक्तमेदिन्या ब्रह्मतत्वतपोवेदेनद्वयो पुंसिवेधसि ऋत्विग्योगविदोर्विप्रेइति ॥ विप्रप्रजापतयोः ब्रह्मा १५

उत्साहनेहिंसायांसूचनेचगंधनंस्यात् गंधअर्दने भावादौल्युट् तदुक्तविश्वे गंधनंसूचनोत्साहहिंसनेषुप्रकाशनइति ॥ प्रतीवाप दुग्धादौद्रव्यादिभावार्थतक्रादिप्र-
क्षेप. जवनंवेग आप्यायनंतर्पणं एतदर्थकमातंचन ल्युट् १५ लांछनेश्मश्रुनिषानावयवेषुव्यंजनंस्यात् निषानंतेमनमित्यर्थः व्यज्यतेनेनवा ल्युट् तदुक्तंमेदिन्या
व्यंजनंतेमनेचिन्हेश्मश्रुण्यवयवेपिचेति ॥ लोकवादेपशवहिपक्षिणाद्युत्केकौलीनंस्यात् कुलीनस्यकर्मभावोवा युवादयण् तदुक्तंधरिण्यां कौलीनंपशुभिर्युद्धेकुलीन
त्वापवादयोरिति १६ निःसरणेबहिर्गमने वनभेदेउपवनेप्रयोजनेच उद्यानस्यात उद्यात्यनेनास्मिन् यामापणे करणेधिकरणेल्युट् उद्यानवनभेदेस्यान्निःसृतौचप्र

उत्साहनेचहिंसायांसूचनेचापिगंधनं आतंचनंप्रतीवापजवनाप्यायनार्थक १५ व्यंजनंलांछनंश्मश्रुनिषानावयवेष्वपि स्या
कौलीनंलोकवादेयुद्धेपशवहिपक्षिणां १६ स्यादुद्यानंनिःसरणेवनभेदेप्रयोजने अवकाशेस्थितौस्थानंक्रीडादावपिदेवनं १७
उत्थानंपौरुषेतंत्रेसन्निविष्टोद्गमेपिच व्युत्थानंप्रतिरोधेचविरोधाचरणेपिच १८ योजनइतिधरणि ॥ अवकाशेस्थितौस्थानंस्यात् स्थीय

तेत्र अधिकरणेल्युट् तदुक्तंमेदिन्या स्थानंसादृश्येवकाशेस्थितौवृद्धिक्षयेतरेइति ॥ क्रीडादौदेवनस्यात् दीव्यतेनेनेति भावादौल्युट् अनादेश तदुक्तंविश्वे देवनंव्य
वहारेस्याज्जिगीषाक्रीडयोरपि अक्षेषुदेवन प्रोक्तइति १७ पौरुषेतंत्रे सन्निविष्टोद्गमे उत्थानंस्यात् उत्पूर्वात्स्थाधातोल्युट् तदुक्तमेदिन्या उत्थानमुद्यमेतंत्रेपौरुषेपु
स्तकेरणे प्रांगणोद्गमहर्षेषुमलरोगेपिनद्ययोरिति ॥ तंत्रकुटुंबकृत्येस्यात्सिद्धांतेचौषधोत्तमे प्रधानेतंतुवायेचशास्त्रभेदेपरिच्छदे श्रुतिशास्त्रांतरेहेतावुभयार्थ
प्रयोजनेइतिविश्व ॥ स्वतंत्रताचउत्थानमितित्रिकांडशेष ॥ सन्निविष्टस्योद्गमेऊर्ध्वीभवनेविरोधाचरणे प्रतिरोधेतिरस्कारे व्युत्थानंअपिशब्दात् स्वातंत्र्यकृत्येपि
विरुद्धमुत्थानं प्रादयतिसमास १८

को

मारणाद्यानुव्रज्यातेष्वपदेशुसाधनस्यात् साध्नोतेर्भावादौल्युट् निर्वर्त्तन अर्थनिष्पादन उपकरण साधनसामग्री तदुक्तमेदिन्या साधनमृतसंस्कारेसैन्येसि
द्धौषधेगतौ निर्वर्त्तनोपायमेढ्रदापनेष्वनुगमेधनेइति ॥ अनुव्रज्या अनुगमनमित्यर्थ उपायेपि १९ वैरशुद्धौदानेन्यासार्पणे निर्यातनेस्यात् यतधातोर्ण्यन्ता
त् भावादौल्युट् निक्षिप्तद्रव्यस्यार्पणइत्यर्थ विपदिभ्रंशेस्थानच्युत्यापतनेवा व्यसनस्यात् विपूर्वादस्यतेर्भावादौल्युट् कामजे कोपजे दोषेतदेवस्यात्
तदुक्तमेदिन्या व्यसनत्वशुभेशक्तौपानस्त्रीमृगयादिषु दैवानिष्टफलेपापेविपत्तौनिष्फलोद्यमइति ॥ कामजदोष मृगयाक्षपानादौकोपजस्तुवाक्पारु-

मारणेमृतसंस्कारेगतौद्रव्योपपादने निर्वर्त्तनोपकरणानुव्रज्यासुचसाधनं १९ निर्यातनंवैरशुद्धौदानेन्यासार्पणेपि
च व्यसनंविपदिभ्रंशेदोषेकामजकोपजे २० पक्ष्माक्षिलोम्निकिंजल्केतन्त्वाद्यंशेप्यणीयसि तिथिभेदेक्षणेपर्व
वर्त्मनेत्रच्छदेध्वनि २१

ष्यदंडपारुष्यार्थदूषणादौ अक्षिलोम्निकिंजल्केतन्त्वाद्यंशेसूत्रादिसूक्ष्मांशेअणीयसी पक्ष्मस्यात् नातञ्च २० पक्ष्यतेनेनवा पक्षपरिग्रहे कर्मकरणादौ
मनिन् तदुक्तविश्वे पक्ष्मसूत्रादिसूक्ष्मांशेकिंजल्केनेत्रलोमनीति ॥ तिथिभेदेक्षणेउत्सवेपर्व पर्वति पर्व्यतेवा पर्वपूरणे बाहुलकात्कनिन् तदुक्तर्धा
पर्वस्यादुत्सवेग्रंथेप्रस्तावेविषुवादिषु दर्शप्रतिपदोः संधौस्यात्तिथेः पञ्चकान्तरइति पर्वप्रस्तावोत्सवयोर्ग्रंथेविषुवदादिषु दर्शप्रतिपत्संधौचतिथिप्रभवावि
शेषयोरितिहेमश्च ॥ नेत्रच्छदे नेत्राच्छादकचर्मपुटे अध्वनिपथ्ये वर्त्मनि वर्त्ततेनेनास्मिन्वा वृतुवर्त्तनेमनिन् २१

अकार्यगुह्ये अकरणार्हे उपस्थे कौपीनेस्तः कूपपतनमर्हति कौपीनं पापं तत्साधनत्वात् तद्वत् गोप्य कौपीनं स्यादकार्येपि चीरगुह्यप्रदेशयोरिति विश्वः ॥ वस्त्रभेदेपि त्वात्पुल्लिंगमपि तदाच्छादनत्वात् वस्त्रमपि संगतो भार्यादिसंबंधे रते क्रीडायां मैथुनं स्यात् मिथुनमेव मिथुनस्येदं वा तस्येदं संबंधे स्त्री रते युग्मे राशौ मिथुनमित्यनड नित्याडि. ॥ परमात्माधी· प्रधानं स्यात् प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि प्रज्ञायामपि च क्लीबमेकत्वेद्यूत्तगइतिमेदिनी ॥ प्रकृति प्रज्ञा धने प्रधीयते अनेनास्मिन् वा कर्तृकरणादेल्युट् बुद्धिचिन्हयो· प्रज्ञानं स्यात् प्रज्ञा प्रज्ञायते अनेन वा भावादौ ल्युट् २२ पुष्पफलयोः प्रसूनं स्यात् प्रसूयते षूञ् अभिषवे नप्रत्ययो दीर्घश्च प्रसूनं वा- च्यवज्जातेक्लीबं तु फलपुष्पयोरिति मेदिनी ॥ कुलनाशयो· निधनं कुलवंश इत्यर्थः ॥ रोदनाह्वाने क्रंदने क्रदि आह्वाने रोदने च भावे ल्युट् देहप्रमाणयोः वर्ष्म वर्षते वृष्यते-

अकार्यगुह्ये कौपीनं मैथुनं संगतौ रते प्रधानं परमात्माधीः प्रज्ञानं बुद्धिचिन्हयोः २२ प्रसूनं पुष्पफलयोर्निधनं कुलनाशयोः क्रंदने रोदनाह्वाने वर्ष्म देहप्रमाणयोः २३ गृहदेहत्विट्प्रभावा धामान्यथ चतुष्पथे सन्निवेशे च संस्थानं लक्ष्म चिन्हप्रधानयोः २४ आच्छादने संपिधानमपिवारणमित्युभे

वा वृषु सेचने मनिन् तदुक्तं मेदिन्या वर्ष्म देहप्रमाणानि स्कदराकृतिषु स्मृतमिति २३ गृहदेहत्विट् प्रभावा इत्येतानि चत्वारि धामशब्दसंज्ञकानि दधाति धीयते वा डुधाञ् मनिन् तदुक्तं धरण्या धामशक्तो प्रभावे च तेजो मंदिरजन्मास्विति स्थानरश्मौ गृहे देहे स्थाने जन्मप्रभावयोरिति हे मश्च चतुष्पथे सन्निवेशे शृंगाटके अवयवविभागे संस्थानं स्यात् भावादौ ल्युट् संस्थानं त्वाकृतौ स्मृतावित्युक्तत्वात् चिन्हप्रधानयो. लक्ष्म लक्ष्यते अनेन वा लक्ष्य दर्शने कर्मादौ मनिन् २४ संपिधानापवारणे तिरोधानवस्त्रादिपरिहृति एते उभे आच्छादनवाचके आच्छाद्यते अनेन छद अपवारणे चुरादि भावादौ ल्युट् आच्छादनं संपिधाने वस्त्रे पटत्विमात्रक इति धरणि·

साधनेनिष्पादने अवाप्तौलाभे तोषणेतुष्टौ आराधनंस्यात् आराध्यतेनेन राधसंसिद्धौ भागवत् २५ चक्राद्याध्यासनांतेषु अधिष्ठानंस्यात् अधिष्ठीयतेननवा
निष्ठते भावादौल्युट् अधिष्ठानरथस्यांगेप्रभावेध्यासनेपुरइत्यजय स्वजातिश्रेष्ठेरत्नं रमयति रमक्रीडायां रमेस्तन्नतिसाधु रमतेस्मिन्वा तदुक्तंमेदिन्यां र
त्नंस्वजातिश्रेष्ठेपिमणावपिनपुंसकमिति सलिलकानने एतेउभेवनेस्त वन्यतेवनसंभक्तौ पचाद्यचनेवा घमिसंज्ञापूर्वकत्वान्नवृद्धि तदुक्तंरभसे क्लीबस्यात्का
ननेनीरेनिलयेवनमिति वनंप्रस्रवणेगेहेप्रवाहेंभसिकाननइतिहैमश्च २६ विरलेसांतरे स्तोकेऽल्पेतलिनं तदुक्तंविश्वे तलिनंविरलेस्तोकेस्वच्छेपिवाच्यलिंगकमि-
ति तलति तल्यतेवा तलप्रतिष्ठायां भिनन् तथातलिनवदुत्तरे आनांतात् वाच्यलिंगकाः सत्समैके समानाः स्युः सन् अर्हः समः तुल्यः एकश्च एतेसमानशब्द

आराधनसाधनेस्यादवासौतोषणेपिच २५ अधिष्ठानंचक्रपुरप्रभावाध्यासनेष्वपि रत्नंस्वजातिश्रेष्ठेपिवनेसलिलकानने
२६ तलिनंविरलेस्तोकेवाच्यलिंगतयोत्तरे समानाःसत्समैकेस्युः पिशुनौखलसूचकौ २७ हीनन्यूनावूनगर्ह्यौवेगिशूरौ
तरस्विनौ अभिपन्नोपराद्धोभिग्रस्तव्यापद्गतावपि २८

वाचकास्युरित्यर्थः यथाएकोदरौसमानोदरौ समतिधर्मवैक्लव्ये चानश् समानस-
त्समेकेष्विवक्तृत्वात् मानेनसहइतिवा खलसूचकौ दुर्जनकर्णजपौ उभौपिशुनौ पिशति पिशिअवयवे उनन्सचकित् पिशुनंकुंकुमस्पृक्तं कपिवक्त्रेचकाकेनाप्य
चक्रक्रूरयोस्त्रिषुचेतिमेदिनी पृक्कायांपिशुनास्त्रीस्यादिति २७ ऊनगर्ह्यौअल्पनिंद्यौ हीनन्यूनौस्तः तच्छब्दवाच्यौइत्यर्थः जहाति हीयतेस्मवा आदिकर्मणिक
र्मणिवाक्तः नत्वं न्यूनयति न्यूयतेस्मवा ऊनपरिहाणे अचुपचन्वा वेगिशूरौतरस्विनौस्तः अस्त्यतिविनितरोबलंजवोस्यास्ती सस्यपदकार्येनतसौमत्वर्थेइतिमत्वा
त् अपराद्धे अपराधवति अभिग्रस्तेशत्रुणाव्यापद्गतोजातविपत्के अभिपन्नंस्यात् अभिपद्यतेस्म पदगतौगत्यर्थेतिक्तः कर्मणिवानिष्ठानत्वं तदुक्तंविश्वे अभिप

न्नोपरान्हे: भिद्गुतेस्त्रस्तेविपक्षनइति २८ इतिनांना· ॥ भूषणे बर्हे तूणीरे सहतौसमुदाये कलापोवर्तते कलामाप्नोति आप्लृव्याप्तौ कर्मण्यण् कलाआप्यतेनेनवा घञ् तदुक्तमजये कलापःसंहतौबर्हेकाञ्च्याभूषणतूणयोरिति परिच्छदेपटमंडपाद्युपकरणे पर्युप्तौसर्वतोवपने डुवपबीजसंताने सलिलस्थितौजलाधारे परीवापः परिवपन अनेनात्रवा भावादौघञ् उपेतिदीर्घ. २९ गोधुग् गोष्ठपतीगोपौस्यातां गांदोग्धीति क्विप् तदुक्तंविश्वे गोपोग्रामौधगोष्ठाधिकृतयोर्बल्लवेनृपइति गांपाति पार क्षणे आतइतिक हरविष्णू वृषाकपीतत्संज्ञकौस्यातां वृषंधर्मनकंपयति कपिकिंचिच्चलने अहिकप्योर्नलोपश्चेतिसाधु. वृषान्कर्मदाकंपयतिदुष्टानितिवा यद्वा वर्षतिका

इतिनांना: कलापोभूषणेबर्हेतूणीरेसंहतावपि परिच्छेदेपरीवापःपर्युप्तौसलिलस्थितौ २९ गोधुग्गोष्ठपतीगोपौहरविष्णूवृषाक पी बाष्पमूष्माश्रुकशिपुलन्नामाच्छादनद्वय ३० तल्पंशय्यादृदारेषुस्तबेपिविटपोस्त्रियां भासरूपस्वरूपाभिरूपः

मान् वृषुसेचने इगुपेतिक. आकंपयतिपापानि इग्नत्ययेनलोप. वृषश्चासौआकपिश्च यद्वा वृषाइंद्रोनकंपतेवास्मात् अपादानेइ यद्वा वृषइंद्रोवृषोधर्मोनाकपिरिव व- शेऽस्य इत्याद्यूह्य तदुक्तमेदिन्यां वृषाकपिःपुमान्कृष्णेशंकरेजातवेदसि ऊष्माश्रुतप्तनेत्रोदकंबाष्प औणादिक· वायति ओवैशोषणेवातिवा वागत्यादौ अन्न भोज नं आच्छादनंवेस्त्रंएतद्वय कश्यपुस्यात् कष्टेडुःखंसृगव्यादि. तदुक्तविश्वे एकोक्त्याकशिपुर्भक्त्याछादनेचद्वयो पृथगिति वक्ष्यमाणभास्त्रियामितिकशिपुत ल्पाभ्यामितिसंबध्यते ३० शय्यादृदारेषु शय्याटालिकास्त्रीषुतल्पस्यात् तल्पतेस्मिन् तलप्रतिष्ठायां शाकटायनेनसाधित. स्तबेयवसादिस्तबके विटप वेटति विट्यतेवा विटआक्रोशेशब्देच तदुक्तंविश्वे विटप·पल्लवेषिगेचिस्तारेस्तंबशाखयोरिति विटाधिपेपि भासरूपस्वरूपाभिरूपा· एतेत्रय ॥

त्रि

सुधमनोज्ञयोः वर्त्तते मामोरूप गत्यर्थेनिरुक्तः मामरूपयेनवा स्वयमेवरूपयस्य अभिरूस्यरूपअस्य अभिरूपोबुधेरम्ये ३१ अमीभेद्यलिंगा विशेष्यनिघ्नाःपूर्वा मर्शिन् कूर्मी कमठी वीणाभेद कच्छपीस्यात् कच्छपिबति रूपीविक जातेरितिङीप् कच्छेनवापाति तदुक्तंविश्वे कच्छपीवल्लकीभेदेकमठेस्त्र्यगदांतरइति इतिपाता रवर्णेराक्षरेरेफ स्यात् पुंसि कुत्सितेरेफः वाच्यलिंगक रिस्यते रिफतिवा रिफहिंसायां घञ् अच्वा ३२ इतिफाता अथववयो सावर्ण्यात् वानान्वाताश्चाह अंतराभवसत्वे जन्ममरणयोरंतरामध्ये भवसत्वनस्मिन् योणिनि अश्वेदिव्यगायनेगंधर्व गयमर्वति अर्वगतौ कर्मण्यण् कथ्वादि तदुक्तंविश्वे गंधर्वः पशुभेदे

सुधमनोज्ञयो ३१ भेद्यलिंगाअमीकूर्मीवीणाभेदश्चकच्छपी इतिपाता रवर्णेपुंसिरेफ स्यात्कुत्सितेवाच्यलिंगक ३२ इतिफाता अंतराभवसत्वेश्वेगंधर्वोदिव्यगायने कंबुर्नावलयेशंखेद्विजिह्वौसर्पसूचको ३३ पूर्वोन्यलिंग मागाह पुंबहुत्वेपिपूर्वजान् इतिवाता कुंभोघटेभमूर्धांशौडिंभौतुशिशुबालिशौ ३४ स्यात्पुंस्कोकिलतुरगयो अंतराभवसत्वेचगायनेरवेचरेपिचेति ॥ वि

श्वावस्वादीनामेवदिव्यगायनमित्यर्थः वलयेशंखेकंबुः स्यात् पुंसि कंबति कंबगतौ कुमत्ययः तदुक्तंमेदिन्यां कंबु शंखेस्त्रियांपुंसिशंबूकेवलयेगजइति सर्पसूचको द्विजिह्वौ द्वेजिह्वेयस्य ३३ पूर्वः पूर्वशब्दः प्राग्वाचक वाच्यलिंगक तदेवपूर्वोगौ पूर्वस्त्रिय यदापूर्वजान्पितामहादीनाह तदापुंबहुत्वेस्यात् पूर्वंयति पूर्वनिकेतने पचाद्यच् तदुक्तंधरण्यां पूर्वेस्युः पूर्वजाः पूर्वंज्ञातयइति प्राक्पूर्वमग्रतइत्यपि इतिवाता घटेभमूर्धांशौ कलशगजमस्तकभागौ कुंभौ कुंभ्यते कुत्सितोवाउंभति उभपूरणे कर्मण्यण् कुंभः स्यात्कुंभकर्णस्यसुतेवेश्यापतौघटे राशिभेदेद्विपांगेचेतिविश्व शिशुबालिशौ डिंभौ डिंभयति डिभिसंघाते पचाद्यच् ३४

स्थूणाजडीभावौ स्तंभौ स्तभ्नाति स्तम्भुरोधने पचाद्यच् स्थूणागृहस्तंभइत्यर्थः ब्रह्मत्रिलोचनौ शम्भू शंभवति भूसत्तायामासौवाडु. तदुक्तंहेमे शंभु पुंसिमहादेवेपरमेष्ठि-
निचार्हेति विष्णौच कुक्षिभ्रूणार्भका गर्भाः स्युः गिरति गृणातिवा गृनिगरणे गृशब्देवा भनप्रत्ययेगुण गर्भःकुक्षौशिशौसंधौभ्रूणेपनसकंटकइतिहेम भ्रूण गर्भ-
स्थजन्तुरित्यर्थः प्रणयेविश्वासादौविस्रंभः विस्रंभण विस्रभ्यतेनेनवा स्रंभुविश्वासे घञ् तदुक्तविश्वे विस्रंभ केलिकलहेविश्वासेप्रणयेवधइति परिचयप्रार्थनयोर
पिप्रणय. ३५ भेर्यांदुंदुभिःस्यात् पुंसि अक्षेदुंदुभिस्त्रिया दुंदुइतिशब्देनउभ्नाति उभपूरणे पररूप तदुक्तमेदिन्यां दुंदुभि पुमान् वरुणेदैत्यभेदेर्यांश्च अक्षाबिंदुत्रि
कद्वयइति महारजनेपुष्पभेदेक्लीबं कुसुंभस्यात् कुस्कभ्यतेअनेनवा अच् घञ्वा पृषोदरादि तदुक्तविश्वे कुसुंभहेमनिमहारजनेनाकमंडलाविति करकेकमंडलौ

**स्तंभोस्थूणाजडीभावेशंभूब्रह्मत्रिलोचनौ कुक्षिभ्रूणार्भकागर्भाविस्रंभःप्रणयेपिच ३५ स्यान्भेर्यांदुंदुभिःपुंसिस्यादक्षेदुंदुभिः**
**स्त्रियां स्यान्महारजनेक्लीबंकुसुंभंकरकेपुमान् ३६ क्षत्रियेपिचनाभिर्नासुरभिर्गविचस्त्रियां सभासंसदिसभ्येचत्रिष्वध्यक्षे**
**पिवल्लभः ३७ इतिभान्ताः**

पुमान् स्यात् येनमहारजनेनरक्तवस्त्रकौसुंभस्यादित्यर्थः ३६ क्षत्रियेपिनाभि नास्यात् तदुक्तंमेदिन्यां नाभिर्मुख्यनृपे
चक्रमध्यक्षत्रिययोःपुमान् द्वयोःप्राणिप्रतीकेस्यात्स्त्रियांकस्तूरिकामदइति प्राणिप्रतीकेशरीरेद्वयोरित्यर्थः सुरभिर्गविस्त्रियांच सुरभते रभ्यतेवा सर्वथा-
तुष्यइन् रभराभस्ये तदुक्तंचंपकेचवसंतेचतथाजातीफलेपुमान् स्वर्णेगंधोत्पलेक्लीबसुगंधिकांतयोस्त्रिष्विति संसदि सभासहभान्तियेयस्यांवा भादीप्तौसुपी
तिक. तदुक्तंरभसे स्त्रियांसामाजिकेगोष्ठ्यांद्यूतमंदिरयोःसभेति अध्यक्षे वल्लभः त्रिष्वपि वल्लते वल्ल्यतेवा वल्लसंवरणे संचरणेच रासिवल्लिइत्यभच् तदुक्तं
विश्वे वल्लभोदयिते ध्यक्षेसलक्षणतुरंगमइति ३७ इतिभान्ता

किरणप्रग्रहौरश्मीस्यातां अश्नुतेऽनेन अशू व्याप्तौ निप्रत्यये अशोरश्च तदुक्तंमेदिन्यां रश्मि पुमान्दीधितौस्यात्पक्ष्मप्रगृह्ययोरपीति अश्वादिबंधनरज्जु प्रग्रहइत्यर्थः कपिभेकौ प्लवगमौ प्लवेनप्लुत्यागच्छति गमश्चेतिखच् मुम् इच्छामनोभवौकामौ कमनकम्यतेवा कमुकान्तौ घञ् तदुक्तंविश्वे काम स्मरे च्छयोःपुमान् रेतस्यपिनिकामेचकाम्योपिस्यान्नपुंसकमिति शक्त्युद्योगौपराक्रमौ क्रमुपादविक्षेपेघञ् तदुक्तंमेदिन्यां पराक्रमस्स्यात्सामर्थ्येविक्रमोद्यो गयोरपीति ३८ सुण्यादिसोमपान्तेषुषट्सुधर्मशब्दः धरति ध्रियतेवा धृञ्धारणेमन् तदुक्तंमेदिन्यां धर्मोस्त्रीपुण्यआचारेस्वभावोपमयोः क्रतौ अहिंसोप निषन्न्यायइति तत्र यमस्तु अन्तकेपिन्यायेयथा धर्माध्यक्ष स्वभावेयथाक्रूरधर्मःआचारे धर्मशास्त्रोक्तःसोमपिबति यत्उपायपूर्वं स आरम्भ भावेघञ्

किरणप्रग्रहौरश्मीकपिभेकौप्लवगमौ इच्छामनोभवौकामौशौर्योद्योगौपराक्रमौ ३८ धर्माःपुण्ययमन्यायस्वभावाचार सोमपाः उपायपूर्वआरम्भउपधाचाप्युपक्रमः ३९ वणिक्पथःपुरंवेदोनिगमोनागरोवणिक् नैगमौद्वौबलेरामोनीलचारुसि तेत्रिषु ४०

उपधा उपक्रमःस्यात् उपक्रमणमनेनवा भावेकरणेवाघञ् तदुक्तंविश्वे उपक्रम स्यादुपधाचिकित्सारम्भविक्रमइति अमात्यशीलपरीक्षो पायउपधेत्यर्थः ३९ वणिक्पथः वाणिज्य पुरंनगरं वेद आम्नायः एतेनिगमाः निगमवाच्याः निगम्यतेऽत्रानेनवा घञ् तदुक्तंविश्वे निगमोवाणिजेपुर्याकटेवेदवणिक्प थइति नागर वणिक् एतौद्वौ नैगमौ निगमेभवः तत्रभवइत्यण् तदुक्तंविश्वे नैगमस्यादुपनिषद्वणिजोर्नागरोपिचेति नगरेभव अण् बले पुंसि नीलचारुसिते त्रिषुरामशब्दः रमतेऽनेनवा रमुक्रीडायां ज्वलितिविइतिण घञ्वा तदुक्तंविश्वे राम परशुविशेषस्याज्जामदग्न्येहलायुधे राघवेचासितश्वेतमनोज्ञेषुतुवाच्यवदि- ति बलोमकदेवइत्यर्थः ५०

शब्दादिपूर्वः ग्रामः वृंदे ग्रसते ग्रस्यतेवा ग्रसुअदने ग्रसेरात्चेति साधुः तदुक्तं विश्वे ग्रामः स्वरे संवसथे वृंदे शब्दादिपूर्वक इति यथा शब्दग्रामः क्रांतौ विक्रमणे वि-
क्रमः घञ् तदुक्तं धरणौ विक्रम शक्तिसंपत्तिः क्रांतिमात्रं च विक्रम इति स्तोत्रे अध्वरे वृंदे स्तोमः स्तूयतेऽनेनवा ष्टुञ् स्तुतौ अर्तिस्तु इति मः कुटिले अलसे जिह्मः जहा-
ति हीयतेवा जहातेः सन्वदालोपश्चेति मः ४१ उष्णो घर्मे अपिशब्दात् स्वेदांभसि च चेष्टालंकारे हावे भ्रांतौ च विभ्रम केचित् अमूलं पद्यार्धमिति गुल्मशब्द गुडमकु-
तिकः गगतः रुक्सेनास्रु कृक्प्लीहाख्यः स्तंब कुशादिगुच्छ तदुक्तं मेदिन्यां गुल्मः सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदो स्तंब इति जामि जमुअदने इण् दीर्घश्च स्वसृ
कुलस्त्रियोः स्वसा भगिनी इत्यर्थः तदुक्तं रभसे महरे संयमे यामो जामिस्वसृकुलस्त्रियोरिति यामि कुलस्त्रीस्वस्रोः स्त्रीतिकोशालरात्त्व अतस्यादिरपि यामापणे क्षि

शब्दादिपूर्वो वृंदेपि ग्रामः क्रांतौ च विक्रमः स्तोमः स्तोत्रेऽध्वरे वृंदे जिह्मस्तु कुटिलेऽलसे ४१ उष्णोपि घर्मश्चेष्टालंकारे भ्रांतौ च विभ्रमः
गुल्मा रुक्स्तंबसेनाश्च जामिः स्वसृकुलस्त्रियोः ४२ क्षितिक्षांत्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु त्रिषु श्यामौ हरित्कृष्णौ श्यामा
स्याद्गारिवा निशा ४३

तिक्षांत्योः भूमितितिक्षयोः क्षमा वर्तते क्षमणं क्षमूष सहने षिद्भ्योऽङ् क्षमते क्षम्यतेवा क्षमू सहने अच् घञ्वा क्षमा इति क्षा पृथ्वी-
चयोर्गे शक्ते हिते क्षमामिति धरणिः क्षमं शक्ते हिते त्रिषु ४२ हरित्कृष्णौ श्यामौ श्यायते श्येङ् गतौ मक् तदुक्तं मेदिन्यां श्यामो वटे प्रयागस्थ वारिदे वृद्धदारके पिके च
कृष्णा हरितो पुंसि स्यात्तद्वति त्रिषु मरीचे सिंधुलवणे क्लीबस्त्री शारिवौषधौ अप्रसूतांगनायां च प्रियंगावपि चोच्यते यमुनायां त्रियामायां कृष्णात्रित्सकोषचो नीलि
कायामिति शारिवा शातावरी निशा च श्यामा स्यात् पुच्छादिके ललते पुषट्सु ललामं स्यात् ललभमति अम गत्यादौ कर्मण्यण् तदुक्तं रुद्रे प्रधानध्वजशृंगेषु पुंड्रवाल
धिलक्ष्मसु भूषावाजिप्रभावेषु ललामं स्याल्ललामचेति बाहुलकात्कनिर्नांतोपि अश्वादीनां ललाटचित्रं पुंड्रमित्यर्थः अश्वस्येव भूषासामीप्यात् प्रधानमेव प्राधान्यं
४३

अध्यात्मसूक्ष्मस्यात् सूच्यते सूत्रैपैरन्ये सूत्रे स्मन् तदुक्तमेदिन्याः सूक्ष्मस्यात्कैतवेध्यात्मेपुंस्यणौत्रिषुचाल्पकइति आत्मन्यधिकृतलिंगदेहइत्यर्थः आद्येभ्आ
दोप्रधानेमुख्येप्रथमः स्यात् आभतत्रिभ्मिति प्रथते प्रथविस्तारे प्रथेरमच् तदुक्तविश्वे प्रथमस्त्रभवेदाद्येप्रस्थानेपिचवाच्यवदिति वल्गुप्रतीपे सुंदरविपरी
ते नामीस्यात वमति नम्यतेवा ज्वलितिइत्मिण वम् उद्गिरणे तत्उक्त वामसव्यप्रतीपेचद्रविणेचातिसुंदरे पयोधरेहरेकामेविद्याद्वामातुयोरपीति वामीस्वगा-
लीवडवारासभीकरभीष्विति विश्वात् न्यूनकुत्सितौद्वौ अधमौ अवति-अवरक्षणादौ अवद्यात्मभयत्येनिसाधु यद्वा नधम्यते धमविवा धमध्माने सौत्रः धत्रअ

सूक्ष्ममध्यात्ममप्याद्येप्रधानेप्रथमस्त्रिषु वामौवल्गुप्रतीपौद्वावधमोन्यूनकुत्सितो ४४ जीर्णचपरिभुक्तंचयातयाममिद
द्वयं इतिमाताः तुरगगरुडौतार्क्ष्यौनिलयापचयौक्षयौ श्वशुर्यौदेवरश्यालौभ्रातृव्यौभ्रातृजाद्विषौ ४५

च्वा ४४ जीर्णअतिपरिणाम परिभुक्त भुक्तोज्झितद्वयं यातयामत्वेय यात गतः यामउपभोगकालोयस्य तदुक्तहैमे यातयामोन्भवज्जीर्णेपरिभुक्तोज्झितेने
पिचेति इतिमाता तुरगगरुडौ तार्क्ष्यौ तार्क्ष्यस्यापत्य ऋष्यण् तदुक्तहैमे तार्क्ष्यस्त्वस्य दनेवाहेगरुडेगरुडाग्रजे अश्वकर्णीद्व्येतरोस्याविति निल
यापचयौ गृहह्रासौ क्षयौ क्षयण क्षयनेनवा क्षिक्षये क्षिनिवासगत्यो एरच् उक्तक्षयोरोगान्तरेवेश्म कल्पांतोपचयेष्विति देवरश्यालौ श्वशुर्यौ श्वशुर
स्यापत्य राजश्वशुराद्यत् भ्रातृजाद्विषौ भ्रातृव्यौ भ्रातुरपत्य भ्रातुर्व्यच्च व्यन्सपत्ने इतिसाधुत्व ४५

रसदद्भेद्रे ध्वनदंबुदशाक्रो पर्जन्यो पर्जन्यइतिसाधुः तदुक्तंविश्वे पर्जन्योमेघशब्देपिध्वनदबुदशाक्रयोरिति पिपर्ति पर्षीतिच पृपालनपूरणयो. पृषुसेचने स्वामिवैश्ययो अर्य अर्यते ऋगतौ अर्यःस्वामीतिसाधु. पुष्यनक्षत्रेकलियुगे तिष्य. त्वेषति त्विषदीप्तौ अध्यादिः तिष्य.कलियुगेऋक्षेतिष्याधात्रीचकथ्यत इतिधरणि. अवसरे प्रस्तावे क्रमे पर्यायः पर्ययण इण्गतौ परावनुपेतिघञ् तदुक्तंविश्वे पर्यायस्तुप्रकारेस्यान्निर्माणेवसरेक्रमइति ४६ अधीनादिहेत्वं तेषुसमस्तु प्रत्ययः प्रत्ययशब्दःस्यात् प्रत्ययन प्रतीयतेनेनवा प्रत्येतीवा इण्गतौ एरच् अच्वा पचादित्वात् तदुक्तविश्वे प्रत्ययःशपथेरंध्रेविश्वासाचारहे

पर्जन्योरसदद्धेंद्रोस्यादर्यःस्वामिवैश्ययोः तिष्यःपुष्येकलियुगेपर्यायोवसरेक्रमे ४६ प्रत्ययोधीनशपथज्ञानविश्वा सहेतुषु रंध्रेशब्देथानुशयोदीर्घद्वेषानुतापयोः ४७ स्थूलोच्चयस्त्वसाकल्येनागानामध्यमेगते समयाःशपथाचारका लसिद्धांतसंविदः ४८

तुषु प्रथितत्वेचसन्मादावधीनज्ञानयोरपीति सच्चरध्रेछिद्रे शब्देच शब्देयथा अशक्रेव अशक्रइत्यत्रकन्प्रत्ययः दीर्घद्वेषा नुतापयोः अनुशय. अनुशयनमेनेनवा शीङ्स्वप्ने एरच्घोवा भवेदनुशयोद्वेषेपश्चात्तापानुबंधयोरितिविश्वः ४७ असाकल्ये कात्स्र्न्ये नागानां गजाना मध्यमेगते शीघ्रमदाभावगमने स्थूलोच्चय. उच्चयनं चिञ्चयने एरच् स्थूलस्योच्चयः तदुक्तंविश्वे स्थूलोच्चयस्त्वसाकल्येगडोपलकरडयोरिति शपथादय. पञ्च समया स्युः समीपतेत्रानेनवासमेतिवा इण्गतौ इगतौवा एरच् घोवा पचाद्यच्वा तदुक्तंहैमे समय.शपथेभाषासपदोःकालसंविदोः सिद्धांताचारसंकेतनियमावसरेषुच क्रियाकारेच्चनिर्देशोचेति संवित् भाषेत्यर्थः॥ ४८

व्यसनानिद्यूतादीनि अशक्ता दैवविशेषण विपत् इतित्रकः मनयाः ननयन अनेनवा अत्रवा णीत्नमाप्तो एरन् यद्वा अयात् शुभावहविधेरन्य तदुक्तमिकवे अनय स्त्वविपदैवाशुभयोर्व्यसनेपिचेति अतिक्रमे उल्लंघने कृच्छ्रे दोषे दंडे अत्यय अत्ययनमनेनवा इण्गतौ एरच् अत्ययोतिक्रमेकृच्छ्रेप्युत्पातेनाशादंडयोरितिधरणि आपदि शुद्धात्यो सपराय सपरायण इण्गतौ एरच् सपराय समीकेस्यादापदुत्तरकालयोरितिकोशान्तरात् ५९ आयति उत्तरकाल स्वराज्ये पूज्य अर्हार्थेय त् पूज्योस्वराजपूजार्हाविति धरणि पश्चात् अवस्थायिसेनापृष्ठभागस्थित बल समवायश्च समूहः एवौसन्नायौ सन्नयन सन्नीयतेवा सन्नयतिवा णीत्नप्राप णे एरच् ५० सघाते सन्निवेशो सस्त्याय स्त्यायतेर्घञ् युक् तदुक्त सस्त्यायःसन्निवेशोचसघातेविस्तृतावपि अर्मावस्मादय प्रय प्रणाया प्रणयन णीत्न एरच

वसनान्यशुभंदैवविपदित्यनथा स्त्रियः अत्ययोतिक्रमेकृच्छ्रेदोषेदडाप्ययापदि ५९ शुद्धायत्यो सपराय पुज्यस्तुस्वश्रत्नेपिच पश्चा दवस्थायिबलसमवायश्चसन्नयौ ५० सघातेसन्निवेशोचसंस्त्याय प्रणयास्त्वमी विस्नम्भयाञ्चाप्रेमाणोविरोधेपिसमुच्छ्रय ५१ वि षयोयस्ययोज्ञातस्तत्रशब्दादिकेष्वपि निर्यासेपिकषायोस्त्रीसभायाञ्चप्रतिश्रय ५२

तदुक्तकोशान्तरे प्रणयप्रसरेप्रेम्णिविरोधेपिसमु- च्छ्रयः एरच् वैरोन्नत्यो समुच्छ्रयरतिरभस ५१ यस्यमस्यारेर्मेजिज्ञादिर्ज्ञातोनिव्यसेवितस्तस्यतत्रशब्दादिकेष्वपिविषय अपिशब्दात् स्पर्शरूपरसगधादीनाग्रह ण विसिनोति पिञ्बधने एरच् तदुक्तविश्वे विषयोगोचरेदेशेतथाजनपदेपिच प्रबधायस्ययोज्ञातस्तत्ररूपादिकेषुमान् निर्यासेपिकषाय कषतिकठ कष हिंसाया बाहुलकादायः अस्त्री तदुक्तविश्वे कषायोरसभेदेस्यादगरागेविलेपने निर्यासेचकषायोयस्तुरक्तपीतोलोहितेन्यवदिति निर्यास काथइत्यर्थ सभा निश्रय प्रतिश्रयणमत्र श्रिञ्सेवाया एरच् पोवासेचकषायोयस्तुरक्तपीतो लोहितेन्यवदिति ५२

भूम्निबाहुल्ये अलगमनेमृत्योच प्रायःस्यात् इण्एरच् तत्रेत्थं प्रायेण बाहुल्येन घटोदृश्यते प्रायश्चानशनेमृत्यौप्रायोबाहुल्यतुल्ययोरितिविश्वात् अंतोनाशोगम्य
तेऽनेन दैन्येक्रतौ क्रुधिमन्युः मन्यते मनज्ञाने मृगय्यादि. रहस्योपस्थयोर्गुह्यं गूहन गुह्यतेवा गुहसंवरणेक्यप् तदुक्तंविश्वे गुह्यंरहस्युपस्थेचगुह्यःकमठदंभयोरिति
शपथतथ्ययोः सत्यंसतिसाधु यत् सत्यंकृतेचशपथेतथ्येचत्रिषुतद्वतीति विश्वात् ५३बलेप्रभावेच सामर्थ्ये तेजोविशेषेच वीर्यं वीर्यतेअनेनवा वीरक्रांतौ अचोयत्
तत्रसाधुरितिवा तदुक्तंविश्वे वीर्यंप्रभावेशुक्रेचतेज सामर्थ्ययोरपि भव्येसत्वे गुणाश्रये पृथिव्यादौ द्रव्यंस्यात् द्रोरिदंद्रव्यं द्रव्यंचभव्ये तदुक्तंविश्वे द्रव्य

प्रायोभूम्न्यंतगमनेमन्युर्दैन्येक्रतौक्रुधि रहस्योपस्थयोर्गुह्यंसत्यंशपथतथ्ययोः ५३ वीर्यंबलेप्रभावेचद्रव्यंभव्येगुणाश्रये ॥
धिष्ण्यंस्थानेगृहेभेऽग्नौ भाग्यंकर्मशुभाशुभं ५४ कशेरुहेम्नोर्गांगेयंविशल्यादंतिकापिच वृषाकपायीश्रीगौर्यो

स्याद्द्रविणेभव्येपृथिव्यादौचपित्तले भेषजेचविलेपेचजतुद्रुमविशेषयोरिति स्थाने गृहेभे अग्नौ धिष्ण्यंधिष्ण्यते धृष्णोतिवा धिषशब्दे निपातनात् धिष्ण्यस्थाना
ग्निसद्मसु शुभाशुभ कर्मभाग्यं भज्यतेनेन भजसेवायां ण्यत् भाग्यंशुभात्मक विधौस्याच्छुभेकर्मणीति भंनक्षत्रमित्यर्थः ५४ कशेरुहेम्नोः गांगेय गंगा-
या अपत्यं शुभ्रादित्वाढक् तदुक्तंविश्वे गांगेयःस्यात्पुमान्भीष्मेक्लीबंस्वर्णकशेरुणोः कशेरुतुस्वनाम्नाख्याते दंतिकाविशल्यास्यात् विगताशल्यायस्याः विग-
तशल्ययस्यवा तदुक्तंहेमे विशल्याग्निशिखादंता गुडूचीत्रिपुटासुचेति श्रीगौर्योः वृषाकपायी वृषाकपेःस्त्री वृषाकपायीश्रीगौरीश्चरीजीवंतिकासुचेति ॥

ने नामशोभायो॰ अभिख्याता अभिख्यान ख्यामख्याने कथ भातश्चेत्यङ तदुक्तकोशांतरे अभिख्यात्वभिधानेस्याच्छोभायान्यशास्यपि ५५ आरभादयोनवशब्दः
क्रियाशब्दवाच्या कृञ् शबेतिसाधु स्तत्रारभे सर्वा क्रियामन्त्रमूलान्नृपाणा निष्कृतोप्रायश्चित्तेयथा महापातकिनापुसामाणांतिकक्रियास्मृता शिक्षायायथा क्रिया
वस्तूपहितामसीदति पूजनेयथा देवक्रियापरस्तपस्वी समधारणविचार तत्रयथा क्रियाविना कोहिजानातिकृत्य उपायेयथा समसामादिका॰ क्रियाः कर्मणियथा
निष्क्रियस्यकुत स्फुरव चेष्टायायथा मृतकिनिष्क्रियोयत चिकित्सायायथा पूर्वज्वरेसमुत्पन्नेक्रियापूर्वज्वरानुगा क्रियाकर्मणिनचेष्टायाकरणेसमधारणेइतिवि

रभिख्यानामशोभयो ५५ आरभोनिष्कृति शिक्षापूजनसमधारण उपाय कर्मचेष्टाचचिकित्साचनवक्रिया ५६ छाया
सूर्यप्रियाकांति प्रतिबिंबमनातप कस्याप्रकोष्ठेहर्म्यादि कांच्यामध्येभवधने ५७ कृत्याक्रियादेवतयोस्त्रिषुभेद्यधनादिभि

श्व॰ सूर्यप्रियादिचतुष्के छाया शब्द छ्यति छोछेदने आदत्तत्राण्ण तदुक्तविश्वे छायास्यादातपाभावेप्रतिबिंबार्कयोषितोरिति तदुक्तन्चमेदिन्या छायापक्तो
प्रतिमायामर्कयोषित्यनातपे उत्कोचेपालनेकांतौशोभायाचतमस्यपीति हर्म्यादि राजगृहादि प्रकोष्ठे कान्च्यामध्येभवधने कस्यास्यात् कक्षेभवा शरीराव
यवाधत्वात् तदुक्तंहेमे कस्यागृहप्रकोष्ठेस्यात्साहश्योद्योगकांचिषु हहृत्तिकेभनाढ्योश्चेति ५७ क्रियादेवतयो क्रिया कृत्यते कृतीछेदने ऋलुपेतिक्यप्
कर्मासदेवतयोरित्यर्थ धनादिभि भेद्ये कृत्याशब्द आदिशब्दात् स्त्रीभूम्यादीनाग्रहण भेत्तुयोग्य भेद्य पराश्रुगतपुरुषादिस्तत्रेत्यर्थ ।त्रिष्वपि

जनवादे निंदितवादे जन्यंस्यात् मत्तजनेतियत् जनानांवाद इत्यादि जन्यामातृवयस्यास्याज्जन्याजनवरप्रिया जननीजनयित्रोश्चजन्यंनिर्वादसुहृदोरितिधरणि

अंत्येधमेच जघन्य जघनेभव शरीरेतियत् यद्वा कुटिलहन्यते तदुक्तंविश्वे जघन्यचरमेशिश्नेजघन्यगर्हितेऽन्यवदिति ५८ गर्ह्यांहीनो वक्तव्यो वचनार्हो व

चपरिभाषणे तदुक्तमेदिन्या वक्तव्यंकुत्सितेहीनेवचनार्हेचकाच्यवत् सज्जनिरामयो बन्धूसन्ताहनीरोगो कल्यो कलासुसाधु. तत्रसाधु. तदुक्तमेदिन्यां कल्यप्र

भातेक्लीबंस्यात्कल्पोवाक्श्रुतिवर्जिते सज्जनीरोगदक्षेषुकल्याणवचनेपिच उपायवचनेपिस्यादिति आत्मवान् ज्ञानी अर्थात् अनपेत मचार्थ्य स्यात् अर्थे

साधुः तत्रसाधुरितियत् अर्थादनपेतः धर्मेतियत् तदुक्तं अर्थ्योविज्ञार्थशालिनोरित्यजयात् अर्थ्यशिलाजतुन्यर्थ्योबुधेन्याय्येतुवाच्यवदितिविश्वाच्च चारु

**जन्यंस्याज्जनवादेपिजघन्योंऽत्येऽधमेऽपिच ५८ गर्ह्यांहीनोचवक्तव्योकल्योसज्जनिरामयो आत्मवाननपेतोर्थादर्थ्योपु**
**ण्यंतुचार्वपि ५९ रूप्यंप्रशस्तरूपेपिवदान्योवल्गुवागपि न्याय्येपिमध्यःसौम्यंतुसुंदरेसोमदेवते ६०** पि सुंदरमपि पुण्यंस्यात्

पुनाति पुञ्पवने यद्वा पुणतेरिशुपेतिकेयत् पुण्यस्त्रीसुमनोज्ञेस्यात्क्लीबंसुकृतधर्मयोरितिविश्वः ५९ प्रशस्तरूपेपि अहतप्रशस्तंवारूपमस्यास्ति तत्ररूप्यंस्यात्

रूपादाहतेतियप् तदुक्तंविश्वे रूप्यंस्यादाहतस्वर्णरजतेरजतेपिच रम्येप्रशस्तरूपेतुवाच्यवदिति वल्गुवागपि वदान्यःवदति वदेरान्याः वदान्योदातृवाग्मिनो

रितिअजय ॥ न्याय्ये उचिते मध्य मांध्यायति ध्येचितायां आतोनुपेतिकः यद्वा मत्यते महपूजायां तदुक्तं न्याय्यावलग्नयोर्मध्यमंतरेचाधमेत्रिष्वितिरसभसात्

सुंदरे सोमदेवते सौम्य सोमोदेवतास्य हविरित्यर्थ तदुक्तं सौम्येबुधेमनोज्ञेस्यादसुग्रेसोमदैवतइतिविश्वात् सोमइवसोम ६०

गो

रतियाता निवहावसरौ हृदभस्तावेपारौ वारयति म्रियतेवा वृञ्वरणे अच्घञ्वा तदुक्तविश्वे वार सूर्यादिदिवसेवारोवसरहृदयो कुब्जहृक्षेहरेवारोवारमद्यस्यभाजन
इति मस्तराध्वरौ दर्भशय्याकृतू सस्तरौ सस्तीर्यते स्तृञ्आच्छादने ऋदोरप् मस्तर दर्भसुषिरपीत्यर्थ तदुक्तविश्वे सस्तरमस्तराचेतौमस्तराध्वरयोरपि मणिपा
पाणयोरपीति गीष्पति पित्राद्यो गुरू गृणाति गृशब्दे गृणाति अवबोधयति आद्यशब्देन वेदशास्त्राध्यापकस्य तदुक्तकोशातरे गुरुस्त्रिलिङ्ग्यामहतिदुर्जरालघुनोर
पि पुमान्निषेकादिकरेपित्रादेोसुरमत्रिणि युगसशायौ द्वापरौ द्वाभ्यापर. द्वौपरावत्रवा पृषोदरादि ६१ भेदसादृश्ये मकार भावेघञ् तदुक्त प्रकारस्तुल्यभेदयो
भेदस्तुब्राह्मणादीना सादृश्य सुरवचद्रयोरित्यर्थ इंगिताकृति आकारौ आकरण घञ् आकृतिरवयवसस्थानमित्यर्थः सस्यशूकेषुकिशार किंचित्कुत्सितश्र

निवहावसरौवारौसस्तरौमस्तराध्वरौ गुरूगीष्पतिपित्राद्यौद्वापरौयुगसशयौ ६१ मकारौभेदसादृश्येआकाराविंगिताकृती ॥
किशारूसस्यशूकेषुमरूधन्वधराधरौ ६२ अद्रयोद्रुमशैलार्का स्त्रीस्तनाब्दौपयोधरौ ध्वातारिदानवाद्वृत्राबलिहस्ताशव करा
६३

गाति शृहिसाया किजरेत्युण् तदुक्तमेदिन्या किशारुर्नासस्यसूके विशिखेकङ्कपक्षिणीति धन्वधराधरौ निर्जलदेशापर्वतौ मरू म्रियतेजतवोस्मिन्
मृङ्प्राणत्यागे उमत्यय मरुर्नागिरिधन्वनोरित्यकतलात् मरुस्थलीप्रदेशास्वबधत्वात् मरुशब्दवाचकपर्वतइत्यर्थ ६२ द्रुमशैलार्का अद्रिवाचकास्तु अत्तिभ
यतेवा अदभक्षण अदिशदीतिक्रिन् स्त्रीस्तनाब्दौ स्त्रीकुचमेघौ पयोधरौ धरति धृञ्धारणे पयसोधर तदुक्तमेदिन्या पयोधर.कोशकारेनारिकेलेस्तनेपिच
करोरुमेघयो पुसीति ध्वातारिदानवाः वृत्राः वृणोति वृञ्वरणे बाहुलकात् क्रन् तदुक्तहैमे वृत्रोरिपौघनेध्वातेशैलभेन्द्रदानवेऽति बलिहस्ताशव करा कीर्य
ति कृतिक्षेपे ऋदोरप् करोतिवा पनाद्यच् बलीराजग्राह्यभागइत्यर्थ ६३

भंगनारीरुक्बाणा प्रदरा प्रदीर्यंते प्रदरणंअनेनवा दृविदारणे ऋदोरप् प्रदरोरोगभेदेस्याद्विदारेशरभंगयोरित्युक्तत्वात् नारीरुक्स्त्रीरोगभेदइत्यर्थः कचा अपि अस्त्राः स्युःअस्यते असक्षेपणे बाहुलकात्ष्ट्रन् अस्त्रं-कोणेकचेपुंसिक्लीबमस्त्रुणिशोणितइतिकोशांतराच्च अजातशृंग. गौ. कालेपिश्मश्रूत्थानसमयेपि अ श्मश्रु. नाम्नएनोतूबरोतुइतिसौत्रोधातु. बाहुलकात्दर- दीर्घश्च कालसंबंधः उभयत्र तूबरोश्मश्रुपुरुषेप्रौढाश्रृंगारकेपिच पुरुषेव्यंजनत्युक्तेस्यात्कषायरसेपि चेतिमेदिनी ६४ स्वर्णेपि राः राति स्करवरायतेवा रादाने रातेर्डैः टिलोपः रा.पुंसिस्वर्णवित्तयोरितिकोशांतराच्च पर्यंकपरिवारयोः परिकरः परिकीर्यते कृविक्षेपे अप् यद्वा परि क्रीयतेनेन पुंसीतिघ तदुक्तंविश्वे भवेत्परिकरोव्रातेपर्यंकपरिवारयोः प्रगाढगात्रिकाबंधेविवेकारंभयोरपीति यत्नारंभोपरिकराविति त्रिकांडशेषः मुक्ताशुद्धो तारः ता

प्रदराभंगनारीरुक्बाणाअस्त्राःकचाअपि अजातशृंगोगौःकालेप्यश्मश्रुर्नाचतूबरो ६४ स्वर्णेपिराःपरिकरःपर्यंकपरिवारयोः॥ मु क्ताशुद्धोचतारःस्यात्सारोवायोसतुत्रिषु ६५ कर्बुरेथप्रतिज्ञाजिसंविदापत्सुसंगरः वेदभेदेगुप्तवादेमंत्रोमित्रोरवावपि ६६

रयति ण्यंतादच् यद्वा तार्यते अनेनवा करणेघञ् तारोमुक्तादिसंशुद्धोतरणेशुद्धमौक्तिके तारस्वरजतेत्यच्चस्वरेप्यन्यवदीरितमितिविश्वः वायौ शारः शृणाति शृहिं सायां शृवायुवर्णेइतिघञ् शारः स्याच्छबलेवाच्यलिंगेपुंसिसमीरणेइति सतुत्रिषुकर्बुरेपिशबलवर्णेपि ६५ प्रतिज्ञाजि संपदापत्सु संगरः संगरण गृशब्देअप् सं गीर्यतेवानेन पुंसीतिघः संगरोयुधिचापदीत्युक्तत्वात् क्रियाकारेविषेचांगीकारेक्लीबमानेफलइतिमेदिनीकारः वेदभेदे गुप्तवादेच मंत्रः मंत्र्यते मंत्रणेवा मंत्रिगुप्तभाष णे घञ् तदुक्तंविश्वे मंत्रोवेदविशेषेस्याद्देवादीनांचसाधने गुह्यवादेपिचपुमानिति गुप्तवादस्तु प्रच्छन्नकर्तव्यावधारणइत्यर्थः रवावपि मित्रः मेद्यति ञिमिदास्नेह- ने क्रः अपिशब्दात्सख्योमित्रं मित्रंसुहृद्दिनद्वयोरित्युक्तत्वात् ६६

मरवेसुयूपखण्डेपि स्वरु स्वरति स्वर्यते स्वशब्दोपतापयो मृस्वृइत्यु स्वरुर्वज्रध्वनौबाणेयूपखण्डेपिनस्वरु यूपखण्डेयूपे तक्ष्यमाणेप्रथमपतितेशकले शुल्वेपिउ मस्थेपि अवस्कर अवोप कीर्यते कृविक्षेपे अप् अवस्करोपिवर्चस्केगुह्यइत्युक्तत्वात् तूर्यरवे गजेद्राणाच्चगर्जिते आडम्बरः आडम्ब्यते डविक्षेपे घञ् आडम्बराति आ तइतिक आडम्बयतिवा बाहुलकादरन् तदुक्तविश्वे आडम्बर समारम्भेगजगर्जिततूर्ययोरिति ६७ अभियोगे अभिगम्य आक्रमणेचौर्ये चोरस्यकर्म तत्र सन्नहने कवचादिधारणे अभिहार अभिहरण हरते घञ् जगमे जंगमविशेषपरिजने खड्गकोशोपरिच्छदे उपकरणे परीवार परिवार्यतेनेन घञ् उपेतिदीर्घः परिवार प रिजने खड्गकोशोपरिच्छदेइत्युक्तत्वात् ६८ विटपी वृक्ष दर्भमुष्टिः विष्टरः विस्तीर्यते स्तृञ् आच्छादन वृक्षासनेतिसाधु दर्भमुष्टिस्तु पञ्चाशताभवद्भ्रह्मासनदर्भैन

मरवेसुयूपखण्डेपिस्वरुर्गुह्येप्यवस्कर आडम्बरस्तूर्यरवेगजेद्राणाचगर्जिते ६७ अभिहारोभियोगेचचौर्येसन्नहनेपिच ॥ स्या ज्जंगमेपरीवार खड्गकोशेपरिच्छदे ६८ विष्टरोविटपीदर्भमुष्टि पीठाद्यमासन द्वारिद्वास्थेप्रतीहार प्रतीहार्यप्यनन्तरे ६९ वि पुलेनकुलेविष्णौबभ्रुर्नापिगलेत्रिषु

सुविष्टरइत्युक्तत्वात् पीठाद्य आसनञ्चविष्टर आद्यग्रहणात् कृष्णाजिनादि पीठन्तु काष्ठादिमयमासन द्वारि द्वा स्थे द्वारपाले प्रतीहार प्रतिह्रियतेनेनात्रवा अनन्तरोक्तेप्रतीहारे प्रतीहारीत्यपिशब्द स्त्रीपुव्यक्तावपिस्त्रिया उपसर्गस्येतिदीर्घ गौरादिङीष् तदुक्तमेदिन्या प्रति- हारोद्वारिद्वास्थे द्वास्थितायाञ्चयोषितीति ६९ विपुले नकुले विशेष्ये विष्णौच बभ्रु ना पिंगले त्रिषुस्यात् बिभर्ति भरतिवा डुभृञ् भृञ्वा कुर्भ्रश्चेतिसाधु तदु- क्तंवलस्वामिना बभ्रुर्नानकुलेविष्णौविपुलेपिंगलेत्रिष्विति बभ्रुर्विशालेनकुलेकृशानावजिनेमुनौ शूलिनिपिंगलेचेतिविश्व ॥

सरोबले स्थिरांशेन्वमज्जिपुंसिजलेधने न्याय्येक्लीबंत्रिषुवर
बले स्थिरांशे वृक्षादीनांकठोरभागे न्याय्ये सारः सरति सृ स्थिरे वरेश्रेष्ठे क्लीब त्रिषुस्यात् तदुक्तंविश्वे सरोबलेस्थिरांशेन्वमज्जिपुंसिजलेधने न्याय्येक्लीबंत्रिषुवर
इति ७० द्यूतकारेपणेच दुरोदरः द्युतेदुरोदरं दुष्टंउदरमस्य दुरोदरोद्यूतकारे द्यूताक्षपणयोः पुमानिति पणस्तुग्लहइत्यर्थः महारण्येदुर्गपथे कांतारंपुंनपुंसकंस्यात् कां
तंमनोज्ञमलंतिइयर्तिऋधातोः कर्मण्यण् तदुक्तं मेदिन्यां कांतारोस्त्री महारण्येबिलदुर्गमवर्त्मनिपुंसिस्यादिक्षुभेदेथेति ७१ अन्यशुभद्वेषे परसंपत्त्यसहनेमत्सरः
पुंसिस्यात् माद्यति परवृद्धौ मदीहर्षे कृभूमदीतिसाधुः तद्वत्कृपणयोः तद्वतिकृपणेच त्रिषुमत्सरः अभिधेयलिंगकः तदुक्तंकोशांतरे मत्सरामक्षिकायां स्यान्मात्स-
र्यक्रोधयोःपुमान् असद्य परसंपत्तौ कृपणेचाभिधेयवदितिदेवात् वृतेअभीष्टवरःपुंसिश्रेष्ठेत्रिषु मनाक् प्रियेइषदिष्टे क्लीबं व्रियतेवरणेवा वृञ्वरणेग्रहवृद्‌इत्यप्रय

सारोबलेस्थिरांशेचन्याय्येक्लीबंवरेत्रिषु ७० दुरोदरोद्यूतकारेपणेद्यूतेदुरोदरं महारण्येदुर्गपथेकांतारंपुन्नपुंसकम ७१ मत्स
रोन्यशुभद्वेषेतद्वत्कृपणयोस्त्रिषु देवाद्वृतेवरःश्रेष्ठेत्रिपुक्लीबंमनाक्प्रिये ७२ वंशांकुरेकरीरोस्त्रीतरुभेदेघटेचनानाचभूजघने
हस्तसूत्रेप्रतिसरोस्त्रियाम् ७३ द्वाद्वृणोतिवरतिवा पचाद्यच् वरोजामातरिवृतौदेवताद्वरभीप्सिते षिंगेपुंसि त्रिषुश्रेष्ठेकुंकुमेतुनपुंसकं वरप्रोक्ता-

शतावर्या बराच स्यात्फलत्रिके मनागिष्टेवरं क्लीबेकेचिदाहुस्तदव्ययमितिमेदिनीकारः ७२ वंशांकुरे वंशस्यवेणोरंकुरे करीरः कृणाति किरति कीर्यतेवा कृहिंसायां कृवि
क्षेपवाईरत् करिण ईरयतिइरगतौ कर्मण्यण् तदुक्तं विश्वे वंशांकुरेकरीरोऽस्त्रीवृक्षभि दयोःपुमान करीराचीरिकायांचदंतमुलेचदंतिनामिति अस्त्री तरुभेदे घटेच-
ना चभुजघनेसेनापश्चाद्भागेप्रतिसरः नाप्रतिसरति अच् प्रतिस्त्रियतेतेनवा घः हस्तसूत्रे अस्त्रियां तदुक्तं मेदिन्यांभवेत्प्रतिसरोमंत्रभेदेमाल्येचकंकणे व्रणशुद्धौच-
मूपृष्ठे पुंसिनस्त्रीतुमंडले आरक्षेकरसूत्रेचनियोज्येत्वन्यलिंगकइति हस्तसूत्रं तुमंगलार्थमंत्राभिमंत्रितकरबंधनसूत्रमित्यर्थः ७३

ना॰
७

यमादि भेकांतेषु त्रयोदशस्वर्थेषु हरिशब्दः स्यात् हरतिदुःखम् अनेन इ हरिर्वातार्कचंद्रेंद्रयमोपेंद्रमरीचिषु सिंहांश्वकपिभेकाहिशुकवल्लोकांतरेषु च हरिर्वाच्यावदाख्यातो हरिव
पिलवर्णयोरितिविश्वात् कपिले कपिलवर्णे हरिशब्दः त्रिलिंग ७४ कर्परांशोपि शर्करास्यात् शृणाति शीर्यतेवा शृ हिंसायां श्व करन् सिकतास्वपि तदुक्तं मेदिन्या श
र्करा खंडविकृतावुपलाकर्परांशयोः शर्करान्वितदेशेपिरुग्भेदेशकलेपिचेति यापेन याप्यतेऽनेनतत्र गतो यात्रा वर्तते यान अनया वा या प्रापणे त्रन् प्रत्ययः तदुक्तं
विश्वे यात्रातु यापने पायेगतो देवार्चनोत्सवइति भूवाक्सुरा १ स्त्रुद्रा वर्वते स्तरा मद्य मित्यर्थ निद्रा प्रमीलयोः तंद्रीस्यात् त्रुक्कोतिसाधु अस्यतम्प्रमादिन्प्रमोहप्रा
याप्रमीले त्यर्थ तंद्रेत्यपि ७५ उपमातृक्षित्यामलक्यास्त्वपि धात्रीस्यात् तदुक्तं मेदिन्या धात्रीजनन्यामलकीवसुमत्युपमातृषिति धीयते धेट्पाने ष्ट्रन् कर्मणी

यमानिलेंद्रचंद्रार्कविष्णुसिंहांशुवाजिषु शुकाहिकपिभेकेषुहरिर्नाकपिलेत्रिषु ७४ शर्कराकर्परांशेपियात्रास्याद्यापनेगतौ इ
राभूर्वाक्सुरास्त्रुस्यात्तंद्री निद्राप्रमीलयो ७५ धात्रीस्यादुपमातापिक्षितिरप्यामलक्यपि क्षुद्राव्यंगानटीवेश्यासरघाकंट -
कारिका ७६ त्रिषुक्रूरेधमेल्पेपिक्षुद्रंमात्रापरिच्छदे अल्पेचपरिमाणसामात्रकार्त्स्न्येवधारणे ७७

तिसाधुः दधातिवा डुधाञ् सर्व
धातुइतिसाधुः व्यंगादि कंटकार्यंतेषु पत्सु व्यंगा अंगहीना नटीनर्तनशीला सरघा मधुमक्षिका कंटकार्बृहती तदुक्तं हैमे क्षुद्राव्याधीनटीव्यंगावृहतीसरघासु च चा
गेरकायांहिंस्रायां मक्षिकामात्रवेश्ययोरिति क्षुद्यते क्षुदिर संचूर्णने रक् ७६ क्रूरे अधमे अल्पे क्षुद्रस्यात् त्रिषु तदुक्तं हैमे क्षुद्राहरिंद्रे ठपणेन्द्र ठष्टे १ त्पन्नृशंसयोरिति परि
च्छेदे अल्पेच परिमाणे मात्रा स्त्रियां मीयते अनया वा माङ्माने माङ्माने वा त्रन् तदुक्तं हैमे मात्राकर्णविभूषायां वित्ते माने परिच्छेदे अक्षराद्यवयवे स्वल्पेक्लीबकार्त्स्न्ये वधारणइ
ति कार्त्स्न्ये अवधारणे मात्रं स्यात् परिच्छेदे यथा शाकमात्रा परिमाणे यथा किंहस्तिमात्रं कुरा कार्त्स्न्ये यथा जीवमात्रं नहिंस्यात् अवधारणे तु पयोमात्रं भुंक्ते ७७

आलेख्याश्चर्ययोः चित्रंस्यात् चिनोति चीयतेवा अनिन्चीतिक्तः तदुक्तंहेमे चित्रास्तुपर्णीगोडुवासकभद्रादन्तिकासुच मायायांसर्पनक्षत्रनदीभेदेषुचस्त्रियांतिलकोले-
ख्ययो क्लीबकर्बुरान्दुतयोरपीति श्रोणिभार्ययो कलत्रंस्यात् कलुत्रायते त्रैड पालने सुपितिकः कडतिकड्यतेवा कडशासने बाहुलकादत्रन् श्रोणिः कटिरित्यर्थ तदुक्तंरभसे
दुर्गस्थाने नृपादीनां कलत्रं श्रोणिभार्ययोरितिरभसः योग्यभाजनयो पात्रंस्यात पति पायतेवा पिबंतेनेनवा पारक्षणे णपाने वाष्ट्रन् तदुक्तंविश्वे पात्रंतुभाजनेयोग्येपात्रंतीर
द्वयांतरे पात्रस्तुवादेपर्णेच राजमन्त्रिणिचेष्यतइति दानपात्रं श्रोत्रियइत्यर्थः वाहनपक्षयो पत्रं पव्यंत्यनेनदाम्नीशसेतिसाधु. तदुक्तंविश्वे पत्रंतुवाहनेपर्णेपक्षेचशरप
क्षिणोरिति ७८ निदेशग्रथयोः आज्ञाव्याकरणादिग्रंथयो. शास्त्रंस्यात् शासे ष्ट्रन् शिष्य तेनेन इत्यायुद्ध आयुधलोहयोः शस्त्रंस्यात् शस्यतेनेन शसुहिंसायां प्रा

**आलेख्याश्चर्ययोश्चित्रं कलत्रं श्रोणिभार्ययोः योग्यभाजनयोः पात्रं पत्रं वाहनपक्षयोः ७८ निदेशग्रंथयोः शास्त्रं शस्त्रमायुध**
**लोहयोः स्याज्जटांशुकयोर्नेत्रं पत्नीशरीरयोः ७९ मुखाग्रेक्रोडहलयोः पोत्रं गोत्रं तु नाम्नि च**

ग्घन् तदुक्तंहेमे शस्त्रंलोहास्त्रयो. क्लीबछुरिकायांचयोषितीति जटांशुकयो वृक्षमूलवस्त्रभेदयो. नेत्रंनयति नीयतेऽनेनवा नीयते णीञ्प्रापणेदाम्नीतिप्रत्ययः
तदुक्तंविश्वे नेत्रंनेतरिभेद्य वदंति नेत्रमथिगुणे वस्त्रभेदे मूलेद्रुमस्यच रथेचक्षुषिनद्यांचनेत्रीनड्यांच योषितीतिरभसः पत्नीशरीरयोः क्षेत्रंक्षयति क्षियते क्षीयतेने
वा क्षिनिवासोदाष्ट्रन् इत्याद्युक्त्या क्षेत्रंशरीरकेदारेसिद्धस्थानकलत्रयोरितिविश्वमेदिन्यो ७९ क्रोडहलयोः मुखाग्रे पोत्रं पूयतेनेनन पूञ्पवने हलसूकरयोः पुवः तदु-
क्तं विश्वे पोत्रं वस्त्रं मुखाग्रं चसूकरस्य हलस्यचेति क्रोडसुकरइत्यर्थः नाम्निच गोत्रं गात्रायते आतानुपतिकः तदुक्तं मेदिन्या गोत्राभूगव्ययोर्गोत्रः शैलेगोत्रंकु-
लाख्ययोः सभावनी येबोधेचकाननक्षेत्रवर्त्मस्विति -

आच्छादनादिवनातेपुसत्रं तदुक्तंविश्वे सत्रंयज्ञेसदादानाच्छादनारण्यकेतवइति सीद त्यत्रानेनतु षद्लृविशरणे अपिशब्दात्क्षेतवे ८० विषयेरूपसोदो काये अजिरं अजत्यत्रानेनवा अजगतौ अजिरंतिसाधुः तदुक्तंहेमे अजिरंदर्दुरे काये विषये मार्गेणिलेइति अपिशब्दात्चत्वरमपि व्योम्न्याकाशे वाससिवस्त्रेऽम्बरं अम्बतेम न्येतवा अबिशब्दे बाहुलकादरः तदुक्तंविश्वे अम्बरं वाससि व्योम्नि कार्पासेचसुगंधकेइति ८१ राष्ट्रेऽपि चक्रंस्यात् क्रियतेनेन घञर्थेक हिलमकरणे रूआदीनामि तिहि्रस्व तदुक्तंहेमे चक्रं कोकेपुमान्क्लीबंव्रजेसैन्यरथांगयोः राष्ट्रदम्भातेरकुम्भकारोपकरणास्त्रयोरिति अपिनाजलावर्तेपि मोक्षे अक्षरं नक्षरति क्षरसंचलने पचा द्यच् अपिवर्णे ब्रह्मणेः तदुक्तंहेमे अक्षरंस्यादपवर्गेपरमब्रह्मवर्णयोः गगनेधर्मतपसोरध्वरेमूलकारणइति क्षीरं अप्सु चकारात्दुग्धे तदुक्तमेदिन्या क्षीरंदुग्धे

सत्रमाच्छादनेयज्ञेसदादानेवनेपिच ८० अजिरंविषयेकायेप्यम्बरंव्योम्निवाससि चक्रंराष्ट्रेप्यक्षरंतुमोक्षेपिक्षीरमप्सुच ८१

स्वर्णेपिभूरिचन्द्रौद्वौद्वारमात्रेपिगोपुरं गुहादम्भौगह्वरेद्वौरहोन्तिकमुपह्वरे ८२

जलेऽपिचेति रैभूरिचन्द्रौशब्दौस्वर्णेपिस्तः भवति भूयतेवा भूसत्तायां भूमीस्वावा अदिप्रदाति कन् तदुक्तंमेदिन्या भूरिर्नावासकेदेवेचहरेचपरमेष्ठिनि नपुंसकस्व र्णेनभाज्येस्याद्वाच्यलिंगकइति स्वर्णभूरिरूपभेदात्नपुंसकमित्यर्थः चंद्रति चदि आल्हादने स्फायितंचीतिरक् तदुक्तंमेदिन्यां चंद्रः कर्पूरकांपिल्लसुधांशुस्व र्णवारिषिति द्वारमात्रेतु गोपुरं पुरति पुरअग्रगमने मवापुर तदुक्तंमेदिन्या गोपुरंद्वारिपूर्द्वारिके वर्त्मीमुस्तकेपिचेति द्वारमात्रेपिगोपुरमितिकेचित् गह्वरे गुहा दम्भौ स्याता गात्यते गाहूविलोडने गह्वरस्तु गुहादम्भनिकुंजगहनेष्वपीतिविश्व रह विजनं अन्तिकं समीपं ह्रेउपह्वरसंज्ञेउपह्वरत्यत्रह्वृकौटिल्येपुंसीत्यपि उभह्वरसमीपस्यादेकान्तेचनपुंसकमितिहैम ८२

पुर अधिक उपरि एतानि अग्रशब्दवाच्यानिस्युः अग्यते अगतिवा अगकुटि लायागतो औणादिकः प्रत्ययः तदुक्तं मेदिन्यां अग्र पुरस्तादुपरिपरिमाणे पलस्यच आलं
बेन समूहेच प्रातेचस्यान्नपुंसकं अधिके चप्रधानेच प्रथमेचाभिधेयवदिति अधिकं यथा साग्रशतं उपरि वृक्षाग्रं पुरं मंदिरं चेतिद्वयं अगारे नगरेच स्यात् पिपर्ति -
पृपालनपूरणयोः मूलविभुजादिः उस्वंच यद्‌ पुरति पुरअग्रगमने इगुपधकिः तदुक्तं धरण्यां पुरंशरीरमित्याहुर्गृहोपरिगृहं पुरमितिपुरं शरीरेनगरेगृहपाटलि
पुत्रयोरितिहेमेच मदत्तेत्र मंदिरक्त स्यादो इषिपदीकिरंच् तदुक्त मेदिन्या मंदिरंनगरेक्लींबमिति विषयेजनपदे उपद्रवे मरणादोचराष्ट्र स्यात् अस्त्री राजति राज्रू
दीरेपो औणादिकः प्रत्यय. ८३ श्वभ्रे गर्त्ते भयेच् दरः स्यात् दृभयेविदारणेवा अप् अस्त्रियां दरोऽस्त्रीसाध्वसे गर्त्ते कंदरे तुदरीस्मृता दराव्ययंमनागर्थइतिरभ

पुरोऽधिकमुपर्यग्राण्यगारेनगरेपुरम् मंदिरं चाथराष्ट्रोऽस्त्रीविषयेस्यादुपद्रवे ८३ दरोऽस्त्रियांभयेश्वभ्रेवज्रोऽस्त्रीहीरकेपवौ
तंत्रंप्रधाने सिद्धांतेसूत्रवायेपरिच्छदे ८४ औशीरश्चामरेदंडेप्यौशीरंशयनासने. सःहीरकेमणिभेदे पवौभिदुरे वज्रः वजति वजगतौ रन्प्र
त्ययः वज्रस्याद्धालके धान्येक्लींवं योगांतरेपुमानितिविश्वः प्रधाने स्वतंत्रे सिद्धांते तांत्रिके सूत्रवाये ऽपरिच्छदे तंत्रंस्यात् तन्यते तनुविस्तारे तंत्रिकुटुंब धारणेभावेक -
र्मणिवाघञ् इत्याद्युत्य तदुक्त मेदिन्या तंत्रकुटुंब कृत्येस्यात्सिद्धांते चौषधोत्तमे प्रधाने तंतुवायेच शास्त्रभेदे परिच्छेदे श्रुतिशाखांतरे हेतावुभयार्थ प्रयोजने इति
वर्त्तव्यातायांचेति ८४ चामरे चमरस्यायं दंडे औशीरं उश्यते वशकांतौ वशे. किन्‌इति ईरन् ततः प्रज्ञाद्यण् औशीरंचामरेदंडे औशीरस्वाधपाठयोरित्यजयः
औशीरशयनासनेरतः शयनासनयोः समुदितयोरौशीरसंज्ञ तिस्वामीस भूनिस्त पृथगेवव्याख्यातवान्

करिहस्ताग्रे वाद्यभाण्डमुखे जले व्योम्नि खड्गफले खड्गमध्ये पद्मे तीर्थौषधिविशेषयोश्च पुष्करं स्यात् पुष्णाति पुष्यते अनेनवा पुषपुष्टौ पुष किदितिकरन् तदुक्तं ६
म पुष्करं पङ्कजेव्योम्निपय करिकराग्रयोः औषधिद्वीपविहगतीर्थरागोरगांतरे पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि चेति ८५ अवकाशादित्रयोदशशब्देषु अंतरश
ब्दः स्यात् अंतरानिरादाने आतोऽनुपसर्गे क अवकाशादिषु यथा अंतरे हिम आवधौ मासांतरे देय परिधाने परिधानीये अंतर्धौ पर्वतांतरितो रवि भेदे यदंतरं सर्प
पयोः सराजयोः तादर्थ्ये तदंतरेण ऋणमेतत् छिद्रे प्राकारांतरे भेत्तव्य आत्मीये अयमत्यंतरो मम विनार्थे अंतरेण पुरुषकारमिति बहिः अंतरे नडाः कपृष्ठे अव
सरे अंतरज्ञः सेवकः मध्ये आवयोरंतरे जातं पर्वत अंतरात्मनि ब्रह्मदृष्टी तदन्योऽन्तरःस्यात् नकारांत सादृश्ये हक्कारस्यधकारांतरतमइत्यर्थः ८६ मुस्तेपिठरं स्यात्

पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ८५ अंतरमवकाशावधिपरिधानांतर्धि
भेदतादर्थ्ये छिद्रात्मीयविनाबहिरवसरमध्येंतरात्मनि च ८६ मुस्तेऽपि पिठरं राजकशेरुण्यपि नागरम् शार्वरं त्वघातमसे
घातुके भेद्यलिंगकम् ८७ पेटति पिठ्यतेवा पितिहिंसासंक्लेशयोः बाहुलकादरः स्थाल्यामपिनाम्नाने तदुक्तं मेदिन्यां पिठरस्थाल्यांना
क्लीबमुस्तमंथानदंडयोरिति राजकशेरुणि जलजतृणमूले नागरं नगरे भवं तत्र भवइत्यण् तदुक्तं मेदिन्यां नागरंमुस्तके शुण्ठ्यां विदग्धेपनगरोद्भवइति राजक-
शेरु केदविशेषइतिकश्चित् नागरमोथइत्याहर्वाचीना अघतमसे गाढांधकारे शार्वरं शर्वर्यांभवं तत्र भवइत्यण् घातुके भेद्यलिंगकं स्वामीतु घातुकेऽपि नृलिं
गकमित्यपिपाठ घातुकश्चासाविसाविपश्च नृलिंगकं पुल्लिंगमिति व्याख्यत् ८७

अरुणे सिते पीतेच गौरः गौरतिगच्छतेवामनोत्रइत्याद्यूर्ध्वं गुरीवुद्यमने गुड् गतौवा तदुक्तं मेदिन्यां गौर पीतेरुणेश्वेतेविशुद्धेचाभिधेयवत् नाश्वेतसर्षपेचंद्रेन
द्योः पद्मकेसरइति व्रणकार्यप्यरुष्करः अरुःकरोति दिवाविभेतिटः अपिशब्दात्भल्लातकफलग्रहणं तदुक्तंमेदिन्या अरुष्करोव्रणकृतिः त्रिषुक्ली भल्लातकेपुमा–
नि तिमेदिनी कठिनेपि जठरः जायतेअस्मिन् जनेररः पृषोदरादि तदुक्तंहैमे जठरः कुक्षिवृद्धयोरिति उदरेपि अधस्तादपिअधरः नधरति धृञ्धरणे पचा–
द्यच् ... इहानयोरपि अधररक्तपुमानोष्ठेहीनेनूर्ध्वेपिवाच्यवत् ९८ अनाकुलेपिस्वस्थेपि एकाग्रः एकमेकत्रवा अग्रमस्य तदुक्तंरभसे एकाग्रमनन्यलिंग
... अनाकुलइति अपिशब्दात् एकतानेपि व्यासक्ते द्विधाव्यापृते आकुलेनेककार्यव्यासक्तचित्ते व्यग्रः विविधं विविधेवा अग्रमस्य उपर्युदीच्यश्रेष्ठे

३ स्वादुप्रियौ तु मधुरौ मधुमधुरराविक अस्यन्ते तिवा उपसुषिद्दतिमत्वर्थेर तदुक्तविश्वे मधुरमधुवत्स्यादुप्रियेषुमधुरान्यवदिति कठिन निर्दयौ क्रूरौ कृतति कृ
तौकेद्वे रप्रत्यये क्रूआदेश तदुक्तविश्वे क्रूरस्तककठिने घोरे नृशंसेलभिद्यवदिति १० दान्तृमहत्तौ उदार उदञ्चैरासमेता दकति पञ्चापञ्च तदुक्तरभसे उदारो
दानृमहत्तोर्दक्षिणेन्वाभिधेयवत् अन्यनोर्चायाः इतर इनाकामेनतरति सेमस्वातन्त्र्ये इर्नेईर तिवा ईरगतौकम्पनेच ईरप्रेरणेवा पञ्चादन् मदस्वच्छद्ये स्वैर
उहास्परऋकुये शका शोभते शकमदोश्चो स्फायितचीतिरक् शकमस्यादक्षके क्लीवउहास्पशुकू योम्भिषीतिमेदिनी ११ इतिसता चूडा शिखा किरीटमुकुट स
यता केशाश्च एलेनय मौलय मूलस्यादूरभव सुतभमादिभ्यइञ् तदुक्तरभसे किरीटेमौलिरक्लीवचूडासयत केशयोरिति मौलि किरीटधम्मिल्लचूडास्वमनपु

स्वादुप्रियौतुमधुरौक्रूरौकठिननिर्दयौ १० उदारोदातृमहतौरितरस्त्वन्यनीचयो मद-स्वच्छन्द्यो स्वैर शकमुद्धासशकुयो ११
इतिराता चूडाकिरीटकेशाश्चसयतामौलयस्त्रय द्रुमप्रभेदमातंगकाडपुष्पाणिपीलव १२ कृतांतानेहसौ कालश्चतुर्थेपियु
गेकलि

सक अशोकपादपेपुंसीतिमेदिनी कारश्च द्रुमप्रभेदमानगकाडपुष्पाणि एनेनत्रय शब्दा पीलुवाच्याः स्यु पीलति पीलप्रतिरोधे मृगयुवत्तु
तदुक्तमेदिन्या पीलु पुमान्प्रसूनेस्यात्परमाणौमतंगजे अस्थिखंडेनतालस्यकाडपादपभेदयोरिति मातगकाडोजगचाणाविस्यर्थ १२ कृतांतानेहसौ काल
स्यात् कालयति कलशब्दसंख्यानयो कलप्रेरणे प्यन्तादच् इत्यासुत्य कृतांत यमः अनेह समय तदुक्तं मेदिन्या कालोमृत्यौमहाकालेसमयेयमकृष्णयोरि-
तेनतुर्थेपि युगे कलि कलयति कल्यतेवा कलयवीसंख्यानेच प्यतादंचइः अदंतत्वादुपधावृद्धिर्न तदुक्तविश्वे कलिः स्त्रीकलिकायांनाभूराजिकलहेयुगे इति

कुरंगेपि कमलः कमुकान्तौ णिङ् भावे कलच् कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे मृगभेदे तु कमलः इत्युक्तः प्रावारेपि कंबलः कं कुत्सितं शिरो वा बलते वल-
संवरणे संचरणे च मुलविभुजादिः तदुक्तं रभसे कंबलो नागराजे स्यात्सास्नाप्रावारयोरपि कृमावप्युत्तरासंगे सलिले तु नपुंसकं ९३ करोपहारयोः राजदेयोपचारयोः
पुंसि बलिः स्यात् प्राण्यंगे जरया श्लथचर्मणि ग्रहदारुप्रभेदे च जठरावयवेपि चेति स्थौल्य सामर्थ्य सैन्येषु बलं बल्यते बलति वा घञ् अच् वा इत्याद्युक्त्या तदुक्तं मेदिन्या बलं
मान स्त्री तु जरया श्लथचर्मणि ग्रहदारु प्रभेदे च जठरावयवेपि चेति स्थौल्य सामर्थ्य सैन्येषु बलं बल्यते बलति वा घञ् अच् वा इत्याद्युक्त्य तदुक्तं मेदिन्या बलं
वन्हूरसे रूपरस्थामनि स्थौल्यसैन्ययोः बलो हलायुधे दैत्यभेदे वालिनि वायस इति ना काकसीरिणोः ९४ वात्यायां वातसमूहे वातुलः वातसहते वातासहे वा-

स्यात्कुरंगेपि कमलः प्रावारेपि च कंबलः ९३ करोपहारयोः पुंसि बलिः प्राण्यंगजे स्त्रियाम् स्थौल्यसामर्थ्यसैन्येषु बलं ना काक-
सीरिणोः ९४ वातूलः पुंसि वात्यायामपि वातासहे त्रिषु भेद्यलिंगः शठे व्यालः पुंसि श्वापदसर्पयोः ९५ मलोस्त्री पापविट्कि-
ट्टान्यस्त्री शूलं रुगायुधे म्

तमासहते वातात्समूहे चेत्यर्थः चात्सहने प्राणिनि वातूलस्त्रिषु वातूलो वातुलोपि स्यादिति द्विरूपकोशात् ह्रस्वमध्या-
पि शठे वाच्यलिंगः व्यालः स्यात् विरुध्य आसमन्तात् दुलति अडति वा अल भूषणादौ अडउद्यमे वा डयोरेकत्वं पचाद्यच् तदुक्तं रभसे व्यालो दुष्टगजे सर्पे खले श्वा-
पदसिंहयोरिति ९५ पापविट्किट्टानि मलवाच्यानि स्युः गलो स्त्री मलयति मलते तेनो मलधारणे च् इत्याद्युक्त्यं विट् विष्ठा किट्टं तैलाद्यधोभागस्थं मलोस्त्री पाप
विट्किट्टे कृपणेत्वभिधेयवदित्युक्तत्वात् वसाशुक्रमसृग्मज्जामूत्रं विट् कर्णविट् नखाः श्लेष्माश्रुदूषिकास्वेदो द्वादशैते मला नृणां रुग् आयुधं शूलं स्यात् शूलति शू-
लं सजायां इगुपधेति कः तदुक्तं विश्वे शूलो स्त्री रोगआयुधे मृत्युकेतनयोगेष्विति

को

शकावपिल्मिह् कीलकेपि कील द्वयो स्त्रियांतु कीला कीलति कील्यतेत्र अनेनवा कीलबंधे क यन्त्रवा तदुक्त धरण्यां कील कफोणिकायांतस्कोणोन्जवलना र्चिषिइति कीलाग्नितेजसीप्रोक्त कफोणिस्त्वमयांस्त्वपीतिहेमश्च अश्रिपाराकोणोवाअकडउत्सगः विन्हवा पक्ति श्रेणि एतेषुपदेषु पालि पालयति पाल्यतेवा पा लरक्षणे अन्इः पालि कर्णलतायांस्यात् भेदेशेपंक्तिचिन्हयोरित्यजय सम्भश्रुयुवस्त्रीपालिः पंक्ति कर्णलता पिन्येतित्रिकाण्डशेष पालि कर्णलताग्रेश्रीपक्ता वक मोदयोः छागादिदेयस्त्रीपाली युकसत्मश्रुपोषितोरितिमेदिनी १६ शिल्पगीतवाद्यादिनपुण्ये कालोदे त्रिंशत्काष्टात्मके काले कला कलयति कलतेवा क लशब्दसंख्यानयो पचायच् इत्यपूर्व्य तदु क मेदिन्या कलास्यान्मूलरैदं ह्वो शिल्पादावंशमात्रके षोडशांशेन चन्द्रस्य कलना कालमानयोरिति सख्यावल्ली आ

शकावपिद्वयो कील पालिस्त्र्यश्रकपंक्तिषु १६ कलाशिल्पेकालभेदेप्यालिसख्यावलीअपी अव्ययवुविकृतौवेलाकालमर्या दयोरपि १७ बहुला कृत्तिकागावोबहुलोऽग्नौशितौत्रिषु

लीस्यता आ अलति अप्यतेवा अनयावा अव भूषणादो सर्वधातुभ्यइन् कृदिका रादितिङीष् तदुक्तमेदिन्या स्यादालिर्निशदाशये त्रिषुस्त्रियांवयस्यायांसेतौपंक्तौ नकीर्तिइ ते अव्ययवुविकृतौ इदुदर्शनात् सिंधुजलवृद्धौ कालमर्यादयोर- पिवेलास्यात् वेलति वेलृ गतौ पचाद्यच् इत्यपूर्व्य तदुक्तविश्वप्रकाशे वेलाकाले च जलधेस्तीरनीरविकारयोः अक्लिष्टमरणेरागसीम्निवाचिबुधस्त्रियाभो- जनेपीश्वराणास्यादिति १७ कृत्तिकागाव बहुलाख्याः स्युः बहुलानि आतानुपतिक अग्नौबहुल पुंसि शितौ कृष्णवर्णे त्रिषुतदुक्तमेदिन्या बहुलानीलि कायांस्यादेलायामविघोषितिकृत्तिकायांस्त्रियांभूम्निविहायसिनपुंसकंपुंस्यग्नौकृष्णपक्षेचवाच्यवदाज्यकृष्णयोरिति

विलासक्रिययोः लीला लीङ् श्लेषणे बाहुलकाल्लोगुणाभावश्च लीलाविदु केली विलासखेलाशृंगारभाव प्रभवक्रियास्विति शर्करापिच उपलास्यात् सिकता. खं
डभिरुलतिवा उपलाति लादाने आतश्चोपसर्ग उशंभूं प्रति ओशंभोवापलति पलगतो अच् शर्कराशकलेज्ञेयासितोपलरजस्यपोपजः उपलः प्रस्तरे रत्ने शर्करा-
यांस्मृतोपला ९८ शोणिते अंभसिच कीलालं कीलेन प्रतिबंधेन अल्यतेवार्यते अलभूषणादौ कर्मणिघञ् कीलं प्रतिबंधं अलतिवा कर्मण्यण् आद्येप्र
थमे शिफाभयोः वृक्षजटानक्षत्रविशेषयोः मूलं मूलति मूलप्रतिष्ठायां मूलरोहणेवा इगुपधेतिकः समूहः जालंस्यात् आनायः शणसूत्रादिकृतोरज्जुसं
चः गवाक्षक्षारकावपि नालाय नास्फुटकलीकावपि एनेत्रयोपि जालवाचकाः स्युः जलति जलघातने ज्वलादित्वाण्णः इत्यमूर्ध्व जालंगवाक्षआनायेक्षार

लीलाविलासक्रिययोरुपलाशर्करापिच ९८ शोणितेंभसिकीलालंमूलमाद्येशिफाभयोः जालंसमूहआनायगवाक्षक्षा
रकावपि ९९ शीलंस्वभावेसद्वृत्तेसस्येहेतुकृतेफलम् छर्दिर्नेत्ररुजोः क्लीबसमूहेपटलंनना २००

केदंभहृदयोः जालोनापद्रुमेइति
विश्वः ९९ स्वभावेप्रकृतौ सद्वृत्ते सच्चरिते शीलं शील्यतेनेन शीलसमाधौ घञ्घोवा सस्येधान्ये फलस्यात् हेतुकृतेहेतुनाघटितेपि यथाद्रव्यस्यफलंय
तः तदुक्तं विश्वे फलहेतुसमुत्थेस्यात्फलकेव्युष्टिलाभयोः जातीफलेपिककोलेसस्यबाणाग्रयोरपीति छर्दिर्नेत्ररुजोः गृहाच्छादननेत्ररोगयोः समूहेच
क्लीबपटलंस्यात् नना समूहन्वय पटंविस्तारंलाति लाआदाने आतोनुपेतिकः अथपटलपटेकंच परिच्छदे छर्दिर्योगतिल्के क्लीन्न स्वेदपुनर्ननेति
मेदिनी २००  ॐ  ॐ  ॐ  ॐ  ॐ  ॐ  ॐ  ॐ  ॐ

अथ स्वरूपयो रसातलवक्षस्तलयोः अस्त्रीतलस्यात् तलति तलप्रतिष्ठाया पचाद्यच् तदुक्तमेदिन्या तलस्वरूपे नूर्ध्वेस्त्री क्लीवज्याघातवारणे कानने कार्यबीजेच पुसितालमहीरुहे चपेटेचत्सरा तन्त्रीघातसरत्थेनपाणिनेति तलस्वरूपाधरयो स्वङ्गमुष्टिचपेटयोरिति आमिषे पल पलति पलगतो पचाद्यच् तदुक्तरुद्रे पलम्न्मानसासयोरिति औरवानलेपि पाताले पतति अत्रवा पत्लृगतौ चडिपतिभ्यामाकन् इत्यादुक्त पाताल नागलोके स्याद्विवरे वाड वानलइत्य॰ वस्त्र चेल अथ मेत्रिषु चेल रित्यम चेला चेलमित्यपि चिलति चिल्यतेवा चिलवसेन अन् पक्षवा पाठेतु चेलति चेल्यतेवा चेलृगतौ भज्ञाघणिसृ स्थिः २०१ शकुभि कीर्णे श्वभ्रेगते कुकूल केर्णुमे कूल कुस्तिसंवाकुल केवते कहसेवने केशिरसिवलतिवा वलप्राणने पचाद्यच् तुषानले नातुकुकूल तुषज्वलने निर्णीते निषित

अथ-स्वरूपयोरस्त्रीतलस्याच्चामिषपलम् औरवानलेपिपातालचेलवस्त्रेथमेत्रिषु २०१ कुकूलशकुभि कीर्णेश्वभ्रेनातु तुषानले निर्णीतकेवलमितित्रिलिंगत्वेकहृत्स्नयो २०२ पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षितेत्रिषु प्रवालमंकुरेप्यस्त्री त्रिषुस्थूलंजडेपिच २०३

र्थे केवल जलमित्यर्थ एककृत्स्नयोरपित्रिलिंगस्यात् केवल कुलाल कृत्स्नेतु केवलाघटा तदुक्तमेदिन्या केवलः कुहनेपुमानीति २०२ पर्याप्तिक्षेम पुण्येषु कुशल केशमूमेशाल्नोति शलचलने पचाद्यच् कुशन् स्मानिर्इत्याद्यु॰ शिक्षितेत्रात्र चात्रिषुतद्यथा शिक्षितोशिष्य शिक्षितागौ पर्याप्ति सामर्थ्यमित्यर्थ अंकुरेपिअस्त्री प्रवाल प्रवलति वलप्राणने ज्वलादित्वाण्ण तदुक्तमेदिन्या प्रवालोस्त्री किसलये वीणादण्डेच विद्रुमइति जडेपित्रिषुस्थूल स्थूलयति स्थूलपरिबृंहणे पचाद्यच् स्थलकूटेचानिष्प्रज्ञेपीवरेचान्यलागकमिस्फ॰ २०३

दंतुरउन्नतदंतयुक्ते पुंसि तुंगे करालः करेणालाति यद्वा करमलति अलभूषणादौ कर्मण्यण् करालं दंतुरं तुंगे भीषणे चाभिधेयवत् दंतुरस्तून्नंतरदंते तथोन्नततरो त्रिष्विति मेदिनी चारोदक्षेन्चपेशलः पशंलाति पिशं अवयवे पञ् इत्यायुर्ध्य मूर्खे अर्भकेपि बालः वलति वलप्राणने ज्वलितिङ्गतिणः इत्यायुल्य तदुक्तं निखे बालः कचे शिशौ मूर्खेवन्ही चेरश्वेभपुच्छयोरिति वालोनाकु नले भस्यगजस्यापिच वालधौ वाच्यलिंगोभवेदज्ञेन्हीबेरेपुनपुंसकमित्याकत्वा० चन्लसतृष्णयोःलो ल लोडति लोडृउन्मादे पचाद्यच् डलयोरकत्व लोलश्चलेसतृष्णेचेत्यकन्यत्वात् २०४ इतिलांताः वनारण्यवन्ही दवदावौ दुनोति दवतिवा दुदुपतापे दुगतौवादु न्योरनुपसर्गेइतिणाः पक्षअच् जन्महरौ भवो भवति अच् तदुक्तं मेदिन्यां भवःक्षेमेचसंसारे सत्तायां प्राप्तिजन्मनोरिति मंत्रीसहायश्च प्रधानसखोयोसचि

करालोदंतुरेतुंगेचारोदक्षेन्चपेशलः मूर्खेर्भकेपिवालःस्याल्लोलश्चलसतृष्णयोः २०४ इतिलांताः दवदावौवनारण्यवन्ही० जन्महरौभवौ मंत्रीसहायःसचिवौपतिशाखिनराधवाः २०५ अवयःशैलमेषार्का आज्ञाव्हानाध्वराहवाः भावःसत्तास्वभा वाभिप्रायचेष्टात्मजन्मसु २०६

वोस्तः सह अयते ३ यनिवा अयगतौ इगतौ सचनंपचसवाये सचिवाति वाग त्योदोपतिशाखिनरः धवाः स्युः धव ति धुवति धुनोति धुनातिवा धूञ्धुञ्कंपने धूविधूनने पचाद्यच् तदुक्तं हेमे धव पुमान्नरेधूर्तेपत्यौवृक्षान्तरेपिचेति २०५ शैलमेषार्काः अवयः अवति अव्यतेवा अवरक्षणेइन् तदुक्तं मेदिन्यां अविर्नाथेरवौमेषेशैलेमूषिककंवलइति आज्ञाव्हानाध्वराः हवाः स्युः व्हेञ् संप्रसारणं सत्तादिजन्मांतेषुदृष्टु भावः भावयति पचाद्यच् भावःसत्तास्वभावाभिप्रायचेष्टात्मजन्मसु क्रियालीलापदार्थेषु विभूतिबुधजंतुषित्यक्त० इत्यादावपि आत्माभिन्नस्वभावमान्चेरत्सुमान् २०६ ॥ राम

न को॰
२

उत्पादादिगर्भमोचनतो तेषु पञ्चसु प्रसवाः प्रसूयते षूङ् पाणिप्रसवे अप् प्रसवोगर्भमोचने उत्पादस्यादपत्ये पिफले पिकुसुमेपिचेत्युक्तं॰ उत्पाद उक्तिति अवि श्वासे अपन्हवे अपलापे निकृतौ शाठ्ये निन्हवः न्हुङ् अपनयनेऽप् तदुक्तं विश्वे निन्हवः पुंसि निकृताव विश्वासापलापयोरिति २०७ उत्सेकामर्षयो इच्छा प्रसरे महे उत्सवे एतेषु उत्सवः स्यात् उत्सेकः उद्रेकः प्रसरः वेगः उत्सवो महः उत्सेकइच्छाप्रसवकोपयोरित्युक्तत्वात् प्रभावे सतां च मतिनिश्चये अनुभावः अनुभावयति पच्याद्यच् तदुक्तं विश्वे अनुभावः प्रभावेस्यान्निश्चये भावसूचकइति २०८ जन्महेतु जनकः प्रभवः प्रभवत्यस्मात् अप् आद्योपलब्धये प्रथम ज्ञानाय च स्थानमपि स्थानं वाच कोपि प्रथवः स्यात् आद्योपलब्धिर्यथा कुलाल चक्रं प्रभवोघट इत्यर्थ प्रभवत्यस्मात् तदुक्तं मेदिन्यां प्रभवोजन्म मूलेस्या

स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने अविश्वासेऽपन्हवेपिनिकृतावपिनिन्हवः २०७ उत्सेकामर्षयोरिच्छाप्रसरे महउत्सवः
अनुभावः प्रभावे च सतां च मतिनिश्चये २०८ स्याज्जन्महेतुः प्रभवः स्थाने चाद्योपलब्धये शूद्रायां विप्रतनये शस्त्रे पारशवो मतः
२०९ ध्रुवो भभेदे क्लीबं तु निश्चिते शाश्वते त्रिषु

ज्जन्महेतोपराक्रमे ज्ञानस्य चादिमस्थानइति शूद्रायां विप्रतनये विप्राज्जातो शस्त्रे परस्व-
धाख्ये पारशवः परान् शृणाति शॄ हिंसायां उप्रत्ययस्यादिलस्तत्र स्वार्थेऽण् परस्त्रियां अपत्यम् परस्त्रीपरशुश्चेत्यण् तदुक्तं रभसे पुंसि पारशवः पुमान् परस्त्री
तनेशस्त्रे द्विजाच्छूद्रासुतेपि चेति २०९ भभेदे नक्षत्रभेदे ध्रुवः पुंसि क्लीबं तु निश्चिते शाश्वते नित्ये त्रिषु ध्रुवः ध्रुवति ध्रुवगतौ पच्याद्यच् तदाह विश्वे ध्रुवः
कीले शिवे शंकौ वटे चोत्तानपादजे ध्रुवमूर्वा शल्लपर्ण्योगीतिस्नुक् भेदयोरपि ध्रुवं तु निश्चिते तर्के निश्चले शाश्वते न्यवदिति ॰ ॰ ॰

ज्ञाती आत्मनिक्षेत्रज्ञे रातयो ह्र्योःपुसि स्वः स्वनति स्वन्यतेवा स्वनशब्दे अन्ये भ्योपीतिडः तदुक्तविश्वे स्वःस्यात्पुंस्यात्मनिज्ञातौत्रिष्वात्मीये स्त्रियांधनेइ
ति आत्मीये स्यसंबधिनिस्वंत्रिलिंगं धनेअस्त्रियांस्वः २१० स्त्रीकटीवस्त्रबंधोपि परिपणे राजपुत्रादेर्बंधके वणिजां मूलधनेपि नीवीस्यात् निव्ययति
निवीयतेवा व्येञ्संवरणे गौरीफेरवयोः शिवापार्वतीसृगालयोः शिः शिवमस्त्यस्या. पुंडरीकद्रुमेचापिशिवाझ्झाटामलोषधौ अभयामलकीगौरीक्रोष्टीस
तुफलास्कन्वेतिविश्वः हूंहूं कलहयुग्मयोः स्यात् हूहूं ह्रस्येतिसाधुः तदुक्तंविश्वे हूंहूं र ह्रस्यं कलहे तथामिथुनयुग्मयोरिति चार्थे हूंहू इतिनिर्देशात्पुंस्त्वमपि
२११ द्रव्यासुव्यवसायेषु वित्तप्राणनिश्चयेषु सत्त्वं स्यात् सीदंत्यास्मिन्गुणाद्याः षद्लृविशरणादौ अन्येभ्यइतिसाधुः सत्त्वंद्रव्येगुणेचित्ते व्यवसायस्वभा

स्वोज्ञातावात्मनिस्वंत्रिष्वात्मीयेस्वोस्त्रियांधने २१० स्त्रीकटीवस्त्रबंधेपिनीवीपरिपणेपिच शिवागौरीफेरवयोर्हूहूं कल
हयुग्मयोः २११ द्रव्यासुव्यवसायेषुसत्त्वमस्त्रीतुजंतुषु क्लीबंनपुंसकंषंढेवाच्यलिंगमविक्रमे २१२ इतिवांताः द्वौविशौ
वैश्यमनुजौ द्वौचराभिमरौस्पशौ वयोः पिशाचादावात्मभावे बले प्राणेषु जंतुष्वितिहेमचंद्रः जंतुषु अस्त्रियांसत्वंस्यात् षढे तृतीयप्रकृतौ

नपुंसके क्लीबंस्यात् क्लीबतेक्लीवृ आधार्ष्ट्ये इगुपेतिकः अविक्रमे वाच्यलिंगंस्यात् तदुक्तंरुद्रे अस्त्री नपुंसके क्लीबं वाच्यलिंगमविक्रइति क्लीबाः पौरुषष
ढयोरितिहेमः क्लीबस्यात्षंडकेनस्त्रीवाच्यलिंगस्त्वविक्रम इतिमेदि॰ २१२ इतिवांता. वैश्यमनुजौ द्वौविशौ वर्तेते विशति विशप्रवेशने कर्तरिक्विप् त
दुक्तंविश्वे विट्स्मृतौवैश्यमनुजप्रवेशेषुमनीषिभिरिति चराभिमरौ गूढपुरुयुद्धे स्पशौ स्पशति स्पशबाधनस्पर्शनयोः पचाद्यच् ॐ ॐ

१ पुजेमपायो एतौद्वौ राशीस्त रस्यते रशतिवा रशते सोत्रअन् अचइ आदिनारुपमदय कुलमस्करो अव्ययेयेण वशःस्यात वमति वम्यतेवा तुवमुद्गिरणे
दृभूवनिमय शक् वेशोवेशो कुले वर्येप्रशस्यस्येयर्णपिनेतिहैम २१३ रहः प्रकाशैा एतौद्वौ वीकाशौ विकाशनमस्मिन् काशृदीप्तौ अधिकरणेवञ् विकाशइत्यपि
निकाशोविजनेव्यक्तेइतिविश्वः विकाश पुंसिविजने प्रकाशेसदृशागमेइत्यनेकत्वात् भृतिभोगयो वेतनोपभोगयोः निर्वेश निर्विश्यते घञ् निर्वेशस्तुपु
मा भोगेवेतनेमूर्च्छेनेपिनेत्यक्त॰ कृतांतेयम पुंसि कीनाशः क्षुद्रकर्षकयोरकृपणकृषीवलयोरपित्रिषु कीनाश स्यात् क्लिश्नाति क्लिश्यतेवा क्लिशउपतापेने-
क्लिशेरिच्चोपधायाइतिसाधुः इत्यासूत्रं तदुक्तमेदिन्या कीनाश कर्षकक्षुद्रोपांशुघातिषुवाच्यवत् २१४ पदे व्याजे लक्ष्ये निमित्ते अपदेश भावकर्मणि-

द्वौ राशीपुजेगपायौ द्वौ वशौ कुलमस्करौ २१३ रहः प्रकाशौ वीकाशौ निर्वेशो भृतिभोगयो कृतांतेपुंसिकीनाश-क्षुद्रकर्षकयो
स्त्रिषु २१४ पदेलक्ष्येनिमित्तेपदेश स्यात्कुशमप्सुच दशावस्थानेकविधाप्याशातृष्णापिचायता २१५

वा घञ् तदुक्तविश्वे अप
देश पुमान्लक्ष्येनिमित्तव्यपदेशयोरपीतिविश्व अप्सुच कुशास्यात् कौशेनेतिप्राप्ति अन्येभ्योपीतिड कुश्यतिवा कुशश्लेषणे इगुपधेति क कुपापयतिवा
शेतानुकरणे क तदुक्तविश्वे कुशोरामसुते दर्भे योक्त्रोद्वीपेकुशजलइति अनेकविधा अवस्था दशास्यात् दशति देशादशने मुलविभुजादि दहदशेति-
नेर्दशान्त लोपोच्यापिवा दशाबाल्यादिरूपेत्यर्थ तदुक्तविश्वे दशावस्था दीपवर्त्योर्वस्त्रातेभूम्नियोपितीति आयता दीर्घा तृष्णापि आशा स्यात् आसम
तादश्नुते अशूव्याप्तौ पचाद्यच् तकाराद्दिगप्याशा २१५

अन्च् वशावध्यासुतायोषास्त्रीगवी करिणीषु चेतिमेदिनी ज्ञानबुन्धो ज्ञातरि त्रिषु दृक् स्यात् दृशिरप्रेक्षणे क्विप्
स्त्रीकरिण्यो. योषा हस्तिन्योर्वशा दृष्टि वशकान्तो अन्च् वशावध्यासुतायोषास्त्रीगवीकरिणीषु चेतिमेदिनी साहसिकः विवेकरहितः कर्कशः कृणाति कृञ् हिंसायां बिच् कशति कशशब्दे
तदुक्तं मेदिन्यां दृक्स्त्रियां दर्शनेनेत्रे बुन्धो नब्भिषुवीक्षा क इति मेदिनी साहसिके कामम र्दे कांपिल्ययोरपी
अन्च् करचासौ कशश्च कठोरामसृण्योरपि क्रूरदुःस्पर्शयोरपि तदुक्तं विश्वे कर्कशः परुषेक्रूरे रूपणे निर्दयेदृढे इक्षौ साहसिके कामम र्दे कांपिल्ययोरपी
अन्च् करचासौ कशश्च कठोरामसृण्योरपि क्रूरदुःस्पर्शयोरपि तदुक्तं विश्वे कर्कशः परुषेक्रूरे रूपणे निर्दयेदृढे इक्षौ साहसिके कामम र्दे कांपिल्ययोरपी
ति २१६ प्रसिन्द्धेपि प्रकाशः प्रकाशते प्रकाशनंवा काशृदीप्तौ अन्घञ्वा अपिशब्दात् प्रकाशोतिप्रसिन्द्धस्या त्प्रहासातपयोः स्फुटइतिविश्वः शि-
शावज्ञेच बालिशः बालिंश्यति शोतनू करणे आतइतिकः कुड्मले मुकुले खड्गपिधाने अर्थौघेधनसमूहे दिव्ये शपथभेदे कोशः स्यात् कुशधातोर

प्रकाशोतिप्रसिन्द्धेपिशिशाव
वशास्त्रीकरिणीचस्याद्दृग्ज्ञानेज्ञातरित्रिषु स्यात्कर्कशः साहसिकः कठोरामसृणावपि २१६ प्रकाशोतिप्रसिन्द्धेपिशिशाव
ज्ञेपिबालिशः कोशोस्त्री कुड्मलेखड्गपिधानेर्थौघदिव्ययोः २१७ इतिशांताः क्ररमत्स्यावनिमिषौपुरुषावात्ममानवौ का
कमत्स्यात्स्वगौध्वांक्षौतुतृणवीरुधौ २१८ चघञ्वा २१७ इतिशांता. क्ररमत्स्यौ अनिमिषौ ननिमिषति मिषस्पर्धायां इगुपधेतिकः
नयसमासः आत्ममानवौ पुरुषौ पुरति पुरअग्रगमने पुरःकुषन् तदुक्तंहेमचंद्रे पुरुषश्चात्मनिनरेपुन्नागे इति आत्माक्षेत्रज्ञइत्यर्थः काकमत्स्यात्स्वगौ
मत्स्यानत्ति क्विप् मत्स्याचासौखगश्चबकादिः ध्वांक्षौ ध्वाक्षिघोरवाशितेच पचाद्यच् तदुक्तं विश्वे ध्वांक्षस्तु काकबकयोस्तर्कटेभिक्षुकेगृहइति कार्पासबिज
निष्कासनयंत्र तर्कुट मित्यर्थः तृणवीरुधौ कक्षौ कषति कष्यतेच कषहिंसायां औणादिकः तदुक्तं धरण्यां कक्षः स्मृतोभुजामूले कक्षोरण्येचवीरुधि कक्ष

शफक तृणे पोक्त कक्षकच्छउपान्तन काक्षास्पन्द्रोपदे कान्वारयमेह मेकेषयोः मजरज्जोपरीधानपश्चाद्वलपक्षवइति २१८ प्रगेह अश्वादिरज्जौ र-
श्मौ किरणे अभिषु ईषते इष्यतेवा इषगतिहिंसादर्शनेषु ईषे किचेत्युः अभिगतइषु प्रादिसमास प्रेषणमर्दने प्रैष प्रपूर्वात्‌ईषेघञ् प्रादूहेतिवृद्धि
तदुक्तमजये प्रैष प्रेषणपीडयोरिति प्रैष स्यात्प्रेषणे क्लेशेमर्दनोन्मादयोरपीतिविश्वश्च सहायेपि पक्ष पक्षते पक्ष्यतेवा पक्षपरिग्रहे अत्रपत्र
वा अपिनापतत्र तदुक्तंमेदिन्या पक्षोमासार्द्धके पार्श्वे ग्रेसाध्यविरोधयोः केशादे परतोवृन्दे बलसखिसहाययोः चुल्लीरन्ध्रेपतत्रे च राजकुञ्जरपार्श्व
योरिति शिरोवेष्टकिरीटयोः उष्णीष उष्णमीषतेहिनस्ति ईषमत्यादी इगुपधकि पररूप तदुक्तंविश्वे उष्णीषस्तु शिरोवेष्टे किरीटे लक्षणान्तरइति २१९

अभीषुः प्रग्रहे रश्मौ प्रैष प्रेषणमर्दने पक्ष सहायेप्युष्णीष शिरोवेष्टकिरीटयोः २१९ शुक्रलेमूषिके श्रेष्ठे सुकृते वृषभे वृ
षः द्यूताक्षे सारिफलकेप्याकर्षो थाक्षमिन्द्रिये २२० शुक्रलादि वृषातेषु पञ्चसु वृष वर्षति वृषु श्रेष्ठसेचनेन शुक्रलमतीति शुक्रलो वृषण
तदुक्तंहेमे वृषो धर्मेबली वर्द्दे मूषिका पुराशिभेदयोः श्रेष्ठस्यादुत्तरस्थेच वासिमूषक शुक्रले वहुवीर्ये ।वेति द्यूते अक्षे पाशके सारिफलके शारीणांयूतो
पकरणानांफलकपीठिकातस्या आकर्ष आकृष्यते आकर्षत्यस्मिन्वा कृषविलेखनेघञ् लघूपधगुण तदुक्तंमेदिन्या नाकर्षो द्यूतइन्द्रिये पाशेशारिफले
चेककोदण्डाभ्यासवस्तुनि आकर्षणेपिपुंसिस्यादिति इन्द्रिये अक्ष अक्ष्णोत्यश्यतेवा अनेनात्रवा अक्षूव्याप्तौ अचूघञ्वा तदुक्तंमेदिन्या अक्षोज्ञातार्थंश
कटव्यवहारेषु पाशके रुद्राक्षेन्द्राक्षयोः सर्पेविभीतकतरावपि चक्रे कर्षेपुमानिति अक्षसौवर्चले तुत्थे त्पाशकइवि द्यूतामर्दिके तुपुंसिस्यात् २२०

द्यूतंगो पाशे कर्षेन्चक्रे कर्षे मानभेदे चक्रे रथावयवे व्यवहारे अयव्ये कलिद्रुमे विभीतके अक्षः तदुक्तं विश्वे अक्षः कर्षे तुषच्चक्रे शकट व्यवहारयोः आत्म
शेपाशकेचाक्षतुत्थेसोवर्च्चलेद्रियइति वार्ताजीला करीषाग्निश्चकर्पूः कर्षणं कृष्यते कर्षतिवा कृषविलेखने भावादौ कृषिचमील्यृ कल्याभिधायिनी कर्षूः स्यात्
तदुक्तं रभसे करीषाग्निः पुमान्कर्पूः कुल्यापामपिच स्त्रियामिति कुल्यानदीइत्यर्थः करीषाग्निः शुष्कगोमयानल इत्यर्थः २२१ पुंभावेतत्क्रियायांच पौरुषं पुरुष
स्यकर्मभावोवा तदुक्तं मेदिन्यां पौरुषं पुरुषस्यात्स्यादावेकर्मणितेजसि उर्ध्वविस्तृतदोः पाणिनृमानेत्वभिधेयवदिति अपक्वच विषं न्यात् गरलेपि वेदयद्विविधभ्या
मो इग्गुपेतिकः विषंतुगरलेतोयेइतिविश्वः उपादानेप्यामिषंस्यात् मिषर्धत्र् तदुक्तं मेदिन्यां आमिषंपुन्नपुंसकं भोग्यवस्तुनिसंभोगेप्युत्कोचे पललेपिचलि

नाक्षूतोगे कर्षश्चक्रे व्यवहारे कलिद्रुमे कर्षूर्वार्ताकरीषाग्निः कर्षूः कुल्याभिधायिनी २२१ पुंभावेतत्क्रियायांच पौरुषं विषमप्सु
च उपादानेप्यामिषंस्यादपराधेपि किल्बिषम् २२२ स्याद्वर्षलोकधात्वंशे वत्सरे वर्षमस्त्रियाम् प्रेक्षानृत्येक्षणं प्रज्ञा भिक्षासे-
वार्थना भृतिः २२३

पापेपि किल्बिषं किलक्षेपे किलबुकचेतिसाधुः किल्बिषं पापरोगयोरित्यमरः ० २२२ वृष्टौ मेघवर्षावे अवधातुरक्षणादौ प्रकृतोप-
युक्तो ग्रास्यः लोकधात्वंशे लोकयते लोकधातुर्जंबुद्वीपादीतदंशेभारतादिखंडे वत्सरे वर्षे अस्त्रियां वर्षतिवर्षयतिवापच्चाद्यच् तदुक्तं रभसे वर्षास्त्री भारतादौ च जंबु
द्वीपाब्दवृष्टिषु वर्षाकालेस्त्रियांभूम्नीइति नृत्येक्षणं प्रज्ञेतिचद्वयप्रेक्षासंज्ञं ० प्रेक्षणमनया ईक्षदर्शने गुरोरित्यकारः प्रेक्षाधीनृत्यदर्शयोरित्यजयः प्रेक्षानृत्येक्षणे बुद्धा
नित्युक्तत्वा ० सेवार्थना भृति भिक्षास्यात् अर्थनायामेवेत्यर्थः भृतिर्वेतनमित्यर्थः तदुक्तं विश्वे भिक्षाभृतौ च याञ्चायां सेवाभिक्षितवस्तुनोरिति २२३ राम

शोभापि त्विट् स्यात् त्वेषणमनया सम्पदादि तदुक्तं रभसे कान्तौ वा निरुक्तौ त्विट् स्त्रीति परे वक्ष्यमाणस्य शब्दास्त्रिपु वाच्यलिङ्गाः कार्त्स्न्ये निकृष्टयोः साकल्या धनयोः न्येक्षस्स्यात् नियतानि कृतानि वा अक्षाणि यस्मिन् यस्य वा समासान्त तदुक्तं विश्वे न्यक्ष परशुरामे स्यान्न्यक्षः कार्त्स्न्ये निकृष्टयोरिति मत्यक्षे साक्षात्प्रमिते अधिकृते नियुक्ते अध्यक्ष अक्षेषु व्यवहारेषु अधिकृता अधिकृतान्यक्षाण्यस्येति वा समासान्त इत्यायुत्य अक्षूव्याप्तौ पचाद्यच् अभेम्पिणि रेफे ह अनिकृष्टे अमसृणे रूक्ष रूक्षयति रूक्षपारुष्ये अच् २२४ इति धाता रविश्वेतच्छदौ हंसौ हन्ति गच्छति हन हिंसागत्योः पचाद्यच् निपातनेन वर्णागमात्स्यस तदुक्तं विश्वे हंसो विहगभेदे स्यादर्के निर्लोभनृपतौ हयान्तरे योगिमन्त्रादिभेदेषु परमात्मन्यमत्सरे निर्लोभनृपतौ हंस शरीरमरुदन्तर इति सूर्यवह्नी विभावसू विभाप्रभावसुप

त्विट् शोभापि त्रिषु परे न्यक्षं कार्त्स्न्ये निकृष्टयोः प्रत्यक्षेऽधिकृतेऽध्यक्षो रूक्षस्त्वप्रेम्ण्यचिक्कणे २२४ इति धाता रविश्वेतच्छदौ हंसौ सूर्यवह्नी विभावसू वत्सौ तर्णकवर्षौ द्वौ सारङ्गाश्च दिवौकसः २२५ शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे २२६

नमस्य विभावसु पुमान् सूर्ये हार भेदे च पावके इत्युक्तत्वा• तर्णकवत्सौ मो वत्सपुत्रौ द्वौ वत्सौ वसत्यस्मिन् वस निवासे सप्रत्यय संसीतितः तदुक्तं मेदिन्यां वत्स पुत्रादि वर्षयोः तर्णके नोरसि क्लीबमिति दिवौकस सारङ्ग शाकल्यादिः चातक देवाश्च सारङ्गायति गै शब्दे गोपाद्यक् तदुक्तं हरूप कोशे दिवौकाश्च दिवौकाश्च पुंसि देवे च चातक इति २२५ शृङ्गारादौ शृङ्गार वीर करुणादौ नव विधे विषगरले वीर्ये तेजसि गुणे स्वादु १ स्नादौ रागे द्रवे रस रस्यते रस आस्वादने कर्मणि घञ् तदुक्तं मेदिन्यां रसो गन्धरसे स्यादे तिक्तादौ विषरागयोः शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे इति उत्तंसावतंसौ उत्तंस्यावतंस्यते द्वौ कर्णपूरे कर्णाभरणे शेखरे च शिरोभूषणे वर्तेते तंसि भूषणे यस्मात् घञ् वा तदुक्तं विश्वे उत्तंसः कर्णपूरेऽपि शेखरे चावतंसवदिति २२६ यम

दिवभेदेनलेरश्मौवसुः वसतिसर्वत्रोष्यतेनेनवा वसनिवासेउप्रत्ययःरत्नेधनेन्चवसुक्लीब तदुक्तंमेदिन्या वसुर्नादेवभेदाग्निभावेऋषकराजसु क्लीबंस्वादूयोषधेश्या
लेरेरत्नमधुरेचित्रिष्विति विंष्णोन्ववेधाः स्यात् विधतिविधविधाने असुन् इत्यासू॰ चातविरंचापि तदुक्तंरभसे वेधाः पुंसिहृषीकेशेवुधेचपरमेष्ठिनि हिताशंसाहि
दधूयो आशी: स्त्रियां आशास्ते आङ शासुहिंसायां कर्तशिक्विप्संपदादिर्वाङ्त्याद्यू॰ हितस्याशंसा २२७ प्रार्थनोत्सुक्ये याच्ञायुक्ते उभेलालसे लालसनं
ल॰दीसो यंङ॰ तादकारः तदाह तृणातिरेकेचलालसा लालसोत्सुक्यतृष्णातिरेकयाचासुचद्वयोरितिमेदिन्यां चौर्यादि कर्मच हिंसास्यात् हिंसनं हिंसिहिं
सायां अकारः चान्वधेपि आदिनावृत्तिनाशादि कर्म अप्स्वापि प्रसूः प्रसूते पूङ प्रसवे सत्सूङितिक्विप् आश्वावडवेत्यर्थः तदुक्तं मेदिन्या प्रसूरश्वाजनन्यो

देवभेदेनलेरश्मौवसूरत्नेधनेवसु विष्णोन्चवेधाःस्त्रीत्वाशीर्हिताशंसाहिदंधूयोः २२७ लासेप्रार्थनोत्सुक्येहिंसाचौर्यादिक
र्मच प्रसूरश्वापिभूद्यावौरोदस्यौरोदसीन्चते २२८ ज्वालाभासौनपुंस्यर्चिर्ज्योतिर्भद्योतदृष्टिषु अश्वकदलीवीरुधोःस्त्रियामितिभूद्यावो

रोदसी रोदस्यौ स्यातां रोदितिसर्वसस्मिन् रुदिर अश्रुमोचने असुन् गौरादित्वा स्यक्षेङीष् रोदसी रोदस्यौचतिसांतद्विवचनांतस्यातामेकयोक्त्याभूमिद्यावो-
द्वे अप्युच्येतइत्यर्थः रोदसीत्यव्ययमप्यस्ति यदाह द्यावापृथिव्यौरोदस्यौरोदसीरोदसीतिचेति प्रथगपिप्रयोगोस्ति तदुक्तंविश्वे रोदश्चरोदसीचापिदिविभू
मौपृथक्पृथक् सहप्रयोगेप्यनयोरोदस्यावपिरोदसीति २२८ ज्वालाभासो कोलदास्यौः अर्चिः अर्च्यते अर्चपूजायां इसिः नपुंसि भद्योतदृष्टिषु ताराप्र
काशकनीनिकामध्यभागेषु ज्योतिः द्योतते द्योतन वानेन द्युतदीप्तौ इसिः गुणः आदेश्वजः ज्योतिरग्नौदिवाकरे इत्यन्तत्वात्

पापापराधयोरागः इणआगः अपराधेन्वेत्यसुन् खगबाल्यादिनोः वयः आदिनायौवनादि वयः वयगतौ असुन् तदुक्तं विश्वे वयः पक्षिणि बाल्यादौ वयो वनमाऽ
कइति २२९ तेजः पुरीषयो वर्च वर्चते वर्चदीप्तौ असुन् तदुक्तं मेदिन्या वर्चोनपुंसकं रूपे विष्ठायामपि तेजसि पुंसि चन्द्रस्य तनय इति उत्सवे तेजसि महः
मह्यते महपूजायां असुन् गुणे गुणभेदे स्त्रीपुष्पे आर्तवे रजः रज्यतेनेन रञ्जरागे असुन् रजः क्लीबगुणान्तरे आर्तवेपरागेरेणु मात्रेच दस्यतइत्यक्त
त्वात् अदंतोपि धरण्यैकः रजोयरजसा सार्द्धं स्त्रीपुष्पगुणधूलिष्वित्यजयः राहौध्वान्तेगुणेतमः तम्यतेनेन तमुग्लानौ असुन् तमोध्वांतेगुणेशोके क्लीबवा
नाविधुंतुदे २३० पद्येऽभिलाषेच छंदः चंद्यतेनेन चदिआल्हादेनेदीप्तौच असुन् चस्यक पद्येअनुष्टुभादावित्यर्थः छंदः पद्येनभेदेच्छेस्वैरचाराभिलाषयोरि-

पापापराधयोरागः खगबाल्यादिनोर्वयः २२९ तेजः पुरीषयोर्वर्चो महस्तूत्सवतेजसोः रजोगुणेचस्त्रीपुष्पेराहौध्वान्तेगुणेतमः
२३० छंदः पद्येभिलाषेचतपः कृच्छ्रादिकर्मच सहोबलसहामार्गे नभः खंश्रावणोनभाः २३१ ओकः सद्माश्रयश्चौकाः

त्यक्तत्वात् कृच्छ्रादिकर्मच तपः तप्यतेनेन तपसंतापे असुन् आदिनाचान्द्रायणादि तदुक्तं रभसे तपोलोकान्तरेपिस्यात् चान्द्रायणादौधर्मेचपुमान् शिशिरमाघयो
रिति बलसहः क्लीबमार्गे सहाः सहते सत्यतेनेनात्रवा षहमर्षणे असुन् तदुक्तं मेदिन्या सहोबलेज्योतिषिचपुंसिहेमंतमार्गयोरिति खं नभः नभ्यतेनेनात्रवा
णभहिंसायां असुन् तदुक्तं विश्वे नभोव्योम्निनभोमेघेश्रावणेचपतद्ग्रहे घ्राणेमृणालसूत्रेच वर्षासुचनभाः स्मृतइति २३१ सद्म गृहं ओकः स्यात् उचसमवाये
सुन् न्यङ्क्वादिः अदंतोपि ओकउचः कइतिनिपातनात् आश्रयः ओकाः तदुक्तं हैमे ओकास्त्वाश्रयमात्रेच मंदिरेच नपुंसकमिति श्रीसिवाराममसन्न

क्षारं पयः पीयते पायतेवा पाङ्पाने पयगतौच असुन् पयोंबुचस्यात् उब्जत्यनेन उज आर्जवे असुनिबलोपः गुणः दीप्तौबले ओजः ओजोदीप्तावबष्टंभेप्रकाशा
बलयोरपितिउक्तत्वा • यश्चाह ओजोदीप्तिप्रकाशयोः अवष्टंभेबलेधातुतेजसीतिहेमः इंद्रिये निम्नगारये स्रोतः स्रुवतिस्रुवगतौ असुन स्रोतोंबुवेगइंद्रियेइत्य
न्क • २३२ प्रभावे दीप्तौ बले शुक्रेच तेजः तेजयति तेज्यतेनेनवा तिजनिशातने असुनिगुणः तेजोदीप्तौप्रभावेचस्यात्पराक्रमेरेतसीरित्यक्तत्वात् यच्चाह ते
जोधाम्निपराक्रमइति अतः परंसांत समाप्तिपर्यंततावाच्यलिंगाः वक्ष्यमाणाः स्त्रिलिंगाः विद्वान ज्ञाता स्यात् वेत्ति विदज्ञाने विदनपंडितः शतृस्थाने वसुरादे
शः पक्षे तदुक्तविश्वे विदंनात्मविदि प्राज्ञेपंडितेचाभिधेयवदितित्वात् आत्मज्ञोपि वीभत्सः विभत्सते वीभत्स्यतेनेनवा वधेः सन्नंतादच् तदुक्तंहेमे वीभ

पयः क्षीरं पयोंबुच ओजोदीप्तौबले स्रोतइंद्रियेनिम्नगारये २३२ तेजः प्रभावेदीप्तौच बलेशुक्रेप्यतस्त्रिषु विद्वान् विदश्चवी
भत्सोहिंस्रोप्यतिशयेत्वमी २३३ वृद्धप्रशस्ययोर्ज्यायान् कनीयांस्तु युवाल्पयोः वरीयांस्तूरुवरयोः साधीयान् साधुबाढ
योः २३४ इतिसांताः

त्सोविकृतेक्रूरेरसपार्थेघृणात्मनीति हिंस्रः क्रूरः हिसिहिंसायांरक् २३३ अमीवक्ष्यमाणाज्याय आदयः न्वाधीयः
पर्यंताः सांताद्वृद्धादीनां वाढ पर्यंतानां अतिशयज्ञेयाः वृद्धप्रशस्ययोः अतिशयेनवृद्धप्रशस्यो ज्यायान् उभयोस्थाने ज्यादेशः अतिशयज्येष्ठः
युवाल्पयोः कनीयान् अतिशयेन ऊरुवरयोः वरीयान् अतिशयेनवरिष्ठः साधुवाढयोः साधीयान् अतिशयनइष्ठनइयसुन् भ्यांइमसर्वेसाधवः
अतिशयितं वाढंसाधीयः २३४ इतिसांताः

दलेपिवर्ह वर्हति वृहहवेन्हो अनइत्याद्युत्य अपिशब्दात् पिछोपि तदुक्तं हेमे वर्ह पर्णोपरी वोरकलापइति निर्वधोपरागार्कोदय ग्रहा ग्राहातिग्रहउपादले
अप अनूवा निर्वध आग्रहविशेष उपरागश्चंद्रार्कग्रहणमित्यर्थ ग्रहोनिग्रह निर्वधग्रहणेषुरणोद्यमे सूर्यादौपूतनादोन्वेसोहिकेयोपरागेथाशितिविश्व
हारि आपीडे शिरोभूषणे कायरसेकधि नद्भ्यरसे नागदंतके भितिस्कंकीलके निव्यूह निर्व्यूह नव्यूहकोशिकोधातु इगुपतिक तदुक्तं विश्वे निर्व्यूह शे-
खरेद्वारे निर्यासेनागदंतकइति २२५ तुलासुत्र आरंवादिरश्मेो मग्राह मग्रहोपिन प्रेखणिन्नारश्मि च वाधनपक्षेग्रहदइत्यथ मग्रत्यते मग्रहस्तुतुलासूत्रे वृषा
दीनानवधने हयादिरश्मेोरश्मोन्च सुवर्णस्यनपादपइतिविश्व पत्नीपरिजनादानमूलशापा परिग्रह परिगृह्यते परिगृह्णातिवा अनग्रहेत्यप परिजनादानेतु

दलेपिवर्ह निर्वधोपरागार्कोदयोग्रहा द्वार्यापीडे कायरसे निर्व्यूहोनागदंतके २२५ तुलासूत्रेश्वादिरश्मेोप्रग्राह प्रग्रहोपिच प
त्नीपरिजनादानमूलशापा परिग्रहा २२६ दारेषुचगृहा श्रोण्यामप्यारोहोवरस्त्रियां व्यूहोवृंदेप्यहिर्वृत्रे परिवारस्त्रीकारौज्ञेयौ शाप

शपथइत्यर्थ तदुक्तं अजये परिग्रह कलत्रेचसुनस्वीकारयोरपि शपथेपरिवोरेचराहुवक्रस्कंधास्करइति २२६ दारेषु कलत्रे गृहा गृह्णाति धान्यादिगृहता
स्थ्यानुगृहादारा इत्याद्युत्यत्वात् सद्यानिग्रह पुंभूम्नि गृहगृहाश्चपुंभूम्निककत्रेपिच सद्यानिइत्याग्र॰ वरस्त्रियां श्रोण्यामपि कट्यामपि अरोह अपिशब्दा
त् गजारोह आरुह्यते आरोहोदैर्घ्यउछ्रायेरत्रीकट्यामानभिद्यपि आरोहणेगजारोहइतिहेमचंद्र वृंदेपि व्यूह व्यूह्यते ऊहवितर्के इगुपतिक व्यूह स्याह
लिविन्यासेनिर्माणेवृंदतर्कयोरितिविश्व वृत्रेपि अहि आहंति हनहिंसागत्यो आङोन्हस्वइणप्रत्ययोह्रितत् अहिर्वृत्रासुरसर्पद्रइतिविश्व

अग्नींहूर्का. तमोपहा तमोपहंति अपेक्लेशतमसोइतिडः तदुक्तंविश्वे तमोपहः सहस्रांशुमृगांकाजिनवन्हिष्विति २३७ परिच्छदे नृपार्हेर्थेराजयोग्यद्र-
व्ये परिबर्हः परिबर्हते परिवर्त्यतेवा बर्हप्राधान्ये अच्घञ्वा तदुक्तंविश्वे परिबर्हस्तुराजार्हवस्तुन्यपिपरिच्छदइति परिबर्हःपरिवारइत्यर्थः इतिहान्ताः
इत परेअनेकार्था वक्ष्यमाणाआङादिशब्दाअव्ययाउच्यते इषदर्थे आपिंगलईषत्पिंगलः अभिव्याप्तौ आजन्माव्यभिचारी सीमार्थे पाडुमर्यादिकृत्यइ-
ति आपाडु धातुयोगजे क्रियायोगजेर्थे यथाआहरति आक्रामतीत्यादि आङित्यव्ययईषदादिपदचतुष्टये वर्त्ततेतस्यङ कोऽनुबंधः २३८ स्मृतौ स्मरणे वा
क्ये वाक्यपूरणेच थ. प्रगृह्यः आइतिनिपात स स्यात् आप्नोति किपिपृषोदरादित्वात्पलोपः स्मृतौयथा आएवंकिलतत् वाक्येतुआएवंमन्यसे तदुक्तंमे-

ष्यग्नींहूर्कास्तमोपहाः २३७ परिच्छदेनृपार्हेर्थेपरिबर्हो । इतिहांताः । ऽव्ययाःपरे आङीषदर्थेऽभिव्याप्तौसीमार्थेधातुयो
गजे २३८ आप्रगृह्यःस्मृतौवाक्येऽप्यास्तुस्यात्कोपपीडयोः पापकुत्सेषुदर्थेकुधिङ्निर्भर्त्सननिंदयोः २३९ दिन्यां आप्रगृह्यस्मृ

तौ। वाक्येऽनुकपायासमुच्चयरति कोपपीडयो आ इतिनिपात वर्त्तते आस्ते आउपवेशने प्रागवत्साधु. पीडायांयथा आ शीत कोपेतु आ. पापकिंजल्पसि
आ स्मरणेऽपाकरणेकोपसंतापयोरपीत्यक्तत्वात् पापकुत्सेषदर्थेपापाद्यार्थत्रये कुशब्दः कवति कूयतेवा कुङ् शब्दे डुप्रत्ययः तदुक्तंविश्वे कुकुत्सायांनि
वारणइंकुपापीयसि कुत्सायामिषदर्थेनिवारणइतिमेदिनीकारश्च पापेकुकर्म कुत्सायाकापुरुषः इषदर्थे कवोष्णमित्यादि निर्भर्त्सननिंदयोः धिक्शब्दः
धक्कयति धक्कनाशने बाहुलकात्डिकः अपकारशब्देर्पर्यायोत्पादनंभर्त्सनमित्यर्थः दोषकीर्तनंनिंदेत्यर्थः २३९

अन्वाचयसमाहारेतरेतरसमुच्चये चशब्दः स्यात् चदते चदिआल्हादे अन्येभ्योपीतिड तत्रोदाहरण भिक्षामटगांचानय समाहारेसमूहे पटश्चपटश्च-
घटपट मिलितानामन्वये इतरेतरयोगे हरिश्चहरश्चहरिहरौ परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयेसमुच्चये मातरंपितरंभजस्वेपि चपादपूर-
णेपक्षांतरेहेतौविनिश्चयइतित्रिकांडकोश आशीः क्षेमपुण्यादौ स्वस्तिस्यात् असधातो क्तिच् स्वस्तिमंगलाशीर्वादपापनिर्णेजनाविष्वितिभागुरि
तत्रोदाहरण दातृ स्वस्त्यस्तु क्षेमेउपद्रवाभावे स्वस्त्यानरपुण्ये स्वस्तिमत स्वर्गच्छत तदुक्तमेदिन्या स्वस्विस्यान्मंगलेपुण्येप्याशंसायामपिक्वचि-
देत्यादिग्रहण प्रकर्षेलंघनेपि अतिअततिइन्प्रत्यय तत्रोदाहरण अत्युत्तमोविष्णुदासः तदुक्तविश्वे अतिशब्द प्रशंसायांप्रकर्षेलंघनेपिचेतिविश्व-

चान्वाचयसमाहारेतरेतरसमुच्चये स्वस्त्याशीःक्षेमपुण्यादौप्रकर्षेलंघनेप्यति २५० स्वित्प्रश्नेचवितर्केचतुस्याद्भेदेऽवधार
णे सकृत्सहैकवारेचाप्याराद्दूरसमीपयो २५१ लंघनेतु अतिवेलजलधितल २५० प्रश्ने वितर्केच स्वित् स्यात् स्वृ गुणेति इणगनौकि-
प् स्वित्प्रश्नेचवितर्केचतथैवपादपूरणइत्युक्तः प्रश्नेउदाहरण किंस्वित्कुशलमस्ति वितर्के ब्रह्मविष्णुशिवानामध्ये आद्योच्चारणविष्णोराहोस्विदन्यतर-
स्य तदुक्तमेदिन्या स्वित्प्रश्नेचवितर्केचतथैवपादपूरणइति भेदेअवधारणे तुशब्द स्यात् तुदति तुदव्यथने डुप्रत्यय तुपादपूरणेभेदेसमुच्चयेऽवधा-
रणे पक्षांतरेनियोगेचप्रशंसायांविनिग्रहइतिमेदिनी सहार्थे एकवारेच सकृच्छब्द सकृदित्यर्थे सकृद्भोजनंकुरु सकृदपिगोवावर्यादत्तपिंडोभव
प्रकृत्सहैकवारयोरित्यजय दूरसमीपयो आरात् तत्रउदाहरण यथा आराच्छूद्रो सदावसेत् समीपेतु सरवायस्थापयेदारात् आङ्पूर्वात्रादा-
नेइत्यत वा ... राति २५१

प्रतीच्यां पश्चिमदिशि चरमेत्ये पश्चाच्छदः पश्चादित्यनेनावरस्यसप्तमीपंचमीप्रथमातस्यनिपात अवरस्यपश्चभावः आतिप्रत्यय तत्रोदाहरण ति
ष्ठस्कंदरिमह्नेहेपश्चादस्तगतोरवि पश्चिमेवयसिप्रामेविष्णोराराधनकुरु अत्यर्थविकल्पयो उतशब्द ऊयतेस्म उङ्शब्देक्त अप्यर्थ समुच्चयार्थ. उ-
तशब्देयथा उतगागंउत्तस्वर्ग विष्णरुतशिव. सेव्य. उतप्रश्नवितर्कयोः समुच्चयेविकल्पेचेतिहेम. उतापीद्वोन्चवाटार्थौ इत्यजय पुनरर्थे पौनः पुन्येस
हार्थेन्च शश्वत्स्यात् शशाति शशप्लुतगतो शश्वत्सहसहार्थयोरितिजय. तत्रयथा शश्वद्विष्णस्मरद्वासीपुत्रोभागततसप्तइति शिष्ये.शश्वद्गतोद्रो
ण. कुरुपांडवसद्मकेश्चेत्यादि प्रत्यक्षतुल्ययोः साक्षाच्छब्दः सहाक्षेणसाक्षस्तमतति क्विप् साक्षात्तुल्यसमक्षयोरित्यजय तत्रोदाह० साक्षाद्दृष्टो

**प्रतीच्यांन्चरमेपश्चादुताप्यर्थविकल्पयोः पुनःसहार्थयोःशश्वत्साक्षात्प्रत्यक्षतुल्ययोः २४२ खेदानुकंपासंतोषविस्म
यामंत्रणेबत हंतहर्षेनुकंपायांवाक्यारंभविषादयोः २४३**

मयाहरिः तदात्मत्वेनगच्छन्सन्प्राप्तोनिर्वाणजंस्करव साक्षाल्लक्ष्मीरियवधु-
संसारगह्वरेतिष्ठन्निर्मुक्तस्वर्गजस्करवं साक्षात्तुल्यसमक्षयोरित्यजय. २४२ खेदादिविस्मयामंत्रणातेषुपचस्क बतशब्दा वयगतोक्त बतखेदेनु
कंपायाहर्षेसबोधनेभ्दुतइतिदंत्योष्यादावजय. बतेतियथा अहोबतमहत्कष्टंपीतहालाहलविषं बतसंसारतापतप्तोसि बतपतिसुखचुबनलंबिता-
ननसखी अहोममसुदेबालाश्वमतकुर्वतवैबत एहिहजेबतममलेख्यंप्रापय हर्षे अनुकंपायांवाक्यारंभविषादयो हतशब्द तत्रउदाह० पूर्वस्मा
द्दंतमेप्राप्तंशतदीनारकनिधि हंतदीनोरक्षितव्य प्राणैरपिधनैरपि हंततेकथयिष्यामि चरमेविषादेतु हंतजातमजातारेप्रथमेनत्वयारिणा हंतदानेऽनु-
कंपायावाक्यारंभविषादयोः निश्चयेन्चप्रमोदेचेतिहेम. २४३

ता   पुग्न्यसदृशे प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतश्च प्रतिशब्दः प्रातिप्रयतेवा प्रापूरणे प्रथप्ररव्याने बाहुल्कात्डति प्रतिशब्दोयथा शिवप्रतिविष्णुः अभिमन्युप्र
तिपरीक्षित् व्यासुभिच्छावीप्सातस्यायथा ब्राह्मणब्राह्मणप्रति ददातीत्यर्थं लक्षणायायथा दृक्षशारवाप्रतिविद्योतनेविद्युत् आदिनादत्थंभूतारव्यानादौ प्रयोग
तइति शिष्टप्रयागानुसारेणप्रतिशाब्दस्यप्रक्षेप प्रतित्थंभूतभागयो. प्रतिदानेप्रतिनिधौवीप्सालक्षणयोरपीतिहेम   हेतुप्रकरणप्रकाशादिसमासिषुइतिशब्द
एति अयतिवा क्तिन् तदुक्तंविश्वे इतिप्रकरणेहेतौप्रकाशादिसमासिषु   निदर्शनेप्रकारेस्यादनुकर्षेन्तसततमिति हेत्वर्थेइतिशब्दोयथा घालिईतीतिस्कुमी
वोन्रुष्यमृकपलायते प्रकरणेप्रकारे विप्रक्षत्रियविद्शूद्राइतिभेदा इतिपाणिनि   पाणिनिशब्दोलोकेप्रकाशतेइत्यर्थ प्रकर्षइतिपाठ आदिनाएवंक्रमादनुना

प्रति प्रतिनिधौवीप्सालक्षणादौप्रयोगत   इतिहेतुप्रकरणप्रकाशादिसमासिषु २४४ प्राच्यापुरस्तात्प्रथमेपुरार्थेग्रतइत्यपि
यावत्तावच्चसाकल्येवधौमानेवधारणे २४५ रददत्यवोधि समाप्तौअपसानेयथा धर्मपाचरेदिति तदुक्तंहेमे इतिस्वरूपेसान्निध्येविवक्षानियमेपि
च हेतौप्रकारप्रत्यक्षप्रकर्षेष्ववधारणे एवमर्थेसमासौस्यादिति २४४ प्राच्या प्रथमे पुरार्थे अग्रेइत्यग्रतः पुरस्तात् पूर्वस्मिन् अस्तातिप्रत्ययेपूर्वशब्दस्यपु
रादेश प्रथमेयथापुरस्तान्दुक्ते पुरार्थेअतीते यथापुरस्ताद्वासोभूत अग्रतोग्रे पुरस्तात् दृश्यतेरवि. पुरस्तात्पुरस्तकथद्वाग्रतइत्यर्थः अपिप्राच्याद्यर्थे साक-
ल्यादिन्तुष्के यावत्तावच्चदौ तदिता इति बहुवचनेनानुक्तज्ञापनात्डावतुरितिअमरटिप्पणे यावद्दत्तुतावद्भुक्तं अपधौ सूत्रच्छारवायावत्प्रकाठ मानेपरिमा-
णे यावत्स्वर्णतावद्रजत अवधारणेनिश्चये श्रोत्रियतावद्यमत्रयस्य तदुक्तंमेदिन्या यावत्कात्स्न्येवधारणे प्रशासायापरिच्छेदेमानाधिकारसंभ्रमे पक्षान्तरे चेति
२४५

अ गोअयइत्यसौशब्दोमंगलादिषुवर्त्तते अर्थउपायाल्मायांबाहुलकात्डो अथेत्यत्रडेपृषोदरादित्वात्रलोप· मंगलेयथा अथातोब्रह्मजिज्ञासा अनंतरे स्नानंकु-
त्वाथभुञ्जीत आरंभे अथशब्दानुशासनंलिख्यते प्रश्ने अथवक्तुंसमर्थोसि कार्त्स्न्ये अथधातून्ब्रूमः तदुक्तंहेमे अथोअथसमुच्चये मंगलेसंशयारंभा
धिकारानंतरेषुच अन्वादेशेप्रतिज्ञायांप्रश्नसाकल्ययोरपीति निरर्थकाविध्यो· वृथाशब्दः वृणोति वृणीतेवा वृञ्वरणे निरर्थके वृथादुग्धोन ड्वान् अविधौ
विधिहीने वृथादान वृञोबाहुलकात्थाक् तदुक्तंविश्वे वृथानिष्कारणेवंध्येवृथास्याद्विधिवर्जितइति अनेकोभयार्थयो· नानाशब्दः स्यात् नेतिनाना
निनञ्थ्याइति आनाञ् नानाशब्दोविनार्थेपितथानेकोभयार्थयो· स्त्यक्तत्वात् अनेकार्थे नानाविधफलं उभयार्थे नानाविधनगृण्हीयात् २४६ पृच्छायां

मंगलानंतरारंभप्रश्नकार्त्स्न्येष्वथोअथ वृथानिरर्थकाविध्योर्नानानेकोभयार्थयोः २४६ नुपृच्छायांविकल्पेचपश्चात्सा-
दृश्ययोरनु प्रश्नावधारणानुज्ञानुनयामंत्रणेननु २४७ विकल्पेच नुनुदति नौतिवा णुदप्रेरणे णुस्तुतौवा डुप्रत्ययः पृच्छायां कोनुकु-
र्यात् विकल्पे अयंघटोनुपटोनु तदुक्तंविश्वे नुस्यात्प्रश्नेविकल्पार्थेप्यतीतानुनयार्थयोरिति पश्चात्सादृश्ययोरनुस्यात् अनिति अनप्राणने बाहुलकाडुः पश्चा
दर्थे मातरमनुयाति सादृश्ये कृष्णमनुकरोति तदुक्तंहेमे अनुलक्षणवीप्सेत्थंभूतभागेषुसन्निधौ सादृश्यायामहीनेषुपश्चादर्थसहाययोरिति अनुहीने-
सहार्थेनपश्चात्सादृश्ययोरपि आयामेचसमीपेचलक्षणादावनुक्रमादितिविश्वश्च प्रश्नादिष्वामंत्रणांतेषुपंचसु ननुशब्दः ननुदति नुदप्रेरणे प्रश्ने ननुकिं-
यानीत अवधारणे नन्विदंगौः अनुज्ञायां नन्वोदनंकुरु अनुनये सात्वने ननुकोपसुंचदयांकुरु आमंत्रणे संबोधने यथा ननुभोब्रह्मन् तदुक्तंहेमे नन्वाक्षे
पेपरिप्रश्नेप्रत्युक्तावप्यवधारणे वाक्यारंभेप्यनुनयामंत्रणानुज्ञयोरपीति २४७

गर्हादिसंभावनादिषु पचसु अपिशब्दः स्यात् अपियति पिगतौ क्विप् आगमोनित्य तदुक्तं विश्वे अपिसंभावनाप्रश्नशंकागर्हासमुच्चये तथायुक्तपदार्थेनकामचारक्रियासुचेति सत्त्वयथा अपिजल्पसिपतिरडे समुच्चये विष्णुमजशिवमपि प्रश्ने अपिजानासिकिमारविल्हलास्मित्यवागमे शंकायां अपिमेसरनी भवत् संभावनायां अपिकामजयेत्स्थाणु उपमायांविकल्पे वाशब्दः वाति वागत्यादौ तदुक्तंविश्वे वास्याद्विकल्पोपमयोरेवार्थेचसमुच्चय इति आशी वियोवासकुन्दः विकल्पेयथा शिववायदिवाविष्णुयोजानातिसपण्डित अर्धे जुगुप्सिते सामि चामसात्वप्रयोगअनदः अर्धे सामिसमितास्त्री जुगुप्सिते यथा सामिकृतमकल्याणकारि २४८ सहसमीपे अमानमातिमा मानेक्विप् सहार्थेयथा पुत्रैरमाभुङ्क्ते समीपेतु अमात्य अमाभवइत्यर्थेत्यप् समीपवर्ती

गर्हासमुच्चयप्रश्नशंकासंभावनास्वपि उपमायांविकल्पेवासामित्वर्धेजुगुप्सिते ४८ अमासहसमीपेचकंवारिणिचमूर्धनि इवेत्थमर्थयोरेवनूनंतर्केर्थनिश्चये २४९ तूष्णीमर्थेसुखेजोष त्यर्थं वारिणि मूर्धनिच कं कम्यते कमुकान्तौ णिङ् भावेविच् तदुक्तंमेदिन्यां कंशिरः सुखवारिष्विति इवेत्थमर्थयो एवशब्दः स्वेयथा इवार्थेयथा अग्निरेवमाणवकः अग्निरिवेत्यर्थः इत्थमर्थप्रकारे एवंवादिनिदेवर्षौ एतप्रकारापमयोरंगीकारेऽवधारणेइतिधरणिहेमचन्द्रौ वमतेर्विच् तर्के नूनशब्दः स्यात् नुवास्तुत्यानमतिविच् नूनमयातियज्वनामिय अर्थनिश्चयेतु रुद्रेपिनूनशरणप्रपन्ने तदुक्तंविश्वे नूनंनिश्चिततर्कयोरिति २४९ तूष्णीमर्थे मौने सुखेच जोषशब्दः स्यात् जुष्यते जुषप्रीतौ बाहुलकात्दम् जोषसुखेप्रशंसायांतूष्णीलघनयोरपीत्युक्तत्वात् जोषस्थितास्म सुखेतु जोषंवैभोजनंकुरु॥

पृच्छायां जुगुप्सनेच किंशब्दः चोरस्यचौर्यंकिमुतभणितं जुगुप्सनेतु सकिंराजायः प्रजानरक्षति कूयते कुशब्दे बाहुलकात्डिम् तदुक्तंविश्वे किंवित-
र्केपरिप्रश्नेक्षेपनिंदाप्रकारयोरिति किंकुत्सायांचतर्केचनिषेधप्रश्नयोरपीत्यः॰ प्राकाश्ये प्रसिध्यां नामशब्दः सयथा मुकुंद भजतुनामसुक्तिदातृत्वात् सं
भाव्येकथंचिदर्थे भविष्यतिगुद्धनाम क्रोधेनामशब्दस्त नामयति नाम्यतेवा णमप्रव्हत्वे ममवैरीरावणोनामपापः उपगमे सद्देषांगीकारे सयथा शत्रोः
सकाशाद्गृण्हातिनाम कुत्सने यथा कोनामाय प्रलपत्तिमेविशतः सभायां तदुक्तंमेदिन्यां नामकोपेभ्युपगमेविस्मयास्मरणेपिच संभाव्यकुत्साप्राकाश्यवि

## किंपृच्छायांजुगुप्सने नामप्राकाश्यसंभाव्यक्रोधोपगमकुत्सने २५० अलंभू
## षणपर्याप्तिशक्तिवारणवाचकं हुंवितर्केपरिप्रश्नेसमयांतिकमध्ययोः २५१

कल्पेप्यपिदृश्यते २५० भूषणस्य अलंकारस्य पर्याप्ति परिपूर्णतायां शक्तेःसामर्थ्यस्य वारणस्यनिवारणस्यच वाचकं अलंस्यात् अलति अलभूषणादौ बा
हुलकादम् तदुक्तंविश्वे अलंभूषणपर्याप्तिवारणेषुनिरर्थके अलशक्तोचनिर्दिष्टमिति तत्रेत्थं अलंकृतवती अलंशिशोःस्तन्यं सचअलंभुक्तवान् अलंसमो
रावणाय अलमहीपालतवश्रमेण अलंनिरर्थकेइतिहेमस्य वितर्के परिप्रश्नेच हुंकारशब्दः हूयते हुदानादौ बाहुलकात्म यथा हुंनरः नारायणोहुं हुं-
घटोय तदुक्तंत्रिकांडशेषे हुंवितर्केत्वनुमतावित्ति हुंवितर्केपरिप्रश्नेहुंरुषोक्त्यनुनीतिषु हुंवितर्केपरिप्रश्नेहुंलज्जायांनिवारणइतिविश्वहेमयोश्च अंतिकमध्य-
यो समया समेति इणागतौ आ॰ अंतिकेयथा समयाकुलालंदंडः यथाच समया मातृपित्रोः शिशुः २५१

ऻ अप्रथम भेदेच पुन पनते पनस्कलौ बाहुलकादर. अस्यउ यथा पुनर्देहि पुनरप्रथमेमत अधिकारेच भेदेचतथापश्चातरेपिचेतिमेदिनी भेदेयथाकिंपुनर्गो सु-
ण्या निश्चयनिषेधयो निशब्द. नृणाति नृनये क्विप्ईत्व निर्गतपथ निषेधेचयथा निर्धन पुरुष शाप्यसमान तदुक्तविश्वे र्निनिश्चयेक्रान्तादार्थेनि शेषप्रतिषेध
यारिति प्रबधे चिरातीते निकटे अगामिकेच पुरा पुरति पुरअग्रगमने बाहुलकात्कादित्वात्लघूपधगुणाभाव सयथा पुराधीते चिरातीतेतु इतिहासपु
राणादीत्यर्थ. सन्निहितेपि आगामिके भाविनीत्यर्थ तदुक्तविश्वमेदिन्योः पुरापुराणेनिकटेप्रबधातीत भाविष्यिति २५२ ऊररी ऊरी उररीचेति शब्दत्रय विस्त

पुनरप्रथमेभेदेनिर्निश्चयनिषेधयो स्यात्प्रबधेचिरातीतेनिकटागामिकेपुरा २५२
ऊरर्यूरीचोररीचविस्तारेंगीकृतोत्रय स्वर्गेपरेचलोकेस्ववार्तासंभाव्ययो किल २५३

रे अगीकृतोचज्ञेय ऊयते ऊयतलुसताने बाहुलकात् ररीकृरीक् वयतेरीक सम्प्रसारण ऊररीचोररीचोरीविस्तारेगीकृतत्रयमित्यजय ऊररीकरोतीत्या
दीत्यर्थ स्वर्गेपरेलोके स्व स्वरति स्वृशब्दोपतापयो विच्गुण स्वर्गएव स्वर्गगे दर्शनात्सुक्तोनजानेस्वानजफलमिति परइतिलोकविशेषण परेलोकेतु
स्वर्गताअपिदच्छतिश्रुविज्ञत्मस्कडुर्लभ तदुक्तविश्वे स्वःस्वर्गपरलोकयोरिति वार्तासंभाव्ययो किलशब्द किलति किलश्वैत्ये इगुपेतिक वार्तायायथा
जघानकंसकिलदेवदेव संभाव्येतु द्रोणकिलातिक्रान्तोसौशिष्येषुतवचार्जुनः तदुक्तविश्वे किलशब्दस्तुवार्त्तायासंभाव्यानुनयार्थयोरिति वार्त्तायाम
रुचौकिलेतित्रिक। इशेषश्च २५३

निषेधे वाक्यालंकारे जिज्ञासायां अनुनयेच खलुशब्दः खलति खलसंचये बाहुलकादु. निषेधेसयथा खल्वपटुरयंराजा भजंतिलोकाखलुरामचंद्र
सन्नितहारकोजारकृष्णोवेपारदारिकः जानासिखलुभोःहंदेदेहिमेखलुवाचकं एवंचत्वार्युदाहरणानि तदुक्तंमेदिन्यां खलुस्याद्वाक्यभूषायांजिज्ञा
सायांचसान्त्वने वीप्सामाननिषेधेषुपूरणेपादवाक्ययोरिति समीपाद्याभिमुखांतेपदपंचके अभितः अभिशब्दात्तसिल् समीपेसयथा वल्लवीमाभित
स्तिघ्नन्कृष्णएवसमेरिषु उभयार्थे अग्रतोमेथ्यलीगच्छेदभितोरामलक्ष्मणौ शीघ्रार्थे अभितोधीष्वेगुरोः साकल्येयथा अभितोयातिवेजलं अ
भिमुखेचयथा प्रत्यर्थोह्यभितोहृतियदिनस्यामलायनं २५४ नामप्राकाश्ययोः प्रादुःस्यात् प्रादति अधिबंधने बाहुलकादुस् आगमानित्यत्वान्नुम्

**निषेधवाक्यालंकारजिज्ञासानुनयेखलु समीपोभयतःशीघ्रसाकल्याभिमुखेऽभितः २५४ नामप्राकाश्ययोःप्रादुर्मि**
**थोऽन्योन्यंरहस्यपि तिरोऽन्तर्द्धौतिर्यगर्थेहाविषादशुगर्त्तिषु २५५**

न माभियथा प्रादुर्बभूवहरिणीगणमेपुरस्तात् प्रादुरासी-
ज्जगन्नाथइतिच प्राकाश्येयथा प्रादुर्भावोधियोमेस्यात् अन्योन्यार्थे रहसिच मिथः मेथति मेथृसंगमे पृषोदरादिह्रस्वः असुन् बाहुलकात् ओःसां
तओदत्तयोतत्र अन्योन्यार्थेयथा वत्सार्पिषेणविदानांमिथोसागोन्यं रहसिमिथोयथा मिथोमहर्षिभिस्तास तदुक्तंविश्वे मिथोन्योन्यंमिथोरहइति अंत-
र्द्धौ अंतर्द्धाने तिर्यगर्थेच तिर शब्दः तरति तृ असुन् कचिदपवादविषयेप्युत्सर्गोभिनिविशतइतिगुणविषइर अंतर्धानेसयथा शकुंतलांसमादायकण्व
शिष्यास्तदंतिके तिरोबभूवुरिति तिर्यगर्थेतु तिरोगच्छतिवैखलः विषादे शुचिअर्तौहाशब्दः जहाति अन्येभ्यइतिडे पृषोदरादित्वाल्लोपोन तदुक्तंविश्वे
सन्निपातेचशोकेचकुत्साहःखार्थयोरपीति विषादेयथा मारःकांतेहाप्रिडयति शोकेयथा हाचंद्रत्तापनमोस्मिस्पृशमांकरे. पीडायांहाहतोस्मीति २५५

अद्भुतेखेदेच अहहेति अहजहाति जिहीतेडमलोपः पृषोदरादित्वात् अद्भुतेत्तयथा अहहमहाकर्मौराम खेदेयथा अहहनीतवयोगयाव्यर्थ अहहादीर्घान्तमपीति तत्रकिञ्चोध्य तदुक्तमेदिन्या अहहेत्यद्भुतेखेदपरिक्लेशामकर्षयो सबोधनेपीति हेतौअवधारणेव हिशब्द हिनोति हिगतौविच् क्विपितुगभावोवा हेतौयथा पर्वतोवह्निमानत्रधूमोहिपरिदृश्यते निश्चयेतु घर्मोहिदृश्यतेमित्रनत्वन्यादिति हिपादपूरणेहेताविशेषेष्ववधारणे प्रश्नेहेत्वपदेशेन्चसंभ्रमासूययोरपि हीतु खहेतावाख्यातो विषादेविस्मयेपिचेतिदीर्घान्तपाठोप्यस्ति ॥इतिनानार्थवर्ग ॥ चिराय चिरमयते अयगतौ कर्मण्यण् चिररात्राय चिररात्रानयते रात्रेरच् अन्येकर्मण्यण् चिरस्य चिरमस्य असक्षेपणेण्यत् शकंध्वादित्वात्पररूप आद्यायेषातेशब्दा तेचिरार्थका

अहहेत्यद्भुतेखेदेहिहेतावववधारणे इतिनानार्थवर्ग चिरायचिररात्रायचिरस्याद्याचिरार्थका मुहु पुनःपुन शश्वदभीक्ष्णमसकृत्समा १ दीर्घकालवाचका स्युः क्रमेणैकैकस्योदाहरण चिरायमाहगलेनवीक्षते वामलोचना चिररात्रायमेमा नालक्ष्यप्रोज्वलितगृह सखेतवकटाक्षेनचिरायममसचितमिति अशीविषमुखज्वालेगोपीगोपगवागण चिरस्यकृष्णदृष्टैवामृतोपानात्समुस्थित आयशब्दातचिरेण चिरात् चिरमित्यपिज्ञेय मुहुः पुनःपुन शश्वत् शशोर्बहुलवति अभीक्ष्ण असकृत् एतेपचसमाः अर्थत्त तेषाविग्रहस्तूपव माहन मुहुर्वेनित्ये बाहुलकादुस् नित्यवीप्सयोरितिपुन शब्दस्याद्विवचन शशति धाशाप्लुतगतौ अभिक्ष्णोति क्ष्णुणतेजने बहुलदम् नसकृत् अजयरू अभीक्ष्णशब्दमनव्ययमप्याह अभीक्ष्णात्तपीन पुन्येसर्वदार्थेचदृश्यतइत्यनव्ययपाठात् वारवारशश्वदर्थेवारवारेणचेष्यतइतिकोडषोष. १

स्राक् स्रामकति अककुटीलायांगतौ ऋपाकेसंपदादिः क्विप् झटति झटयेति झटसंघाते इणः क्तिन् अंजसा अंजूव्यक्त्यादौ अन्त्स्यलेक्विप अन्हा-
य न्हुल्अपनयने घञ् आवादेशवस्ययः द्राक् द्राति द्राकुत्सायांगतौ बहुलंक. मंक्ष मज्जति टुमस्जोशुद्धौ बहुलंक्सः मस्जिनशतिनुम् सपदि गमेः
लोप पदेरिति एतेसमशब्दाः शीघ्रवाचका स्युः बलवत् बलमस्यास्ति मतुप् ऋषु ऋतिष्ठति अपेतिकुः किमुत किंच तदुतच ऋम्नूयते सुगतौ क्विपतुग
भावः अति अतइन्नतीव भृशनिर्भरस्य २ पृथक् पृथमक्षेपे बहुलंकक् विना वेर्ना इणोणः ऋते केहिगतौरुकऋ नञो आनाम् अंतरेण ऋते क्विक् नाना
एतेषट्शब्दाः वर्जने विग्राहास्स्क एवंतेयथा पर्थयति पृथमक्षेपे अंतरेति ऋतीयते ऋतिःसौत्रोधातुः हिनोति हिगतौ रुकक् प्रत्ययः नञोविनभ्या

स्राक्झटित्यंजसान्हायद्राङ्मंक्षुसपदिद्रुते बलवत्सुष्ठुकिमुतस्वत्यतीवचनिर्भरे २ पृथग्विनांतरेणर्तेहिरुङ्नानाचवर्ज्जने यत्तद्यतस्ततोहेतावसाकल्येतुचिच्चन ३ मितितान्प्रत्यय तत्क्रमेणोदाहरणानि किंचिचपृथुकान्दलापृथक्वाङ्मिहिलेवलडतियान्तः विनाकृष्णं
नयहर्त्तविनाकृष्णेनयतकृतमिति अंतरेणाच्युतंनास्तिपदंतद्वाचकंनृणामिति लांकृतेगेगतिर्नास्तिसंदोमिकस्यैवपुग. हिरुक्कृष्टरिनपुंस स्यात्संसारार्णवविपन्नमइति
मूर्खनानानास्तिश्रेष्ठोयद्वेषु पताहशानिज्ञेयानि यत् यच्छति यमउपरमेक्विप मलोपेतुक तत् तनोति तनुविस्तारे माग्वत्साधु यतः यस्मात् ततः तस्मात् यत्त-
च्चोपञ्चम्यास्तसिल् त्यदाद्यत्वं चत्वारिहेतौकारणे तत्रोदाहरणानि यत्सचित्र मनोहारिशिववर्णनमुच्यतइति तदिदंचिजहौहिकार्मुकमिति यतोस्तिधन्यध
न्योयंपिबन्हरिकथामृतमिति तत प्रभातसमयोऽदययातिभास्कर साकल्यंतु चित् चेतति चितिसंज्ञानेक्विप् यथा कानिन्कराण्यान्नमतोवपश्यं चन चनति
चनशब्दे पचाद्यच् कचनइतिद्वयंस्यात ३

कदाचित् जातु जायति जेक्षये बहुलकुन् इतिरूपं कस्मिंश्चित्काले तत्रैत्य कदाचित् मेसख्या सहचारिस्मृतिस्तेभवतिचेत्कठोर स्मारोवेति ज्ञानयेस्या
जुवैध्यावमिति सार्धं ऋध्यति ऋधवद्धो सहस्यसः बहूलक साक सहअकन् सत्रा सह नायतेक्विप् समं समति घमवैकृच्ये बहुलअम् सहषहमर्षणेअच्
पञ्चसहवाचका आनुकूल्यार्थकं प्राध्वंस्यात् प्राध्वनीति ध्वनशब्दे माङ्पूर्वात् अम्प्रत्ययः तदुक्तं प्राध्वतुमणतेचातिदूरेवर्त्मनिबधनेइति व्यर्थके वृथा
मुधा चस्यात् म्रियते इलहन्वा थाक् सुध्यति बहुलकाहस्यधः ५ आहो आईनि डोप्रत्ययः उताहो उतचअहोचानयो समाहार वयते क किमुत कि

कदाचिज्जातुसार्धंतुसाकसत्रासमसह आनुकूल्यार्थकंप्राध्वव्यर्थकेतुवृथामुधा ४ आहोउताहोकिमुतविकल्पेकिकि
मूतच तुहिचस्महवैपादपूरणेपूजनेस्वति ५ दिवान्हीत्यथदोषाचनक्तंचरजनाविति तिर्यगर्थेसाचितिरोऽप्यथसंबोधनार्थ
का ६

चउतचतयो समाहार केशाद्बहुलडिमि कि किमुउत पदृविकल्पेज्ञेया तत्रोदाहरणानि आहोमेराद्धात कनकलतिकायामिति इत्या-
थुत्स्यानि तु तुदतिडु हि हिनोति किपितुगभाकः च चनति चिनोतिवा हऽस्म स्मायते ष्मिङ्ईषद्धसने ह इह वैहे पदम्श्लोकपादपूरणे सु सवति सुग-
तौ नि भलति हयूजने यथा अयमेसकृदिनेजात अत्युप्मंवर्त्ततेधुना उभयत्रबहुल ५ अन्हीत्यर्थे दिवाशब्द स्यात् दीव्यते कादोषा दुष्यते आनक्त
हेरात्राविंत्यर्थे दुष्यत्यत्र दृषवैकल्पे तत्रोदाहर॰ चोरागच्छतिवैदोषाधनिकस्यचसद्मनि क्रमस्थितासिवैनक्तं मिमिसाचि सचन षचसमवाये इन्प्र
दित्वात् तिर तरणं असुनिइत्व इतिहेतिर्येगर्थे तत्रउ॰ साचीकृतदृगञ्चेनवीक्षतेमदिरेक्षणा तिरोगत्वाप्रपश्येतप्रधावन्हारिणीगणः ६

प्याट् पाट् प्येङ् वृद्धौ टप्रत्ययः परेण्यंतात् क्विप् अंगेरच् हिनोतेर्विच् हंतेर्डैः भातेर्डोसि अंग हे हे भोः इत्येतेसंबोधनवाचकाः स्युः पाटयति पटगतौ प्याय
प्याङ् वृद्धौ अंगति अगिगतौ हंति भांति उदाह॰ प्याट्रामयज्ञविध्वंसकर्तारंराक्षसंजहि एवंसर्वत्र समया समयानिकटेमध्येनिष्कर्षीतिकमध्ययोरि-
त्यक्तः॰ निकषा उभयंआः समिणितिसाधु हिरुक् हिनोति तदुक्तंरुद्रे हिरुक्मध्येविनार्थेचेति हिरुगुक्तंचसामीप्यइत्यमरमालात् यशोदायानंदपल्या-
वर्त्ततेवेहिरुक्शिशुः त्रीणिसामीप्ये अतर्किते सहसाशब्दःस्यात् सहते षहमर्षणे असा प्रत्ययः उदाह॰ सहसाविदधीतनक्रियां पुरः पूर्वस्मिन् पूर्वस्य
पुर पुरतःपुरति पुरअग्रागमने बहुलंअतस्कक् अग्रतः अग्रेतसिः त्रयोग्रार्थाः ७ देवहविर्दाने स्वाहा स्वादतेनेन स्वादआस्वादने आप्रत्ययः पृषोदरादित्वा

**स्युःप्याट्पाडंगहेहेभोःसमयानिकषाहिरुक् अतर्कितेतुसहसास्यात्पुरःपुरतोग्रतः ७ स्वाहादेवहविर्दानेश्रौषट्वौषट्वषट्स्व**
**धा किंचिदीषन्मनागल्पेप्रेत्यामुत्रभवांतरे ८ ववायथातथाएवंसाम्येहोहीचविस्मये**

दस्यहः श्रौषट् श्रुआहूयतेनेन डाप्रत्ययः श्रू
यतेनेनवा श्रुश्रवणे असुम्भिनइति डौषट् वौषट् ऊह्यतेनेन वहप्रापणे डोषट् वषट् डषट् स्वधा स्वद्यतेनेन स्वदआस्वादने आदस्यधः एतेपंच तत्रपितृणादाने-
स्वधा किंचित् उभयो समाहारः ईषत् मनाक् उभयत्रअत् आक् एतानित्रीणिस्वल्पे उदाह॰ किंचिद्दानेनमेतुष्टोदेवदेवोजनार्दन हालाहलमिदंप्रोक्तंईषत्
मात्रंशिवस्यतु मनाकृदृष्ट्याविवर्धय प्रेत्यइणः ल्कोल्यप् अमुत्रेति अदसः त्रंल् हे भवांतरे वनीपकजनश्चंद्रःप्रेत्यराजामहीयते इहामुत्रचगीयते ८ ववाय
था तथाइवः एवं एतेषां प्रक्रियाऊत्वा षट्सादृश्यस्य अहो नन्व् ड्रोहाड्धातुः ही त्यत्रडीप्रत्ययोहंतेः ही हे विस्मये उदाह॰ अहोरूपंमहोकांतोरमासहचरींतदा

योहिनीतेसमालोक्येति तदुक्तविश्वे ह्रीविस्मयविषादयोरिति तूष्णीं तूष्णीकम् एतौद्वौशब्दौमौने तुष्णुष्णी बहूलनीम् यथाकामवक्तव्यइतिसाधु मनोहरौसर्वम
नोहरेषुतूष्णीस्थितौपकजकुम्भलोलसा नद्दर्शनात्चचललोचनायारित्यादि तूष्णीकाजलजपश्यन्गुरुस्मैतदब्रवीत् जलजमत्स्यमित्यर्थ सपदिपदेतिरन्स
मोलोप तत्क्षणसद्य शब्दः सद्य परुदितिसाधु. हेतत्काले सद्यासौक्षणश्च ९ दिष्ट्या दिशे सपर्याविक्किप्स्यायते क्किप् समुपजोष हे आनंदे विद्वज्ज
नमनश्चद्रहरिश्चद्रौविराजते दिष्ट्यामेदर्शनप्राप्तोविश्वामित्रादित्यादि दिशास्यायति स्त्यैशब्दादौ कुषेरप् अतरे इनोविन् दानमत्यर्थे साधव अतरा अत
रेण त्वयमध्ये प्रसह्येति हठार्थवाचकशब्दः स्यात् षहमर्षणे ल्बोल्यप् १० सामत ततुविस्तारेडम् रमोदीर्घ स्थाने स्थानशब्दात्ण्यतारेमत्यय एतद्

मौनेतुतूष्णींतूष्णीकासद्यःसपदितत्क्षणे ९ दिष्ट्यासमुपजोषंचेत्यानंदेऽथान्तरान्तरा अंतरेणचमध्येस्युःप्रसह्यतुहठार्थकं
१० युक्तेद्वेसांप्रतंस्थानेऽभीक्ष्णंशश्वदनारते अभावेनह्यनोनापिमास्ममालंचवारणे ११

ययुक्तेस्यात् उदा० सांप्रतंतेकरिष्यामिय
थालक्ष्मी प्रसीदति भक्तिःमपुज्येषुकुलोचितातेस्थाने भवानित्यादि अभीक्ष्ण शश्वत् द्वय अनारते शशेवत् क्ष्णौतेरम् तत्र अभीक्ष्णादातुस्तवतेकुलोचित-
मिति कुलगामानसशश्वत्करधारायतेध्रुव नहि नवमिति नहवधने अनोन चत्वारिअभावे तत्रोदाहर० नह्रिवसिष्णुपथ्य परिभव अराजकोयथा ग्रामोन
शोभयति सत्वरमित्यादि भवान्तरेकिंचनमेऽकृतस्यादस्मिन्भवेवैधवनोवशाम्ब नजल्पसियदाकातेभाषणत्यागकरोम्यहमिति अस्यादभावेस्वल्पार्थेइति
विश्व मास्म मान्स्मचानयो समाहारः मासपदादि अल अलभूषणेअम् श्रीणिवारणे मास्मकुरु मामास्पृश अलमिनिविस्तरेण ११

चेत् यदिद्वयंपक्षांतरे सत्यंचे चितिचित् यती इनतस्यदः तपसाचकिंशक्नचिमनोयद्यस्तितीर्थेनकि अद्धा अंजसा अतं सततगमनंधयति दधातिवा विच् अं जुव्यक्त्यादौ अंजंस्यति एतद्द्वयतत्वेतत्वार्थौ अद्धासदसतःपरं प्राप्नुवंतिहरिद्वारवासिनइत्यादि अंजसांजनवद्भाति प्रादुःआविः अदभक्षणेउस् उड्-शब्देइन् एतद्द्वयंप्राकाश्येस्पष्टार्थे उदाह० कितवस्यसभायांवैप्रादुरासीद्युधिष्ठिरः आविर्बभूवमकरंदइवारविंदइत्यादि मान्ति अदभक्षणे अवति अवर-क्षणादौ मन्टिलोपः ओ उदा० ओमित्युक्तवचस्तेनगृण्हीयुर्ब्राह्मणाधनमिति एवं उदा० एवंयदुक्त्वाविररामरामः परमं परंमिमीते मिनोति मिनातिवा ड-म् त्रीणिमते तदुक्तंविश्वे ओमित्यंगुमतौमोक्षप्रवणेचाप्युपक्रमइति एवंप्रकारोपमयोरंगीकारेऽवधारणइत्युक्तत्वात् १२ समततः तसि. समंतात् परितः

पक्षांतरेचेद्यदिचतत्वेत्वद्धांजसाद्वयं प्राकाश्येप्रादुराविस्यादोमेवंपरमंमते १२ समंततस्तुपरितःसर्वतोविष्वगित्यपि
अकामानुमतौकाममसूयोपगमेस्तुच १३

तसिल् सर्वतः सर्वस्मात् विष्वक् विषुअंचतिकिन् अभित तसिल् विश्वतःसमंतादित्यादि चत्वारिस र्वतइत्यर्थे उदाह० समंततः संचरणंनारदस्ययथारवेः परितोमेघडंबरमिति वाहिनीसुरवभोगेष्वसर्वतोमारणकुरु विष्वक्प्रकाशतेयातर्गांगतेइ० अकामा-नुमतौ अनिच्छयानुमतौ काममित्येकंनाम काम्यते णिङंतादम् तदुक्तंरुद्रे अकामानुमतौकामपसूयोपगमेपिचेति आकामेत्यपिपाठ तत्राङ्बोध्य. तदुक्तं त्रिकांडे कामकाम्याप्यनुज्ञयोरिति असूयोपगमे अस्त्वित्येकं अस्यतेस्तु चात्काममपि असूयापूर्वस्वीकारइत्यर्थः. असति अस्यति तदुक्तंमेदिन्यां अ-स्तुस्यादभ्यनुज्ञातेऽसूयांगीकारयोरपि उदा० इतियथानृतमुच्यते त्वयातदपिमास्त्विति १३

को मोहिनीतिसमालोक्येति तदुक्तंविश्वे हीविस्मयविषादयोरिति तूष्णीं तूष्णीकम् एतौद्वौशब्दौमौने जुषतुष्णी बहुलनाम् यथाकामवक्तव्यइतिसाधू मनोहरैसर्वम
नोहरेषुतूष्णींस्थितौपकजङ्कुरम्भलोतदा तद्दर्शनात्चचललोचनायारित्यादि तूष्णीकाजलजपश्यन्गुरुमैतब्रवीत् जलजंमत्स्यमित्यर्थः सपदिपदेइरिन्स
मोलोप तत्क्षणेसद्य शब्दः सद्य परुदितिसाधु इतत्काले सचासौक्षणश्च ९ दिष्ट्या दिशो सपदादिक्विप् स्यायते क्विप् समुपजोष इ आनंदे विदज्ज
नमनश्चद्रहरिश्चद्रोविराजते दिष्ट्यामेदर्शनयासौविश्वामित्रादित्यादि दिशास्त्यायति स्त्येशब्दादौ जुषेरम् अतरे इनोविच् हानमत्ययैःसाधक अतरा अंत
रेण चयमध्ये प्रसह्येति हठार्थवाचकशब्दःस्यात् षहमर्षणे ल्कोल्यप् १० साम्प्रत तदुविस्तारेडम् रमोदीर्घ स्थाने स्थानशब्दात्ण्यन्तादेमत्यय एतद

मौनेतुतूष्णींतूष्णीकासद्य सपदितत्क्षणे ९ दिष्ट्यासमुपजोषञ्चेत्यानंदेऽथांतरांतरा अंतरेणचमध्येस्यु प्रसह्यतुहठार्थक
१० युक्तेद्वेसांप्रतस्थानेभीक्ष्णशश्वदनारते अभावेनह्यनोनापिमास्ममालंचवारणे ११

द्युक्तेस्यात् उदा० सांप्रतंनैतकरिष्यामिय
थालक्ष्मी प्रसीदति भक्तिःप्रपुज्येषुकुलोचितातेस्थानेभवानित्यादि अभीक्ष्ण शश्वत् द्वय अनारते शशेनत् क्ष्णौतेर्डम् तत्र अभीक्ष्णादातुस्तवतेकुलोचित-
मिति कुलदामानसशश्वत्क्रूरधारायतेध्रुव नहि नह्यति नहबंधने अनोन चत्वारिअभावे तत्रोदाहर० नहिवसिसुपथ्यं परिभव अराजकोयथा ग्रामोन
शोभवतिसत्वरमित्यादि भवांतरेकिंचनमेकृतस्यादस्मिन्भवेवैधवनोवशाश्च नजल्पसियदाकांतेमाणत्यागकरोम्यहमिति अस्यादभावेस्वल्पार्थेइति
विश्व मास्म माचस्मचानयो समाहारः मासपदादि अल अलंभूषणेअम् त्रीणिवारणे मास्मकुरु मामास्पृश अलमितिविस्तरेण ११

चेत् यदिद्वयपक्षांतरे सत्यंचे चितिचित् थती इनतस्यद तपसाचकिंशक्रचिमनोयद्यस्तितीर्थेनकि अद्धा अंजसा अतं सततगमनंधयति दधातिवा क्विप् अं-
जूव्यक्त्यादौ अजस्यति एतद्वयतत्त्वेतत्वार्थौ अद्धासदसतःपरं प्राप्नुवंतिहरिद्वारवासिनइत्यादि अंजसांजनवद्भाति प्रादुःआविः अवभक्षणेउस् उङ्-
शब्देइन् एतद्वयप्राकाश्येस्पष्टार्थे उदाह० कितवस्यसभायांवैप्रादुरासीद्युधिष्ठिरः आविर्बभूवमकरंदइवारविंद इत्यादि मान्ति अवभक्षणे अवति अवर-
क्षणादौ मन्टिलोपः ओ उदा० ओमित्युक्तवचस्तेनगृण्हीयुर्ब्राह्मणाधनमिति एव उदा० एवंयदुक्काविररामरामः परमं परंमिमीते मिनोति मिनातिवा ड-
म् त्रीणिमते तदुक्तंविश्वे ओमित्यनुमतौमोक्तंप्रवणेचाप्युपक्रमइति एवंप्रकारोपमयोरंगीकारेऽवधारणइत्युक्तत्वात् १२ समंततः तसिः समंतात् परितः

पक्षांतरेचेद्यदिचतत्त्वेत्वद्धांजसाद्वयं प्राकाश्येप्रादुराविस्यादोमेवंपरमंमते १२ समंततस्तुपरितःसर्वतोविष्वगित्यपि
अकामानुमतौकाममसूयोपगमेस्तुच १३ तसिल् सर्वतः सर्वस्मात् विष्वक् विपुअंचतिक्विन् अभित तसिल् विश्वतः समंतादित्यादि चत्वारिस
र्वतइत्यर्थे उदाह० समंततः संचरणंनारदस्ययथारवेः परितोमेघडंबरमिति वाहिनीसुखभोगेषुसर्वतोमारणकुरु विष्वक्प्रकाशतेपातगींगतेइ० अकामा-
नुमतौ अनिछयानुमतौ काममित्येकंनाम काम्यते णिङंतादम् तदुक्तंरुद्रे अकामानुमतौकामपसूयोपगमेपिचेति आकामेत्यपिपाठः तत्राङब्बोध्यः तदुक्तं
त्रिकांडे कामकाम्याभ्यनुज्ञयोरिति असूयोपगमे अस्त्वित्येकं अस्यतेस्तु चात्कामपि असूयापूर्वस्वीकारइत्यर्थः असति अस्यति तदुक्तंमेदिन्यां अ-
स्तुस्यादभ्यनुज्ञातेऽसूयांगीकारयोरपि उदा० इतियथानृतमुच्यते त्वयातदपिमास्त्विति १३

नत्वविरोधोक्तोस्यात् ननइतिसमाहार नन्विदमन्यसेकातेनर्हिकिमेमज्ञायते कामप्रवेदने इष्टपरिप्रश्ने कच्चिच्छब्द् कच्चित्इतिसमाहार उ० रावणस्यपुरेरक्षकच्चि
त्तेमाणवल्लभा निःषम निर्गतसममत्रदुष्षमं दुःषम इरगर्ह्येस्यात् कुलालरचितकुंभद्दु षमइष्यतेधुना कुप्रस्थितासिमेकातेदुष्षमंवर्त्ततेदिन यथास्व यथाय
थ इत्ययथायोग्ये यथास्वेयथायथइतिसाधु यथास्वमितिवीप्सायांअव्ययीभाव १४ मृषा मिथ्याद्वौशब्दौवितथेस्याता मृष्यते मृषुसहने कामत्यय मथते म
थविलोडने अप्यादिः यथार्थ यथातथ द्वयंसत्य अर्थमनतिक्रम्य सत्यमनतिक्रम्य अव्ययीभाव तथाशब्दस्तथाशब्दोवासत्यार्थः एवतु पुनःवैवा एतेपंच

ननुचस्याद्विरोधोक्तौकच्चित्कामप्रवेदने निःषमदुष्षमंगर्ह्येयथास्वंतुयथायथं १४ मृषामिथ्याचवितथेयथार्थंतुयथायथं ॥
स्युरेवंतुपुनर्वैवेत्यवधारणवाचकाः १५ प्रागतीतार्थकंनूनमवश्यंनिश्चयेद्वयं संवद्वर्षेऽवरेत्वर्वागामेवंस्वयमात्मना १६ ॥

अवधारणवाचकाः निश्चयवाचकाः स्युः विवेत्यत्रवाएवेतिछेद १५ अतीतार्थकबोधक प्रागित्येकनाम अचते किन् उ० प्राक्जन्मनिकृतमित्यादि नून अवश्य
एतद्द्वयंनिश्चितेस्यात् उ० नूनंजनेनमहतिपुरुषेप्रयुक्तमित्यादि अवश्यभाविकर्मस्यात् नुऊनयति ऊनपरिहारणेआम् अवश्यायते श्येङ्गतौडम् नञ्
दुक्तविश्वे नूननिश्चिततर्कयोरिति संवदित्येकनाम वर्षेसंवयते वयगतौकिप् यलोप. यद्वा संवदति विच् अपरे अर्वागित्येकनाम अर्वतं अचतिवा किन् अ
गोकारे आएवंचेतिद्वय आमयति अमगत्यादौ किप् आमेवशब्दोज्ञानावधारणेस्यातां आत्मनेत्यर्थे स्वय स्वशब्दअयते अयगतौ अम् १६

अल्पे नीचैरित्येक नोदीर्घश्चेतिडैसि. उ० वानीराइवदृश्यते नीचै प्रत्यर्थिनस्तवेति महतिउच्चैरित्येक०उ० त्रिकूटमेवतत्रोच्चैर्जयस्तंभंचकारस उच्चीयते चिन्त्व
यने उदिचेर्डैसिः भूम्निबहुले प्राय·शब्दः अयतेरस्रन् उ० प्रायोमाघस्यचक्वचित् नपुसकत्वभवतीत्येषशास्त्रनिर्णय. अद्रुतेमांद्ये शनैः शणाति शानयति
वा शणदाने ऐसनस्थनः उ० शनैर्गमनकुरु अतिदीर्घतरमार्गमाशकेति नित्येसनेत्येकनाम षणसभक्तौ आप्रत्यय उ० सनातन वात्येवहिरित्येकंनाम वहप्रा
पणेऽइस् उदा० सायसन्ध्याबहिर्जलइति अतीते स्मेति षोंतकर्मणिउमन् उ० वदंतिस्म० अस्तमदर्शने अस्यतेस्तम् अस्त उ० अस्तंयातियदाभानौ १७ सा
लं अस्ति असन असदीप्तौ क्तिच् उ० अस्तिपेत्रकंकर्मेतिमतियस्य आस्तिकइत्यादि रुषाउक्तौ उशब्द उनशब्देक्विप् तदुक्तंरभसे उषास्याद्रजनीशेषे

अल्पेनीचैर्महत्युच्चैः प्रायोभूम्न्यद्रुतेशनैः सनानित्येबहिर्बाह्येस्मातीतेस्तमदर्शने १७ अस्तिसत्वेरुषोक्तावुऊप्रश्नेऽ
नुनयेत्वयि हुंतर्केस्यादुषारात्रेरवसानेनमोनतौ १८ पुनरर्थेंगनिंदायांदुष्टुसष्टुप्रशंसने उषइत्यपिदृश्यतइति उ० हतुमुमागतशा

त्रमित्यादि तदुक्तंमेदिन्या उषंबोधनरोषोक्त्योरनुकंपानियोगयो पादपूरणेऽपिचदृश्यतइति प्रश्ने ऊं ऊयतेर्मुक् उदा० बहिस्तिष्ठसि ऊकांतइति ह्रस्वपाठे
ऊँमित्यपि अनुन् येसात्वने अयिशब्द· अयतेरि. यथा अयिस्निग्धेसुग्धेइत्यादि वितर्केहं शब्दः हुदानादौ उम् रात्रेरवसाने उषा उ० चिकित्ससेकेर्यथाङ्गमउ
षापानतथाकृतमिति उषदाहेका नतौनमशब्द नमतेरस्रन् उ हरायनम.१८ पुनरर्थे अंगेति अगिगतौघञ् उ० "मूर्खोपिनाममन्यतेकिमगविद्वान्" किंपुनरित्य-
र्थः निंदायादुष्टु उ० खलस्यमानसदुष्टुयथादुर्योधनस्यच प्रशंसने सुष्टु तिष्ठते कु सुषामादि. उ० विद्वज्जनमनोहारिसुष्टुकाव्यप्रजायतइति ॥

कोश
१

सायेदिनान्ते सायस्यन्तेर्णम् सुक् उ० भ्रमस्तमितेसूर्येसायहोमोविधीयतइति प्रगे प्रातः द्वे प्रभातेस्याता उ० प्रगे प्रगायतिनवीस्नन्तथा गशब्दे गेप्रत्ययः कार्तिकेइक
रिष्याभिप्रातःस्नानजनार्दन अन्ततेरर समीपार्थे निकषा १९ पूर्वेद्वे गतेवर्षे परुदित्येकनाम उत्प्रत्यय पूर्वस्यपरादेशः पूर्वतरे गतवर्षेस्पूर्वेवर्षेपरारित्येकनाम पूर्वतर
स्यपर आरीन्प्रत्ययः उभयत्रसवत्सरेर्थे यतिवर्तमानेद्वे ऐषमइत्येक यतिगच्छति इदमइश् समसणप्रत्यय सद्य परुदित्साधवइमेत्रय श्यायाणा उ० "परा
गित. कालःपरुन्नागतऐषमोपिनागत यनीतिशत्रतस्येण समभ्यारूप अत्रान्हि अस्मिन्नहनी अद्यशब्द इदमोद्यश्च उ० अद्यश्वोवाकुसुमधनुषोयोवरा
न्याभिषेकइति अथपूर्वेन्हीत्यादावर्तेपूर्वेद्युरादय शब्दाभवतीत्यन्वय पूर्वेन्हीत्यादिशब्देनउत्तरेन्हीत्यादिषट्कस्यग्रहणस्यात् २० तेयथा पूर्वस्मिन्नहनिपूर्वे

सायसायेप्रगेप्रातःप्रभातेनिकषातिके १९ परुत्परार्येषमोब्देपूर्वेपूर्वतरेयति अत्राद्यान्त्यथपूर्वेन्हीत्यादौपूर्वोत्तरापगत् २० त
थाधरान्यान्यतरेतरात्पूर्वेद्युरादय उभयद्युश्चोभयेद्यु परेत्वन्हिपरेद्यवि २१ ह्योगतेनागतेन्हिश्वःपरश्वस्तुपरेहनि तदातदा
नींयुगपदेकदासर्वदासदा २२ द्यु अहनिवाच्येपूर्वशब्दात् एद्युस् एवअन्यअन्यतरइतरअपरअधरउभयउत्तरेभ्य उभयद्युरित्यत्रद्युः उभयद्यु त
दुक्तरुद्रे पूर्वेद्युरिष्यतेप्रातः पूर्वेद्युः पूर्ववासरइति उत्तरस्मिन्नहनिउत्तरेद्युः अपरस्मिन्नहनिअपरेद्युः अधरस्मिन्नहनिअधरेद्युः अधरस्तुपुमानोष्ठहीनेन्यूनेचवा
च्यवदित्युक्त० अन्यस्मिन्नहनिअन्येद्यु अन्यतरस्मिन्नहनिअन्यतरेद्यु इतरस्मिन्नहनीतरेद्यु-उभयस्मिन्नहनिउभयद्यु उभयेद्यु द्वौशब्दौभवत परेन्हितु परेद्यवि परस्मा
न्नाद्येद्यवि एतत्पर्यन्ता सद्य-परुदितिसाधव २१ गतेहनि ह्यस्त्येकनाम उभावपिपृषोदरादिः अनागतेन्हि श्वइत्येकनाम तत परेहनि परश्वइतिशब्द तदातदानी तस्मिन्कालेस्याता
नदोदन्तेस्यादिना दानीतिप्रत्ययौ कस्मिन्कालेयुगपत् एकदा सर्वेतिदा एतौशब्दौस्याता सर्वदा सदा एतौशब्दौ सार्वकालेभवत सर्वस्यपक्षेसादेश २२

एतर्हि एतच्छब्दात् र्हिल् अल संप्रति इदानी अधुना इदमो र्हिल् अधुनाइदम. प्रत्यय इशोलोप साप्रतं एतत्यचक अस्मिन् कालइत्यर्थेभवति प्रागदिशीयत्वात् साधव.उ० एतर्हि प्रत्ययोजात तथाशब्द समुच्चये पूर्वादौदिशि पूर्वादौदेशे पूर्वादौकालेवा प्रागादय.स्यु दिशिप्राग्दिगित्यादि देशेप्राग्देशइत्यादि कालेप्राक्कालइत्यादि पूर्वादौइत्यादिशब्देनोत्तरपश्चिमदक्षिणाधरोर्ध्वादीनाग्रह प्रत्यगादयइत्यादिशब्देनत्वगित्यादिग्रहण उत्तरात् अधरात् दक्षिणात् उत्तराधरदक्षिणादातिरितिसाधव उत्तरेण अधरेण दक्षिणेन त्रिभ्य एनवन्यैतिएनब् दक्षिणा दक्षिणाहि दक्षिणादाच् आहिचदूरेतिसाधू दक्षिणत उत्तरश्चसंगृह्यते ऊर्ध्वेतूपरि उपरिष्टादिदि उपर्युपरिष्टात् २३ ॥इत्यव्ययवर्गः॥ ॥अथलिंगसंग्रहप्रकार ॥ ॥सलिंगशास्त्रै· पाणिन्याद्युक्त लिंगविधानसूत्राणि तत्सहितै कीदृशै. सन्नादिकृत्तद्धितसमास-

**एतर्हिसंप्रतीदानीमधुनासांप्रतंतथा दिग्देशकालेपूर्वादौप्रागुदक्प्रत्यगादयः २३ इत्यव्ययवर्गः॥ सलिंगशास्त्रैःसन्नादिकृत्तद्धितसमासजैः अनुक्तैःसंग्रहेलिंगंसंकीर्णवदिहोन्नयेत् १**

जै सन्नादयसन्नादिप्रत्ययजोश्चकृतश्वपाकादयश्चतद्धिताश्च अणाद्यता समासाश्च अदतोत्तरपदोद्विगु स्त्रियामित्यादयश्चजायतेयेभ्योयैर्वा पुन कीदृशै शास्त्रै प्रागसुक्तै तत्रेहानुक्तमपिसलिंगशास्त्रैरूह्यमित्यर्थ तै·इहास्मिन्संग्रहवर्गेलिंगसंकीर्णवदुन्नहेदूहेत यथा संकीर्णवर्गेप्रकृत्यादिभिरुन्नेयतथात्राप्युन्नयेदित्यर्थ· तत्र प्रकृत्यर्थेयथा अर्धर्चा पुंसिचेति प्रत्ययार्थेनयथास्त्रियांक्तिन् प्रकृतिप्रत्ययार्थाद्यैरित्याद्यशब्दात्क्रियाविशेषणानानपुंसकत्वएकत्वंच यथाशोभनपचतीत्यादि यद्वा सलिंगशास्त्रै सन्नादिकृतद्धितसमासेभ्योजातै शब्दैश्चेतिप्रत्यकसूहेकरणत्वबोध्यं पक्षद्वयेपिसन्नादीतिचित्यंकृदादिजभिन्नसन्नादिजानामलाभात् सन्नादिभ्योविहितकृज्जैरितिव्याख्यानेपिव्यर्थविशेषणत्वात् संकीर्णवर्गेयथा प्रकृतिप्रत्ययाद्यैर्लिंगोहनमनुक्तलिंगशब्दविषय तथात्रापि सलिंगशास्त्रादिभि· लिंगोहनमनुक्तलिंगशब्दविषयेबोध्य १

का

सन्नादिकृतद्धितसमासजविषयपूर्वोक्तशब्दलिंगादन्यल्लिंग नस्यशेषः तस्यविधि व्यापी व्याप्नोति पूर्वोक्तकांडत्रयस्यव्यापकइत्यर्थः अत्रोक्ते मारुक्तेश्चविशेषविधिभि नवाध्यतेचेत् अपवादविषयविहायसर्वत्रप्रवर्ततइत्यर्थः स्त्रियामित्यधिकारोयंप्रसीशब्दपर्यंतज्ञेयः ईदूईच ऊच एतौइकारोकारौद्विरामीअंतौयस्यतत् ईदूविराम नचतदेकाच्चईदूद्विरामैकाच् उदा॰ धी न्नी भ्रू भ्रूः हुः लवनलू भवनभूः नयतिनी सुनातिलूरित्यादौतुपरत्वात्कृत कर्त्तरीतित्रिलिंगत्व इदंत मूदंतवायदेकस्वरश व्दरूपवत्स्त्रियामित्यर्थः योनिर्भगतत्सहितानाप्राणिनानामस्त्रियास्यात् यथा माता दुहिता याता स्नोदासा सुभ्रूर्भ्रोतिशेषः २ विद्युदादीनान्हीपर्यंतानाअप्राना नामतस्त्रिया यथाविद्युत् तडित् रात्रि रत्नभि वल्ली मननि वीरुत् वीणाविपचीत्यादोरूयाबूंक्तमितिसिद्धे वीणाग्रहणं चित्य केचित्तुवीणास्थानेवाणीपठंति

लिंगशेषविधिर्व्यापीविशेषैर्यद्यबाधितः स्त्रियामीदूद्विरामैकाच्सयोनिप्राणिनामच २ नामविद्युन्निशावल्लीवीणादिग्भून दीन्हिया अदंतेद्विगुरेकार्थोनसपात्रयुगादिभिः ३

वाकू गौ गी दिक् हरित् भू भूति कु सरित् त्रिस्रोता विपाट् न्हीग्रहणंचित्य इदूद्विरामैका जितित्रपादौरूयाबूंक्तमितिचासिद्धत्वात् केचित्तुधीयामितिपठंति सवित् चित् प्रतिपत् अदंतैर्मूलादिशब्दैः सहयोद्विगुसमास सस्त्रियाकीदृश एकार्थः एकोर्थोयस्य द्विगुरेकवचनमित्यनेनसमाहारेएकत्वविधानात् यथा दशमूली दशानामूलानासमाहार पंचाक्षरी पंचानाअक्षराणासमाहार एवंत्रिलोकीषड ध्यायीत्यादि अदंतैरितिकि पंचकुमारि पंचानाकुमारीणासमाहार दशधेनु पंचराजमित्यादौठचिअदंतत्वेसत्यपिपात्रादित्वान्नपुंसकत्वमित्येके पात्राद्यंतस्यने तिनिषेधात्उत्सर्गः प्रवर्त्ततिइत्यर्थः एकार्थ किः पंचकपाल पंचसुकपालेषुसंस्कृ पुरोडाश नसइति पात्रयुगादिभिरुत्तरपदैः अदंते योद्विगुः सस्त्रियानस्यात् यथापंचपात्र चतुर्युग त्रिभुवनमित्यादि ३

तलप्रत्ययः स्त्रियाभावाद्यर्थे विहित तत्रभावे यथा शकुना हंदेसमूहे ग्रामता गोता कर्मणिब्राह्मणता तलतइतिसूत्रे सर्वेषांतल् प्रत्ययानांग्रहणं हंदइति हदेसमूहे य इनि कश्यत्र यश्चइनिश्चकल्यश्चत्रश्चतदंतं एतेनत्वार प्रत्यया. स्त्रियातेनयथा पाशादिभ्योय पाश्या पाशानासमूह वात्या वातानासमूह खल्या खलानां-समूह खलादिभ्यइनि. खलिनि शाकिनी गोत्रारथकल्या हंदेसमूहे कि गुरवेभवोसुरव्यः दडोस्यास्तीनिदडी वैरेति मैथुनिका मिथुनस्यकर्म वैरमैथुनादौचयोवु न्प्रत्ययः सस्त्रियां तत्रवैरविरोधार्थेयथा अश्वमहिषिका अश्वमहिषस्येदवैरमित्यर्थ एवकाकोलूकिका मैथुनिकायायथा अत्रिभरद्वाजिका अत्रिभरद्वा जयो रियंमैथुनिका विवाहरूपसबंधइत्यर्थी एवंकुत्सश्चकुशिकानतयोर्मैथुनिकाकुत्सकुशिका इह्लात्वुन् वैरमैथुनिकयो इतिवुन् वुनग्रहणवुन्न उपलक्षण यथा का

तलहंदेयेनिकल्यत्रावैरमैथुनिकादिवुन् स्त्रीभावादावनिक्तिण्वुलणच्ण्वुच्क्यब्युजिन्नङ्निधा ४

शिका गार्गिकयाश्लाघते कनित्वैरमैथुनिकादिवुरितिपाठ. आदिनावीप्सादौवुनोग्रहण पादशतस्यैतिदण्डव्यवसर्गेतिविहितस्यग्रहणमित्यर्थ वैरेति कियास्कंदेय कः अर्जुनक. स्त्रियांभावादि स्त्रीभावादिस्तस्मिन् स्त्रियामित्यधिकृत्यभावादौयेविहिता. प्रत्यया अनिक्तिनादयस्तेस्त्रियास्सुरित्यर्थः स्त्रियाक्तिन् इत्यधिका रात् अनिर्यथा आक्रोशेनञ्यनि अकरणि अजीवनि. क्तिन्यथा कृति गति ण्वुल्यथा प्रच्छर्दिका प्रवाहिका रोगाख्यामितिण्वुल् आसिका धात्वर्थेतिण्वु-ल् णच्यथा व्याक्रोशी कर्मव्यतीतिणच् ण्वुच्यथा शायिकापर्यायेतिण्वुच् क्यप्यथा व्रज्या मज्जयेतिक्यप स्त्रीभावादौकि वद. स्फायिक्यपच ॥ गुणोध अग्रभा य नायस्त्रिया युच्यथा कारणा आसना ण्यासश्रन्थेतियुच् इञ्यथा वापि वासि इञ्वपादिभ्य काकारिकामकार्षीः इञुउपलक्षणार्थत्वादिणइकन्यथा यया आजि इणजादिभ्य कृषि. आङ्यथा पचा त्रपा भिदा पिभ्दिदेतिसूत्रेण निर्यथा ग्लानि म्लानि ह्यानि. शप्रत्ययोयथा क्रियाकृत्र शन्इच्छा ४

हो उणादिषु येनि-ऊ-ई एतेन्तः स्त्रियांस्युः तत्रान्यतो यथा श्रेणि श्रोणिः द्रोणि उणादिष्वनिरितिपाठे अनिर्यथा धरणि धमनि सरणि ऊदन्तो यथा चमू कद्रू अ
न्यूप्रत्ययातो धातुरिति स्त्रीत्वं ईदन्तो यथा तन्त्री तरी उणादिषु उक्ता इमे प्रत्ययाः ऊर्ध्वतश्चाबन्त ऊङन्त चयन्त च जगमं स्थिरं स्थावरं चात्तत् स्त्रियांस्यात् जगमं य-
था नारी शिवा ब्रह्मबधू स्थावरं यथा कदली माला कर्कन्धू तच्छब्देनाऽप्रमुख्यादिकं निर्दिश्यते तेनायमर्थः तन्मुख्यादिकं प्रहरणं यदि क्रीडायां वर्तते तर्हि त
स्मिन्नर्थे विहितो णप्रत्ययः स्त्रियां दिगित्यनेनोक्तोदाहरणोद्देश तेन दाण्डामौसलेति चोदाहर्तव्यं मुष्टिः प्रहरणमस्यां क्रीडायां मौष्टा पल्लवं प्रहरणमस्यां क्री
डायां पाल्लवा तदस्याप्रहरणमिति क्रीडायां ण क्रीडायां विशेष्यत्वात् स्त्रीत्वं ५ सायथंतवाच्या दण्डपातादिः क्रीऽस्या फाल्गुन्यादिकायामित्यर्थे घञन्तादिहितो

**उणादिषु निरूरीश्च ड्याबूङन्तचलस्थिरं तत्क्रीडायां प्रहरणं चेन्मौष्टापाल्लवा णदिक् ५ घञोऽञ सा क्रियास्यां चेद्दाण्डपा**
**ताहिफाल्गुनी श्यैनंपाता च मृगया तैलंपाता स्वधेति दिक् ६ स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि** यो अप्रत्ययः सत्त्रि

यास्यात् स्त्रियामेवञ्प्रत्ययप्रत्ययविधानात् उदाहरणं दण्डपातोऽस्यां फाल्गुन्यां दाण्डपाता फाल्गुनी एवं श्येनपातोऽस्यां श्यैनंपाता मृगया तिलपातोऽस्यां स्वधाक्रियायां तैलंपाता
श्येनतिलस्येति मुम् पितृदाने स्वधा मतमित्यमरमाला वररुचिना तु स्वधाक्रियाप्रवेणी निस्त्रीलिङ्गतोक्ता इतिशब्देन मुसलपातोऽस्यां मौसलपाता भूमिरित्यादि सिद्धिः
क चिद्देशे फाल्गुनपौर्णमास्यां दण्डपातेन क्रीडा भवतीति दिगित्यनेन दाण्डपातादिकमुदाहरणमिति सूचितं ६ यदि अपचये अल्पत्वे विवक्षा वक्तुमिच्छा स्यात्तर्हि मृणाल्याद
यः स्त्रीलिङ्गाः स्युः यथा अल्पं मृणालं मृणाली आदिशब्दाद्यथा ह्रस्वो वंशो वंशी गौरादित्वान्ङीष् अपचये एव स्त्रीत्वदर्शनात् एवं कुम्भी मणाली छत्री पटी पेटिका का
चिरिति किं अल्पो वृक्षो वृक्षक इत्यादिन स्त्रिया अथ ड्याबूङन्तमित्यादिनोक्तलिङ्गानामपि केषाञ्चिन्मायासुखेन लिङ्गज्ञानाय पृथक्पाठ कातादिक्रमेण आह

वकेति लकाराक्षसपुरी रमतेस्याबाहुलकात् शेफालिकापुष्पभेद वृक्षभेदश्च सतुनिर्गुंडीइतिप्रसिद्ध टीकापदविषयपदव्याख्या धातकीवृक्षभेद धायटीइ-तिप्रसिद्धा पंजिकानिः शेषपदव्याख्या अटकीतुवरी तूरइतिप्रसिद्धा ७ सिध्रका सेधति सिध्यतेवा षिधुगत्यां बहुलरक्स्वार्थेक क्षिपकादित्वादित्वंन वृक्षभेद. सारिका सगति सृगतौ ण्वुल् तालव्यादिपाठे शृृहिंसायाधातु. शृणातिदु ख विरहिणीनासारिका पक्षिभेद साळकीइतिप्रसिद्धा ॥ हिक्का हिक्कन हिक्क अव्यक्ते शब्दे गुरोरित्य. यद्वा हिक्कयते हिक्कहिंसायां अच् ऊर्ध्ववातप्रवृत्तौशब्दविशेष उचकीइतिप्रसिद्धा ॥ प्राचिका प्राचति अचुगतौ ण्वुल् वनमक्षिका पक्षिभेद

लंकाशेफालिकाटीकाधातकीपिंजिकाटकी ७ सिध्रकासारिकाहिक्काप्रा
चिकोल्कापिपीलिका तिंदुकीकणिकाभंगिःस्फरंगासूचिमादयः ८

इतिस्वामी उल्का ऋच्छति अर्यतेवा ऋगतौ शकेतिसाधु उल्कातेज पुंज पिपीलिका अपीपील्यते पीलप्रतिष्टंभे वप्टिइतिअलोप मुंगीइतिप्रसिद्धा शनैर्यातिपिपीलि-कइतिपुस्त्वमपीतिस्वामी तिंडकी वृक्षभेद. टेंभुरणीइतिप्रसिद्धा तिम्यति तिमआर्द्रीभावे बाहुलदुकष् कणिका कणति कणगतौ अच् स्वार्थेकन् परमाणुरित्य र्थ भगि कौटिल्यभेद विच्छित्तिर्वा तदुक्तरभसे व्याजच्छलनिभेभंगीर्विदिगीसीर्निंगीलिकेति भगस्यकरणंतत्करोतिण्यंतादचइ स्फरंगा विवरभेद स्फरगइति-ख्यात स्फवहृरज्यतेस्या रजरागे हलश्चेतिघञ् कुत्वंसूचि. व्यधनी सूच्यतेनया सूचपैशून्ये चुरादेर्ण्यंतादचइ तदुक्तरत्नकोशे स्त्रीसूचिर्नृत्यभेदेचव्यधनी शिखयोरपीति माटि महपूजायाक्तिन् हस्यट धत्वष्टुत्वंदीर्घ तदुक्तंहेमे माटिर्दैन्यपत्रशिरेति माटि स्त्रीपत्रभागेचदैन्यस्यापिप्रकाशनइत्यक्तं० ८

पिच्छा पिच्छ्यते पिच्छबाधे शुरोरित्यकार शाल्मलिनिर्यास भक्तादिमण्डश्च तदुक्तंहैमे पिच्छाशाल्मलिवेष्टके पङ्क्तिपुगच्छटाकोशमण्डेष्वश्वपदामये मोचायापिच्च
लइति वितण्डा वातभेद वितस्योपरपक्षोनया तडिआघाते शुरोन्महल काकिणीपणचतुर्थांश तदुक्तमेदिन्या काकणीपणतुर्यांसेमानदण्डेचदृश्यते कृष्णलैकवरा-
स्थो स्यादुन्मानस्यांशकेपिचेति काकमणति अणशब्दे कर्मण्यण् पृषोदरादि रभसस्तुमानेप्यप्याह नत्रअनप्राणने धातुर्बोध्य पणोरपामस्थानातुर्यांशोपिचकादि
नीति आढकस्यपंचाशत्तमोभागउदमान तदुक्तंचगणितावल्या कुल्यास्याद्दशभिर्द्रोणैर्द्रोणपादेनचाढक अतोर्धशतिकोभागउदमानमुदाहृतमिति चूर्णि चूर्णयते
रचइ चूर्णिका शाणी शणस्यविकार तस्यविकारइत्यण् शाणीशणपटविशेष निकषइतिस्वामी शाणइत्यपे दुणी दुणतिक दुणजेहयेवधेगतौ दुणी कर्णजलौके

## पिच्छाधितण्डाकाकिण्यश्चूर्णि शाणीदुणीदरत् सातिकथानथासहीनाभीराजसभापिच ९

त्यर्थ तदुक्तंहैमे दुणीकूर्म्यांजलद्रोण्यामिति दरत् दीर्यते इविदारणेभयेवाअदिप्रत्यय दरत्स्त्रियाप्रपातेपि भयपर्वतयोरपीत्युक्त॰ म्लेछजातिरित्यर्थ सा
ति ऊतियूतीतिसाधु सातिर्दानावसानयोरित्युक्त॰ म्लेछजातिरित्यर्थः कथा कथ्यते कथुकातौ कथाभृन्मयभित्तौस्यात्तथाप्रावरणांतरइत्युक्त॰ आसदी आ-
स्यतेस्यां आसउपवेशने अच्चादि आसनभेदइत्यर्थ वेत्रासनमितिकेचित् नाभि नभ्यतेनयास्या णभाहिंसाया इणजादिभ्य अंगविशेषणइत्यर्थः ना
भिर्मुख्यनृपेचक्रमध्यक्षत्रिययो पुमान् द्वयो प्राणिशरीरस्यास्त्रियाकस्तूरिकामदइत्युक्तत्वात् राजसभा राज्ञःसभा तत्पुरुषः सभाराजेत्यस्यायथा
दोय ९ ७ ७ ५ ५ ५ ५ १

झल्लरी झर्वते झर्झभत्सोक्त्योः बाहुलकादरन् पृषोदरादिः तदुक्तंमेदिन्यां झलरीझल्लरीचढक्कहुडुकेवालचक्रकइति वाद्यभेदइत्यर्थः चर्चरी चर्च्यते चर्चउक्तौ बहुलं अरन् गौरादिः करशब्दइत्यर्थ तदुक्तंकोशांतरे चर्चरीगीतभेदेचकेशाभिल्करशब्दयोरिति पारी पारयति पार्यतेवा पृपूर्तौ पचादि. तदुक्तंहैमे कर्करीपूरयोःपा-रीपादरज्वांचहस्तिनः हस्तिपादरज्जुरित्यर्थः होरा होलति हुल्यतेवा हुलहिंसासंवरणयो अच्घञ्वा होरातुलग्नेराश्यर्धेशास्त्रेरखाप्रभेदयोरितिहैमः लट्वा लटति लटबाल्येक्वन् तदुक्तंमेदिन्यां लट्वाकारजभेदेस्यात्फलेवाद्येरवगांतरइति लट्वाग्रामचटकइत्यर्थ. सिध्मला सिध्ममस्त्यस्याः मत्वर्थेक्तन् सिध्मला-मत्स्यविकृतौवाच्यवत्तुकिलासिनीतिमेदिनीकारः तदुक्तंचत्रिकांडशेषे सिध्मलाशुष्कमासेस्त्रीत्रिलिंग्यांतुकिलासिनीति लाक्षा लाक्ष्यते लक्षशिल्पयोगे

## झल्लरीचर्चरीपारीहोरालट्वाचसिध्मला लाक्षालिक्षाचगंडूषागृध्रसीचमसीमसी १० इतिस्त्रीलिंगसंग्रहः ॥

बहुलस जतुइत्यर्थ लिक्षा लक्ष्यते लक्षआलोचने घञ्पृषोदेतिइ. लिक्षायूकांडमित्यर्थः गडूषा जलादिनामुखव्यपूरणमित्यर्थ. गंड्यते गडिवदनैकदेशे गडे श्चेत्यूषन् पुंस्यपिस्यात् तदुक्तरुद्रे गंडूषोमुखपूर्तौस्यात्गजहस्तांगुलावपि प्रसृत्याप्रमितेपिस्यादिति उन्मतानाभिस्तु गडूषानापिमुखपूर्तिरितिबोपालित गृध्रसी वातरोगभेद गृध्रंस्यति सतुऊरुसंधौभवति चमसीयज्ञपात्रभेद चम्यते चमुअदने असच् गौरादि चमसोयज्ञपात्रस्यभेदेस्त्रीपिष्टकेस्त्रियामि-त्यक्तं प्रणीतेऽपरनाम मसी कज्जल मस्यति मसीपरिणामे अच् तदुक्तंत्रिकांडशेषे मलामसी नलंपत्राजनंनस्यान्मसिद्वयोरिति १०

कर. राजयात्थो भागोरश्मि· पाणिश्च मरीच्यादीनांतुपुस्त्वंबाधितं मरीच्यस्त्रीत्यक्तत्वात् गंडः कपोल ओष्ठोदतच्छदः दशनवसनादितुरूपभेदात्बाधितं दो प्र
वेष्ट· भुजादेर्द्वयोरितिबाधः द्रंतोरद भेदोजंभः कंठोगलः समीपगलभेदेषुकंठंत्रिषुविदुर्बुधाइनिशाश्वतः केशः कच नरव पुनर्भवः नरवरोस्त्रियामितिबाध स्तन
कुच· पयोधरः एतेयथासंभवंसभेदपर्याया पुंसि अन्ह अहश्च अंतेयेषांते अन्हाहांता. पुंसिस्युः तेचयथा अन्ह· पूर्वपूर्वाण्ह· अन्ह. अपरंअपराण्ह. द्वयोरन्हो
समाहारः द्व्यह· त्र्यह उभयत्रनसंख्यादे समाहारेइत्यन्हादेशोन अत्रनपुंसकमिति अस्यापवाद. क्ष्वेडोविषंतन्देदाःपुंसिस्यु यथासौराष्ट्रिक· शौल्किकेय ब्रह्मपु
त्र. अत्रगरलविष पुंसिक्लीबेच काकोलमित्यादिबाधितं रात्रांताः रात्रो अंतोयेषांते अन्रात्रोरदंतत्वसमासांतेन प्रागसंख्यका. प्राक्पूर्वपदंनसंख्यायेषांतेपुंसि-

करगंडोष्ठदोर्दंतकंठकेशनखस्तनाः · अन्हाहांताः क्ष्वेडभेदारात्रांताःप्रागसंख्यकाः १२ श्रीवेष्टाद्याश्चनिर्यासाअसन्नंता
अबाधिताः कशेरुजतुवस्तूनि स्युः परवल्लिंगतापोय परत्वात्समाहारनपुंसकतामपिबाध्यते तेनाहोरात्रः अहश्चरात्रिश्चसर्वरात्रः अपरात्र पूर्वरात्र प्रा
क्संख्यकाइतिकिंपंचरात्रंगणरात्रपुण्यरात्रश्चार्धर्चादिपाठात् क्लीबत्वंच १२ श्रीवेष्टाद्याःयेनिर्यासाः वृक्षद्रवाः तेपुंसिस्यु. श्रीवेष्टःआद्योयेषांते श्रीवेष्ट. सरल श्री
विष्टप् इतिकश्चित्पाठः आद्यशब्दात् श्रीवासरतधूपादीनांग्रहणंचात्गुग्गुलसिल्हकादयः असन्नंताः असच् अन्चतावंतोयेषांते ध्वक्रमसिस्कसन्नंतमित्यादि
नावक्ष्यमाणेन अप्सर आदीनांपूर्वोक्तेनचबाधकेनाबाधिताश्चेत्पुंसिस्युस्तत्र अदिनाजलौकसःसुमनसः तेअसंतायथा अंगिराचंद्रमा· वेधा पुरोधा· अन्नता
यथा कृष्णवर्मा मघवा अबाधिताइतिकिं इदंलोम इदसाम इदंवर्म ॥

तुरुविरामका रुश्चरुश्चतुरु नौविरामौ विरामेवाप्यपाते एतादृशा रुषन्तानाम्रुशब्दाश्च पुसिस्यु नेयथाधातु हेतु सेतुरित्यादि कुरुमेरु त्सरु क्रियारुरित्यादि करोरु जतुवस्त्वनिहितेतिव्यर्थ अबाधितादृत्यस्यान्वयस्यसंभवात् वस्तुतस्त्वबाधितादृत्यपिव्यर्थ विशेषैर्यच्चबाधितइत्यनेनैर्निर्वाहात् अतएव दारुअश्वादिषुनिर्वाह तत्रक शेरुअस्थिविशेष तृणविशेषोवाजतुलाक्षेत्यर्थ १२ कषणपदया षड्वर्णाउपाने अत्यसमीपेपेपाते तथा यदीति यदि एतेकादिवर्णषट्कोपाताअदाता स्युस्तर्हिपु सिभवति यथा अक अर्कः लोह स्फटिक शङ्कुवल्कादिषुबाधित पूर्व भाप तुष रोष ओषप्लोषप्रसादयः षोपाता वर्षादयस्तुपूर्वबाधिता पाषाणःगुण घुण कि रणादयोणोपाता विषादिबाधित कौस्तुभाशरभगर्भसदर्भादयाभोपाता कुसुभादिबाधित होमग्रामधूमस्तोमव्यायामगुल्मादय मोपाता पद्मादेर्वापुसित्यादिना

हिल्वातुरुविरामकाः १३ कषणभमरोपातायद्यदलाअमीअथ पथनयसदोपातागोत्राख्याश्चरणाह्वया १४ बाधितत्व स

मीरकेदारसारसीकरसर्सरादयः रोपाता अजिरादेर्बाधः पकारादिवर्णषट्कोपाता अबाधिताश्चेत्पुसिस्यु अत्रयद्यताइतिपुर्वोक्तिःनसबध्यते अथादित्वात् पकारोपात यथा यूपस्तूपक्षुपकलापादय कुतपादिबाधि थकारोपाता सार्थस्वार्थअर्थनाथशपथादय नोपातास्तु इनअपघनजनमन्वादय योपाता रथविनयतनुबाधव्य यअयादय मृगयादिस्तुबाधित सोपाता मानसपनसरससहासादय बिसादिर्बाधित दोपाता पटघटकरटहाटादय किरीटादेर्बाधित गोत्रेति गोत्रवराः तस्मिन्नाख्यास- तापेपाते गोत्राख्याऋषिसज्ञका गोत्रस्यादिपुरुषा येप्रवराध्यायपठिता येप्यन्येअपत्यप्रत्ययविनागोत्रवाचित्वेनलोकेप्रसिद्धास्तेपुसिस्यु पथा वसिष्ठ. गोत्रभ- आक एवकश्यपवत्सादय. चरणानावेदशाखानाआह्वया नामानिपुसिस्यु यथा कठक बह्वृचइत्यादय. १५

नाम्निसज्ञाया अकर्त्तरिचकारके भावभावेत्रचविहितास्तेघञादय सप्तप्रत्ययाःपुंसिस्युः भावेचेतिचकारादसज्ञायाचघञ् गृहीतः घञनायथा प्रास्यतइतिप्रासः कर्मणिघञ् वि
दतिअनेनवेद. प्रपतन्त्यस्मात्प्रपात भाव.पाक. घञिचजोरितिकुत्व त्याग.रोग अच् यथा जयः चय.नयः एरच् अप्यथा कर गरः लषः लव नङ् यथा यज्ञः प्रश्न याच्ञेत्यत्र
तुपुंस्त्वबाधित नङ्उपलक्षणार्थत्वात् स्वपोनन् स्वप्न स्वप्नसवेशइत्यपीतिवापुंस्त्वसिद्धिर्वेध्या णप्रत्ययोयथा न्यादः नेोणचेतिसूत्रेण घप्रत्ययोयथा उरच्छद अथुच्य
था वेपथु ल्युरितिकर्त्तरिनंद्यादिन्स्तु पुंसिस्यात् यथानंदन रमण. मधुसूदनः भावेपृथ्वादिभ्योयइमनिच् सपुंसिस्यात् यथा पृथोर्भावि. प्रथिमा महिमा भावइतिकिं दृणोतीतिवरिमा पृथ्वी-
भावेइतिशब्दोदेहलीदीपन्यायेनपूर्वत्रपरत्रचसबध्यते भावेकोयथा आकूत्य स्फीतिक ग्रस्थः घञर्थेकः प्रादितः अन्यतश्चपरोघुसंज्ञोधातुस्तस्माद्विहितःकिःप्रत्यय पुंसिस्यात

**नाम्न्यकर्त्तरिभावेचघञजब्नाङ्णघाथुच ल्युःकर्त्तरीमनिच्भावेकोघोःकिःप्रादितोन्यतः १५ द्वंद्वेश्ववडवावश्वबडवानसमाहृते ॥ कां**
**त.सूर्येंदुपर्यायपूर्वोयःपूर्वकोपिच १६ वटकश्चानुवाकश्चरल्लकश्चकुडंगकः**

दाप् दैपौविनादारूपोधारूपश्चधातुर्घुसज्ञक प्रादिर्नोयथा प्रधि निधि वि-
धि. आदि आड्पूर्वेदाधातु किप्रत्यय अन्यतोयथा जलधि कर्मण्य धिकेतिकिः इषुधेस्तद्वयोरितिबाधितत्वं १५ असमाहृते समाहारादन्यत्रद्वंद्वेद्वंद्वसमासेश्ववडवो अश्वश्च-
वडवाच्पुंसिस्याता तथैवाश्वबडवान् अश्ववडवौइतिद्विवचनमतत्वं समाहारेतुअश्ववडवंक्लीबं विभाषावृक्षमृगेतिवैकवद्भावः सूर्यचंद्रपर्यायपूर्वक कांतशब्दःपुंसि यथा
सूर्यकांत चंद्रकांतःअयस्कांत.अर्ककांतेंदुकांतलोहकांताइतिपर्यायास्युः १६ वटक. वटति वटवेष्टने माषपिष्टविकारइत्यर्थ अनुवाक.अनुउच्यते वचभाषणे कर्मणिघञ् कु
त्वं अनुवाकोवेदावयव.रल्लक लल्लकइत्यपि रलयोरेकत्वं ललईप्सायांसपदादि. लक्यते लकआस्वादने पुंसीतिघ रल्लचासौलकश्च पक्ष्मकंबलपर्यायवाचकोपि कुडंगकः
कुटति कुटकौटिल्ये क्विप् कुद्अगमस्य कुडगकइतिक्वचित्पाठः कुडंगकोवृक्षलतागहनमितिगुरव ॥

१

पुरकसुमासरवनति पुसारवन्यनेवा खलु अवदारणेड पुरवश्च बाणावयवइत्यन्ये॰ न्युंख न्यूख्यते उखिगतौ पुंसीविध सामवेदेनिपातितओंकार न्युखइति ह्रस्वोका रोपि तदुक्तमेदिन्या पुरवस्सम्यग्मनोज्ञेचसाम्न षड्भवर्णेपिचेष्टि सक्षुक्र ससुक्रम्यते गम्त्युगतौड ससुद्रकपर्यायवाचकइत्यर्थ विर वेरति विरआक्रोशे इगुपेतिक तदुक्तमेदिन्या विटोद्रोरबदिरेषिंगेमूषिकेखादिरेपिचेति विटोधूर्त पट्ट काष्ठादिरचितआसनविशेष पटति पस्यतेवा पटगतौ र तदुक्तंहैमे पट्ट पषणपाषाणेव्रणा दिनाचबंधने चतुष्पथेपराजादिशासनांतरपीठयोरिति धट तरूधते तरुच्छाये तस्यघ घन्यतेवा घनशब्दे तदुक्तमेदिन्या घटोदिव्यतुलायास्यान्नदीचीरेचवासस इति परिसार्थतुलायानधट सूरिभिरिष्यतइतिविश्वश्च खट खटकायाधः तदुक्तंहैमे खटोधकूपकफयो प्रहरांतरटंकयोरिति १७ कोद्दार कुल्यते कुद्द छेदने प्रता

पुरवोन्यूरव ससुक्रश्चापिटपट्टधटा खटा १७ कोद्दारघट्टहट्टाश्चपिडगोडपिचंडवत् गडु करडोलगुडोवरंडश्चकिणोघुण १८

पनेवा बाहुलकादारःगुणः तदुक्तरभसे कोद्दारोनागरेकूपेपुष्करिण्याश्चपाटके इति घट घट्यतेस्मिन् घट्टचलने हलइतिघञ् घाटेतिलोकावदंति केचित्तु कोद्ड अरघट्ट इति छितात्कोद्दुर्गपुरे अरघट्ट कूपभेदइति अरैश्चक्रावयवसमै काष्ठविशेषैर्घट्यते स्थ्यने अरघट्ट कूपाज्जलनि सारणार्थवटीयत्रराहाटइत्यन्ये हट्ट हट्यतेस्मिन्हटदीप्तौ बहुलट आपणइत्यर्थ पिड षंगादिसयानवाचक स्यात् पिंड्यते पिंडयतेवा पिडिसंघाते अन्यत्रापि डोबालेबलेसाद्रेदेहगारैकदेशयोरित्यन्ये॰ गोड गोरडश्च नाभि गोडोपा भरुजातौचदूनाभौचसमतइतिरूढ पिचंड उदरं पिचंडइत्यपि अपिचंडतेनेनान्नवा चंडिकोपे घञ अलोप तदुक्तमेदिन्या शस्त्रेपिचंडउदरेपशोरवयवेपुमानिति पिचंडवत् गडयोरप्युसीत्यन्वय गडु गलगर गडति गड्यतेवा गडसेचने बहुलड गडु पृष्ठग्रन्थेकुब्जइतिविश्व करड वशादिकृत पात्रविशेष क्रियते कृञ् अडन् तदुक्तंहैमे करडो मधुकोशेसौकारडवेदलारकइति खगदोषशादिदक्षगति खासगेउडन्च करडोधस्तरोग वणोति क्रियतेवा बम्बरपो अडन् करडोप्य[illegible]कोण[illegible]न्ये॰ किण

१८

ते कणगतौ पचाद्यच् पृषोदरादि. किणोमांसग्रंथिभेदः व्रणजंचिन्हंच घुण. घोणते घुणभ्रमणे इगुपेतिकः तदुक्तंरत्नकोशे घुणःस्यात्काष्ठवेधकइति काष्ठकृमिरपि १८ दृतिः द्रियते दृङ् आदरे तदुक्तंमेदिन्या दृतिश्चर्मपुटेमत्स्येनेति चर्मपुटकइत्यर्थः. सीमंतः केशविन्यास. शकंध्वादिः हरितः हरति ह्रियतेवा हृञ् हरणेइतिप्रत्ययः हरित्पालाशवर्णः तदुक्तंमेदिन्यां हरिद्दिशिस्त्रियांपुंसिहयपर्णविशेषयो. अस्त्रियांस्यात्तृणेचेति रोमंथः पृषोदरादि पश्वनाचर्वितचर्वणं उद्गीथः उद्गीयते गैशब्दे थक् ईत्व उद्गीथः प्रणवः सामवेदध्वनिरित्यरुणः बुद्बुद. जलविकार बुदित्यव्यक्तध्वनिंबुंदति करोति उबुंदिरनिशाणे मूलविभुजादित्वात् केनलोप कासमर्दः गुल्मभेदः अर्बुदः अरंबुंदति उबुंदिर केनलो : अर्बुदोमांसकीलेस्यात्पुरुषेदशकोटिषुइतिमेदिनीकारः अर्दनि अर्दगतौ रश्मिः कुंदः स्कुंदते स्कुंदिआप्रवणे अच् पृषोदरादि. तदुक्तंहेमे कुंदोमाघ्येस्त्रीसुकुंद स्त्रामिनिध्यंतरेषुनाड

# दृतीसीमंतहरितोरोमंथोद्गीथबुद्बुदाः कासमर्दार्बुदःकुंदःफेनस्तूपोसयूपकौ १९ आतपःक्षत्रियेनाभिःकुणपक्षुरकेदराः पूरक्षुर प्रचुरकाश्च

ति फेनः जलविकारः स्फायते स्फायीवृद्धौ स्फेनमीनावितिसाधु स्तूपः वटकादिः स्तूयते ष्टुञ् स्तुतौ स्तूप्यतेवा ष्टुपसमुच्छ्राये एतौपूपश्च पुनाति पू- १९ बाहुलकात् पक् गुरवस्तूपशब्दंपठंति यौति यूयतेवा यूमिश्रणेऽमिश्रणेच १९ आतपः आतपति तपसंतापे अच् क्षत्रियेनाभिः स्यात् क्षत्रियवाचीनाभिशब्द. पुंसीत्यर्थ. कुणपः कुणंपाति पिबतिवा तदुक्तंमेदिन्यां कुणपः पूतिगंधोशवेपिचेति क्षुरः क्षुरति क्षुरविलेखने इगुपेतिकः वपनशस्त्रमिति तदुक्तंमेदिन्यां क्षुरःस्यात् १९ नद्रव्येकोकिलाक्षेचगोक्षुरइति केदरः व्यवहारपदार्थ. केदृणाति दृविदारणे अच् यद्वा केदीर्यते पूरः पूरयति पूरपूरणे पूरःस्यादंभसांवृद्धौ व्रणसंशुद्धिखाद्ययोरितिहेमः क्षुरप्रः बाणविशेषः क्षुरप्राति क्षुरइवप्रातिवा माप्नौ कप्रत्ययः सुकुटस्तुरखुरप्रइति कवर्गद्वितीयपठति चुक्रः शाकभेदः चक्यतेनेन चकतृप्तौप्रतिघातेच रक् उत्वंच चक्रस्त्वम्लेऽस्थलवेतसइतिहैमः॥

द्विहीने द्वाभ्यांस्त्रीपुंसाभ्यांहीनेनपुंसके अधिकारोयमाबाल्हकात् श्लोकद्वयेप्राधान्येननिर्दिष्टाखादिशब्दाः षड्विंशतिपर्यायैः सहक्लीबे अत्रान्यदितिबाधितात् यद-
न्यत्तदेवक्लीबमितिसावधानार्थमुक्तं चकाराद्रत्नाभरणादिसंग्रहः खमिंद्रियंव्योमच तद्यथा छिद्रंनभःवियत् इत्यादि खनति खन्यतेवा खनुअवदारणे ड खमिं-
द्रियेपुरेक्षेत्रेशून्यबिंदोविहायसि संवेदनेदेवलोकेशर्मण्यपिनपुंसकंइत्युक्तं० अरण्यंविपिनकाननमित्यादि अर्यते ऋगतौ पर्णपत्रंदलं पर्णपत्रंकिंशुकेचेतिमे-
दिनी पर्णयति पर्णहरितभावे अच् श्वभ्रं श्वभ्रयति श्वभ्रेविलेपतंके इत्युक्तं० पातालमित्यादीत्यर्थः हिमंतुप्रालेयमित्यादि हंति हंतेर्हिचेतिमन् तदुक्तमे-
दिन्या हिमंतुषारमलयोद्भवयोः स्यान्नपुंसकमिति उदकंतुजलंनीरं उनत्ति उंदीक्लेदने क्वुन् नलोपः शीतं श्यायतेस्म श्यैङ्गतौ क्तेसंप्रसारणं तदुक्तंमेदिन्यां

## द्विहीनेन्यच्चखारण्यपर्णश्वभ्रहिमोदकं शीतोष्णमांसरुधिरमुखाक्षिद्रविणंबलं २२

शीतहिमगुणेक्लीबंशीतलालसयोस्त्रिष्विति उष्णंतिग्ममित्यादि ओषति उषदाहे नक् तदुक्तंमेदिन्यां उष्णोग्रीष्मेपुमान्दक्षाशीतयोरन्यलिंगकइति शी
तोष्णंगुणेक्लीबंतद्वतित्रिष्वित्यर्थः मांसं मन्यते मनज्ञाने सःमनेदीर्घः मांसंस्यादामिषेक्लीबंकक्कोलीजडयोस्त्रियामित्युक्तं० रुधिरं रुणद्धि रुध्यतेवा रुधि
रआवरणे किरच् रुधिरोगारकेपुंसिक्लीबंतुकुंकुमासृजोरित्युक्तं० मुखं खन्यते खनतिवा तदुक्तंमेदिन्यां मुखंनिःसरणेवक्त्रेप्रारंभोपाययोरपि संध्यात्तरेना
टकादेःशब्देपिचनपुंसकमिति अक्षि अश्नुते अशूव्याप्तौ संघातेच अशोर्णित् द्रविणं द्रविणंनद्वयोर्वित्तेकांचनेचपराक्रमेइत्युक्तं० अक्षिशब्दात्नयननेत्रयोर्ग्रह
णं बलं बलते बलसंवरणे बलंगंधरसेरूपेस्थाम्निस्थौल्यसैन्ययोः पुमान्हलायुधेदैत्यभेदेवायसेपिच बलयुक्तेन्यलिंगेपिइतिरभसः २२

फल फलति फलनिष्पत्तौ पचाद्यच् फलहेतुकृतेजातीफलेफलकसस्ययो त्रिफलाधात्रककोलेशास्त्राग्रेहृतिलामयोरित्यकतः कनिसुहृत्सामितिपाठ नन
हलति हलविलेखने अच् हेम हिनोति हिमगतौ मनिन् हेमशब्दात्सुवर्णकनकादीनाग्रहण शल्व शलति शल्यतेवा शलगतौ उल्बादित्वात्साधुत्व लड
कर्मेन्द्रिया शल्वतामेयत्कर्मण्याचारेजलसन्निधाविति लोहलोहयति लुह्यतेश लुहगार्ध्ये पचाद्यच् लोहोस्त्रीशस्त्रकलहे जा गकेसर्वतेजसइत्यः स्करव स्करवय
ति इपुवयति स्करवडु रवतत्क्रियायामच् शर्मशालमित्यादि इ रवतु रुछ् कष्ट शर्म शोभते शर्मशीर्षो दशुपेतिक शर्मशब्दात् कल्याणकशलयोर्ग्रहणे अमरः

## फलहेमशल्वलोहस्करवदु रवशाभाशर्म जलपुष्पाणिलवणव्यंजनान्यनुलेपन २३

म नरशम जलपुष्पाणि जले सवानिपुष्पाणि कुमुदकमलकल्हारोत्पलादीनि लवण लुनाति लुञ्छेदने नद्यादित्वात्साधुत्व तद्गुक्तरसे लवणसैंधवादीनासिंधुर-
सौविदे रसे तद्युक्तेवान्यलिङ्गस्यान्मदीसेवदिस्त्रीस्त्रियामिति व्यजन व्यज्यतेनेन करणेल्युट अञ्जूव्यक्त्यादौ व्यजनतेमनेचिन्हेश्मश्रुण्यवयवेहनीत्यनेकत्वान्
व्यजनश्मश्रुचिन्हयो तेमनेःवयवेकारादापितिहेमश्च व्यजनविशेषाणामपि दधितक्रादिनाग्रह अनुलेपन अनुलिप्यतेनेन लिपउपदेहे ल्युट्करणे कुंकुमादि
अत्रबाधितादन्यतद्विकि आकाशोविहायायौ अटवीअरण्यानीत्यादिक एवमन्यदप्यूह्यं २३

कोट्योः अन्याकोटिशब्दाद्भिन्नायाशतादिसंख्यासाक्लीबेस्यात् द्विहीनेइत्यधिकारात्लक्षाशब्दः वाक्लीबे पक्षेस्त्रियां लक्ष्यते लक्षदर्शने अकारप्रत्ययः तदुक्तं
मेदिन्यां लक्षानपुंसिसंख्यायांक्लीबंव्याजशरव्ययोरिति तदितिलक्षवाचकनियुतमुच्यते नियूयतेस्म क्तप्रत्यय तदुक्तरत्नकोशे शतंसहस्रमयुतंनियुतंप्रयुतंमतं स्त्री
कोटिरर्बुदमितिक्रमाद्दशगुणोत्तरमिति असन्तमिसंतमुसंतमन्नंतचयत् द्व्यच्कद्विस्वरंतत्क्लीबे असंतयथा पयः तेजः यशः मनःअसुन्प्रत्ययान्ता इमे इसंतयथा स
र्पिः हविः ज्योतिः उसंतयथा वपुः धनुः यजुः अन्नंतयथा चर्म शर्म सामेति इमेमनिन्नंताः अनेनैव क्लीबत्वेसिद्धेपरतोयच्चर्मशब्दोपादानंतदस्यानित्यत्वज्ञापनार्थं अ-
यंग्रथोमर्मशब्दोपरिटिप्पण्यांस्पष्टइतिततएवद्रष्टव्यः तेनगुणाधिकारशोकेषुतमोराहौपुमानयमित्याद्यपिसिद्धं अकर्त्तरिकर्त्तुरन्यत्रयदनांतअन्येत्यंतेयस्यतत्क्ली

**कोट्याःशतादिसंख्यान्यावालक्षानियुतंचतत् द्व्यच्कमसिसुसन्नंतंयदनांतमकर्त्तरि २४ त्रांतंसलोपधंशिष्टंरात्रंप्राक्संख्यान्वितं पात्राद्यदंतैरेकार्थोद्विगुर्लक्ष्यानुसारतः २५**

बे यथागमन दानं मरणं करण वरण अकर्त्तरीतिकिं कर्त्तरिनक्लीबंतदाह नदयतिनदनः रम
णः २४ त्रांतक्लीबेयथा पात्रं वहित्रं वस्त्रं गात्रमित्यादि सकारोलकारोवा उपधा अन्त्यात्पूर्वोयस्यतत् सोपधयथा बिसं अंधतमसं अवसेत्यच् बुसलोपधयथा कूलं
तूलं शूलं मूलमित्यादि शिष्टमिति यदवशिष्टंप्रागुक्तादन्यत् तच्चप्रागुक्तयद्बाधित तदपित्रांतादिकक्लीबेइत्यर्थः शिष्टमितिकिं पुत्रः वृत्रः हंसः कंसः पनसः शाल
कालः गलः संख्यापूर्वपदोरात्रशब्दः क्लीबे रात्रान्हाहाः पुंसीतिपुंस्त्वप्राप्तेरपवादोयं त्रिरात्रं पंचरात्रं अहः सर्वैकेति अच् एवंगणरात्रमित्यपि संख्येतिकिं अर्धरात्रःपू
र्वरात्रः मध्यरात्रः अत्रापिअच् पात्रादिभिरदंतैरेकार्थो द्विगु क्लीबे पंचरात्रं त्रिभुवनं आदिशब्दात् चतुर्युगमित्यादि लक्ष्यानुसारतः शिष्टप्रयोगानुगमेनेत्यर्थः॥
पात्राद्यतस्यनेतिइतिकेनेत्यर्थः अनेनपंचमूलीत्रिलोकीत्यादिरपवाद एकार्थ किंपंचकपाल पुरोडाश द्विगुरयंतद्धितार्थः २५

ो

द्वन्द्वसमासस्यैकत्व समाहारे अव्ययीभावश्च क्लीबे उभयं क्लीबे द्वन्द्वैक्य यथा पाणिपादं शिरोग्रीवं मार्दंगिकपाणविकं द्वन्द्वश्चेति एकत्वं अव्ययीभावो यथा अधिस्त्री अ
धिहरि उपगङ्गं सामीप्येऽव्ययीभावः सङ्ख्याया अव्ययाच्च परः पथिन् क्लीबे यथा द्विपथं त्रयाणां पथां समाहारस्त्रिपथं चतुष्पथं अव्यययथा विपथं कापथं सङ्ख्याव्ययादिति किं ध
र्मपथं योगपथं समासान्तः अप्रत्ययः पथ इति समासान्तानुकरणं समासे षष्ठीविभक्त्यन्तात् परश्छाया क्लीबे स्याच्चेद्बहूनां सम्बन्धिनी तत्र्यैव तदुदाहरति वीनां पक्षिणां छा
या विच्छायमिति इक्षुच्छायं छायाबाहुल्ये इति क्लीबत्वं बहूनामिति किं कुड्यच्छाया कुड्यच्छायमिति वा स्त्रियाम् अनुवक्ष्यते विभाषा सेनेति विकल्पात् सहतो समूहवि
षये सभाशब्दः क्लीबे अत्रापि षष्ठ्या इत्यनुवर्तते अशाला चेति पाठेनेत्यर्थः यथा दासीनां सभा दासीसभं स्त्रीसभमित्यादि सहतानामिति किं दासीनां सभा दासीसभा वा

द्वन्द्वैकत्वाव्ययीभावौ पथः सङ्ख्याव्ययात् परः षष्ठ्याश्छाया बहूनां चेद्विच्छायं संहतौ सभा २६ शालार्थापि परा राजामनुष्यार्थाद् अरा
जकात् दासीसभं नृपसभं रक्षःसभमिमा दिशः २७ सी गृहमित्यर्थः सभा राजामनुष्यपूर्वा इत्यत्र अमनुष्यशब्देन रक्षःपिशाचादीनां ग्रहणाच्च क्ली
बत्वं २६ शालार्था गृहार्था अपिशब्दात् संहत्यर्था च या सभा सा अराजकात् राजशब्दविवर्जितात् राजामनुष्यार्थात् राजपर्यायात् अमनुष्यार्थात् रक्षआदिशब्दात् षष्ठ्य
न्तात् परा चेत् क्लीबे शाला गृहं अर्थोऽभिधेयो यस्याः सा शालार्था अराजकराजपर्यायात् यथा इनसभं प्रभुसभं अमनुष्यार्थाद्यथा रक्षःसभं पिशाचसभं अमनुष्येत्यत्र रू
ढ्या रक्षःपिशाचादीनां ग्रहणम् इति कौमुद्यां स्पष्टं राजकात् किं राजसभा राजपर्यायग्रहणात् नेह चन्द्रगुप्तसभा राजविशेषोऽयं पर्यायस्यैव इष्यते इति वचनात् इदं सिद्धं षष्ठ्या इ
ति किं नृपतिविषये सभा नृपतिसभा नृपा पतिर्यस्याः सा चासौ सभा चेति वा नृपतिसभा अमनुष्यार्थादिति किं दासीसभा दासीनां शालेत्यर्थः सभाशब्दस्य शालावाचित्वं
सङ्घातवाचित्वं च सभा राजेत्यत्र शालावाची अशाला चेत्यत्र सङ्घातवाची इदं द्वयं ग्रन्थे स्पष्टं इमा दिश इति दासीसभमित्यादीनि क्रमेण त्रीण्युदाहरणानीत्यर्थः न न दासीस

भमित्यादितुसहताविन्यस्यैवइतरेतुशालासहति साधारणे इदंक्लीबत्वनञ्कर्मधारयसमासेन भवति तत्पुरुषोनञ्कर्मधारय इत्यधिकारात् २७ तदादित्वप्रकाशने तयोःउप
ज्ञोपक्रमयो आदित्वप्राथम्यंतत्प्रकाशनेद्योतने उपज्ञांतउपक्रमांतश्चतत्पुरुष समास क्लीबेस्यात् उपज्ञोपक्रमतदाद्येति अनुशासनात् तत्रोदाहरणमाह उपज्ञायतइत्युप
ज्ञा कर्मण्यण् कोलज्ञातस्योपज्ञाकोपज्ञप्रजा कस्योपक्रम कोपक्रमलोक प्रजापतिना प्रथमस्रष्टत्वात्तेनादावुपज्ञाताप्रजेत्यर्थ. तदादित्वेतिकिं देवदत्तोपज्ञामृन्मृयः प्रकारः
मृत्प्रकारस्यानेककारणत्वात देवदत्तेतिसामान्यशब्देनचतदादित्वप्रतिपादनाभावेक्लीबत्वाभावः एवंदेवदत्तोपक्रमोरथः अत्रापिषष्ठ्याइत्यनुवर्त्तते उशीनराणांनामसु
मध्येषष्ठ्यंतात्परंकंथाक्लीबे संज्ञायांकंथोशीत्यनुशासनेनेत्यर्थः सौशमीनांकंथासौशमिकथ उशीनरादन्यत्र दाक्षिकंथानामस्र इतिकिं वीरणकंथा २८ नणकचि–

**उपज्ञोपक्रमांतश्चतदादित्वप्रकाशने कोपज्ञकोपक्रमादिकंथोशीनरनामसु २८ भावेनणकचिद्योन्येसमूहेभावकर्मणोः॥**
**अदंतप्रत्ययाःपुण्यसुदिनाभ्यांत्वहःपरः २९** ड्योन्येनञ्णश्चकश्चचित्चतेभ्यः अन्येयेतव्यदादयोऽदंताधातुप्रत्ययाः भावेविहिताःतेक्लीबे तत्रधातुप्र
त्ययायथा भवितव्य भाव्य सहित भुक्तं भवनीयमित्यपिनणकच्चिड्योन्यइतिकिं प्रश्न यजयाचेतिनङ् स्याद्भेणञ्चेतिण. आखूत्थःस्रपीतिकःसामर्थ्याद्भावे न
णकेतियञ् उपलक्षणंपाक भावेकिं कर्त्तव्योधर्मसंग्रह मृतोवैरीसमूहार्थे यथा भिक्षाणांसमूहोभैक्ष्यं गार्भिणं उभयत्राण् औपगवं गोत्रोक्षेतिवुञ् काक
मित्यादि समूहेण् भावेदतायथा गोर्भाव. गोत्व शुक्लेर्भाव.शौचं इगंताच्चलघुपूर्वात्इत्यण् कर्मणियथा शौक्ल्यं राज्ञःकर्मराज्य चौर्यं तल्प्रत्ययस्यतुस्त्रीत्व
मुक्तं तत्रतलंत. अयस्त्रियास्यात् इतिप्रमाणं पुण्यसुदिनाभ्यापरोविहितसमासांतोहन्शब्दः क्लीबे पुण्यस्रदिनाभ्यांमन्ह्. क्लीबतेष्टेतिप्रमाण अन्हाह्नांताइतिसुस्त्व
स्यापवादोय पुण्याह उत्तमैकेतिनिषेधात् अन्हादेशोनतत्रोत्तमशब्देनपुण्यस्यग्रहणं सुदिनाह स्रदिनशब्द प्रशस्तार्थ २९

क्रियाव्ययानां क्रियाणां अव्ययानां च भेदकानि विशेषणानि अपिशब्दात् क्लीबे एकवचनेन स्युः क्रियाविशेषणं यथा मृदु पचति सुखं तिष्ठति गृही सलिलं क्रीडति त
कृष्णं अव्ययविशेषणं यथा कमनीयं प्रातः रम्यं स्वः कठरवेणाह उक्थ उच्यते वच भाषणे थक् संप्रसारणं सामविशेष तोटकं तुटति तुट कलहकर्मणि ण्वुल् अ-
कादेश तोटक वृत्तभेदो रूपकभेदश्च चोचं उपभुक्तफलावशिष्टतालफलमिति केचित् कदलीफलमिति वा चोष्यते चुष भक्षणार्थो गतौ यद्वा चंचति चन्यते वा चचु
गतौ अच् धन्वा पृषोदरादि पिच्छं बर्हमित्यर्थः पिच्छ्यते पिच्छ खंडे सुक्तमिति पाठे शुच्यते शुच शोषणे शुच्यते स्म गृहस्थूणं गृहस्तंभः गृहस्य स्थूणा तिरीटं तरति तर्य
तेवा तॄ प्लवनतरणयोः कीटन् वेष्टनमिति शिरोभूषणमित्यन्ये मर्मसंधिस्थानं म्रियतेनेन मृङ् प्राणत्यागे सर्वधातुभ्यो मनिन् योजनं क्रोशचतुष्टयं युज्यते युजिर

## क्रियाव्ययानां भेदकान्येकत्वेऽप्युक्थतोटके चोचपिच्छगृहस्थूणतिरीटमर्मयोजनं ३० राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः ॥ माणिक्यभाष्यसिंदूर

योगे कर्मणि ल्युट् अनादेश योजनं परमात्मनि चतुष्कोश्यां च योगे च ३० राजसूयं राज्ञा सोतव्यो अभिषवकर्तृ राज्ञा निष्पादयितव्यः
यद्वा राजा लतात्मकः सोमः सूयतेऽत्र षुञ् अभिषवे राजसूयेति निपातनात्साधु वाजपेयं वाजपेयी सुरापेयमत्र अर्धर्चादित्वादुभयलिंगत्वं कवेः कृतौ वर्त्तमानं गद्य
गद्यते गद व्यक्तायां वाचि गदमदेति यत् पदसमूह इत्यर्थः पद्यं पादाः संत्यस्य मत्वर्थे यप् पद्यं सत्यस्येति वा तदुक्तं मेदिन्यां पद्यं श्लोके शुमान्द्र शूद्रे पद्या वर्त्मनि कीर्तितेति कवेः कृताविति किं गद्या वाक् पद्या पद्धतिः माणिक्यं मणिशब्देन कायति ज्ञनीयं कैशब्दे मूलविभुजादि मणिके मणिपूराख्ये नगरे भवमिति वा शाटिका
दित्वात्त्र रत्नभेद इत्यर्थः भाष्यं भाष्यते सूत्रार्थो येन भाष व्यक्तायां वाचि बहुलं करणे ल्युट् तदुक्तं सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः स्वपदानि च व-
र्ण्यंते भाष्यं भाष्यविदो विदुरिति सिंदूरं स्यंदते स्यंदू प्रस्रवणे ऊरन् संप्रसारणं च सिंदूरस्तरुभेदे स्यात्सिंदूरं रक्तचूर्णके सिंदूरो रोचनारक्तवेदिका धातकीषु ति

विश्वप्रकाशः रक्तवर्णभेदइत्यर्थः चीर वस्त्रभेद चीयते चिञ्चयनेरक्दीर्घ. तदुक्तंमेदिन्या चीरीझिल्ल्यांनपुंसकं गोस्तनेवस्त्रभेदेचरेरवालिरवनभेदयोरिति॥ चीवरं मुनिवास. शाक्यभिक्षुप्रावरणमितिस्वभूतिः पिंजर कायास्थिरद पक्ष्यादिबंधनगृहञ्च पिंज्यते पिजिसंपर्के बाहुलकादर. पिंजरमितिकेचित् तदुक्तकोशांतरे पिंजरो ऽस्यांतरेपीतेक्लीबंस्वर्णेचपीतकइति ३१ लोकायत लोकेआयतते यतीप्रयत्नेअच् इदमर्थेअण् संज्ञापूरणेतिनवृद्धिः चार्वाक्शास्त्रं हरितालं हरितेनालते अलभूषणादेोअच् तदुक्तंमेदिन्या हरितालंधातुभेदेस्त्रीदूर्वाकाशरेखयोरिति विदलं विदलति दलविदारणे पचाद्यच् वंशाकृतपात्रभेद. स्थालभांडभेदः स्थलत्यत्र ष्ठलस्थितो हलश्चेतिघञ् स्थालभाजनभेदेपिस्थालीस्यात्पाटलेरवयोरित्युक्तः० बाल्हिकं बल्हुदेशेभव अध्यात्मादि कुंकुमादीत्यर्थः बाल्हवमित्यपि नत्रभवइत्यण् इतिक्लीब-

**चीरचीवरपिंजरं ३१ लोकायतंहरितालंविदलस्थालबाल्हिकं इतिनपुंसक संग्रहः पुन्नपुंसकयोःशेषोर्धर्चपिण्याककंटकाः ३२**

शेषवर्गः ॥अथचिक्कसपर्यंता पुंसिक्लीबेचस्युः उक्तादन्यः शेषः यथाशंखपद्मौ निधिवाचकोपुंसि कंबुनलिनवाचनौतु पुन्नपुंसकयोः तथाऽत्यशब्दोपियत्पर्यायेबाधितस्तत्पर्यायाद्भिन्नश्चेत्पुन्नपुंसकयोरित्यर्थः ऋचोर्धमर्धर्चं पिण्याक तिलकल्कं पण्यते पणव्यवहारे पिनाकादयश्चेतिसाधुः पिण्याकोऽस्त्रीतिलकल्केहिंगुबाल्हीकसिल्हकेइतिमेदिनी कंटकं कंटति कटिगतेोण्वुल् रोमहर्षादित्यर्थः कंटक क्षुद्रशत्रौचकर्मस्थानिकदोषयोः रोमांचेचद्रुमांगेचकंटकोमस्करेपिचेतिविश्वः तदुक्तंचमेदिन्या कंटकोनस्त्रियांक्षुद्रशत्रौमत्स्यादिकीकसे नैयोगिकादिदोषोक्तौस्याद्रोमांचद्रुमांगयोरिति ३२

मोदक मोदयते मुदहर्षे ण्वुल् तदुक्तमेदिन्या मोदक खाद्यभेदे स्त्रीहर्षुके पुनरन्यवत् इति मोदको हर्षुले खाद्य इति हेमश्च नडक नडते नडि आघाते ण्वुल उपलापविशेष इत्यर्थ तदुक्तमेदिन्या नडक खजने फेने समासप्रायवाचिन गृहदारुतरुस्कधमायाबहुलकेष्वपीति दडक इत्यपि दड एव स्वार्थे कन् ॥ टक टङ्कयति टकि बधे अच् अश्मदारण इत्यर्थ तदुक्तमेदिन्या टङ्कोनीलकपित्थे च खनित्रे टङ्कने स्त्रियां जघायां स्त्रिपुमान्कोपे कोशाजि ग्रावदारण इति शाटक पट भेद शाटति शाटगतौ ण्वुल् कर्पट स्थानभेद वस्त्रभेदो वा खर्वटमित्यपि तत्रेत्थ खर्वति खर्वदर्पे अटन् प्रत्यय यत्रैकतो भवेद्ग्रामो नगरं चैकत स्मृत मिश्रं तु खर्वट

# मोदकस्तडकष्टक शाटक कर्पटोर्बुद पातकोद्योगचरकतमालामलकानड ३३

नाम नदीगिरिसमाश्रयमिति अर्बुद सख्याभेद अर्वति अर्व हिंसायां बाहुलकादुदच् अर्बुदो मासपरुधिदशाकोटिषु न स्त्रियां महीधर विशेषे ना इत्युक्त पातक ब्रह्महत्यादि पातयति पत्लृगतौ ण्वुल् उद्योग उद्योजन युजिर योगे घञ् उत्साह इत्यर्थ चरक वैद्यशास्त्रभेद चरति चरगतौ कुन् करक इत्यपि तत्र स्थूलवस्त्र त माल ताम्यति तमु ग्लानौ कालन् तदुक्तमेदिन्या तमालस्तिलके खड्गेतापिच्छे वरुणद्रुमे इति आमलक आमलक्या फल नित्यं वृद्धे इति मयट फले लुक् इति लुक् धात्रीफलमिति नड अवर्णिवर तृणभेदश्च नडति नड भ्रशे पचाद्यच् ३३

कुष्टं कुष्णाति कुषनिष्कर्षे क्थन् कुष्टंरोगेपुष्करेऽस्त्रीतिमेदिनीकारः कुष्टभेषजरोगयोरितिहेमः मुंडं मुडिखंडनेघञ् शिरःशीधुमद्यं शेतेनेन धुक्बुस्तं बुसउत्सर्गे भ्र
ष्टमांसं पनसादि फलासार भागश्च कश्चित्पुस्तमितिपाठः शास्तमितिकश्चित् क्ष्वेडित क्ष्वेड्यते ञिक्ष्वेडास्नेहणेमोक्षणयोः क्तः वीरकृतसिंहनादइत्यर्थः क्षेम कुशलं क्षि
पति क्षिपतिवा क्षिनिवासगत्यो· क्षिक्षयेवामन् जानीयान्मगलं क्षेमं क्षेमंलब्धार्थरक्षणमित्यक्तः॰ कुट्टिमं भित्तिभेदः कुट्टनं कुट्टछेदने घञंतात्इमप् कुट्टेननिर्वृत्तं कुट्टि
मोऽस्त्रीनिबद्धाभूरित्युक्तः॰ संगमं संयोगः गत्लगतौ गृहकुड्त्यप् शतमानं मानभेदः अर्मअक्षिरोग· ऋगतौमन् शबलं शबत्यनेन शबगतौ अलच् पाथेयंच शबलोऽस्त्री

## कुष्टंमुंडंशीधुबुस्तंक्ष्वेडितंक्षेमकुट्टिमं संगमंशतमानार्मशंबलाव्ययतांडवं ३४ कवियंकंदकार्पासंपारावारंयुगंधरम् ॥ ॥

संबलवत् कूलपाथेयमत्सरइतिमेदिनीकार· अव्ययं तदुक्तंमेदिन्यां अव्ययोऽस्त्रीशब्दभेदेनाविष्णौनिर्व्ययेष्विति तांडवं तंडुनाप्रोक्तं तेनप्रोक्तंइत्यण् ओर्गुणः अवादे
श नृत्यभेदइत्यर्थः ३४ कवियं कवते कुङ् शब्दे बहुलंइयः महाराष्ट्रभाषयाकडियाळीतिप्रसिद्धं नार्याकविरवलीनकवियंवानातुरगमुखभांडमितिवोपालित· कंदं
कदति कदिआल्हादने पचाद्यच् पद्ममूलादि तदुक्तंमेदिन्यां कंदोऽस्त्रीसूरणेसस्यमूलेजलधरेपुमाननिति कश्चित्कर्मेतिपाठ· कार्पासं वस्त्रयोनिभेद· करोति क्रि
यतेवा कृञ् पास पारयति पारकर्मसमासौ अच् यद्वा पार्यते समाप्यते कर्मानेन पुंसीतिघ· पारावारं नवारयति वृञ्वरणे पारावार·पयोराशौपारावारंतटद्वयइ
तिहेमः युगंधर युगधारयति धृञ्धारणे संज्ञायांभृइतिखच् कूबरमित्यर्थः॥

यूपं यज्ञाङ्गमादं स्रुवत्यस्मिन् सुमिश्रणे प दीर्घश्च प्रग्रीव प्रगताग्रीवायस्मिन् कुमशीर्षकमित्यर्थः शालायनं सुरङ्गालावा पात्रीव पात्रीवानिक यज्ञपात्रभेदः यूपभदः
इतिप्रसिद्ध यूपति यूपबधे इरापेतिक स्रुक्षापलकशूपस्तु ग्रहीपित्तकफेहितइत्यक्तवैद्यकात् चमसचिक्कसौ पात्रभेदौ तत्र चमत्यनेन चमुअदने असन् चेतत्यनेन चितौ
सज्ञाने बाहुलकात्कस तकारस्यक चिक्कण चिक्कयतिवा चिक्कस्यतिवा इत्यावृत्य २५ अर्धर्चादौ अस्मिन्वर्गेपुन्नपुंसकाधिकारेइतिवायत् घृतादीनांपुंस्त्वाद्यपाणि-
न्यादिभिरुक्तं नत्वैदिकवेदप्रसिद्धमित्यर्थः अतस्त्वादिहनोक्तं नलोकेप्यस्तिचेत् शेषवत् उक्तादन्य शेषस्तद्वदस्त शिष्टप्रयोगतोग्राह्यमित्यर्थः पाणिनिनापुंन्नपुंस-
कयोरित्यधिकारसूत्रावृतमृतसुस्तइत्यादपतुशासनप्रणीत नेनअयघृत इदघृतइत्यादिप्रयोगद्वयसाधित तेप्रयोगावेदेसति अतोत्रसविचारोनकृत लोकेपिसति

यूपप्रग्रीवपात्रीवेयूपचमसचिक्कसौ २५ अर्धर्चादौ घृतादीनांपुंस्त्वाद्यवैदिकध्रुव नत्रोक्तमिहलोकेपितच्चेदस्त्यस्तशेषवत् २६
इतिपुंन्नपुंसकसंग्रहवर्ग ॥ स्त्रीपुंसयोरपत्यान्ता द्विचतु षट्पदोरगा

चेत् लिङ्गमशिष्यं लोकाश्रयत्वात् इतिमहाभाष्यात् शिष्टप्रयोगादेवसर्व
लिङ्गनिर्णयइतितात्पर्यंग्राह्यमित्यर्थः इत्यस्याग्रेडेरव्यामिद इतिपुंन्नपुंसकसंग्रहवर्ग २६ अपत्यार्थेविहितायेणादयस्तदन्ता सर्वेस्त्रीपुंसयो स्यु यथाउपगो अपत्यपु
त्रऔपगव उपगोरपत्यस्त्रीऔपगवी एवमेववैदेहि गार्ग्य गार्गी स्त्रियापुंसित्त्वप्रयोगार्थ स्त्रीपुंसयोरित्यधिकृत्य अपत्यार्थेतद्धितेइत्युक्त औपगव औपगवी इत्युदार
णप्रदर्शित कौसुधाद्विपदश्चतुष्पदषट्पदवाचिन उरगवाचिनश्चजातिविशेषा स्त्रीपुंसयोः तत्रद्विपदजातिभेदोयथा मानुषःपुमान् मानुषीस्त्री ब्राह्मण ब्राह्मणी शू
द्र शूद्री अजादित्वात्टाप् षट्पदभेदोयथा भृग भृंगी उरगोयथा उरग उरगी नाग नागी स्त्रीयोगे सहपुमारव्या पुन्नामानिस्त्रीपुंसयो ॥

यथाइंद्र. इंद्राणी मातुलानीमातुल. तस्यस्त्रीमातुली आनुगतिकल्प पुंसि वर्तमानोमातुल. स्त्रीयोगात्स्त्रीत्वेपिवर्तते शूद्रस्यस्त्रीशूद्री मल्लकादयश्चस्त्रीपुंसयो मल्ल
क. पुष्पवल्लीभेद मल्लते मल्लधारणे ण्वुल् स्त्रियांतुमल्लिका मल्लिकातृणाश्चर्येपिपीनसृण्वाश्च भेदयोरित्यकत्तलात ३७ मुनि मन्यते मनज्ञाने मनेरुच्चेतिमाधु मुनि.अुम्मिन-
स्तिपादेधंगसेनतरोजिनेन्द्रत्यक्त० मुनिर्यतीमुदीलुन्द्र पिलायांगस्तिकिशाकद्रतिविश्व ऊर्मिरितिपाठ वराटक वरमटति अटगतौ कुन् कपर्दकइत्यर्थ स्त्रियांतुवराटिका
स्याति शोभनमतति अतसातत्यगमने इण् ग्रन्द्रि: नक्षत्रभेदइत्यर्थः वर्णक चंदनवर्णयति वर्णवर्णक्रियादोण्वुल् तद्कारासे लिंपनचदनेचवर्णकःपुनपुसकवर्णित॥ व
र्णकस्थानोस्त्रीतुचंदनेचविलेपने द्वयोर्नत्यादिसुस्त्रीस्याद्धुल्कर्षेकांचनस्यचेतिमेदिनीच झाटलि झटल्यातिलादाने बहुल्याड दन्यापुन्य किशाल वृक्षासइथा मोग्वाद

जातिभेदाःपुमाख्याश्चस्त्रीयोगैःसहमल्लकः ३७ मुनिर्वराटकःस्वातिर्वर्णकोझाटलिर्मनुः मूषासृपाटीकर्कन्धूर्यष्टिःशाटीकटीकुटी ३८
इतिस्त्रीपुंसग्रहः ॥स्त्रीनपुंसकयोर्भावक्रिययोःष्यञ्क्वचिच्चवुञ् औचित्यमौचितीमैत्रीमैत्र्यंवुञ्प्रागुदाहृतः ३९ नियमिन्द्र. मनु स्वायम्भु

वादि: मन्यते मनज्ञाने मृउन्यु मनोवामूषा तेजसावर्त्तनी मूषति मुषखंडने पचाद्यच् स्वर्णादिविलयनभांडमित्यर्थ. सृपाटी परिमाणभेद.सर्पति सृप्रगतौ बहुलकात् किलाद्या
गुणा गातः कर्कंधू. कर्कंदधाति अंडुइतिसाधुः बदरीफलमिति यष्टि.यजते यक्षप्रजाया क्तिन् कत्वोप:शाटी पटभेद शाटयतेचन्न कटी देहावयव कटति कटनयोदो अन्नजा
तिङीप.कुटी गृहकोष्ठक.कुटति कुटकौटिल्ये इगुपधात्क अत्रभृषा आकाशता साधनत्वात् ३८ इतिस्त्रीपुंसग्रहः ॥भावक्रिययो. भावेकर्मणिचवर्त्तमान ष्यञ् प्रत्ययोवुञ्
प्रत्ययश्चक्वचित्स्त्रीनपुंसकयोर्वर्तते तत्रष्यञ्प्रत्ययमुदाहरति औचित्यमिति उचितस्यभाव औचित्य औचितीत्वषिल्वात्ङीष् यन्नोप मित्रस्यभावः मैत्र्य मैत्री ष्यंसाम
ष्यंसाषयो वा आर्हत्यां आर्हिति वुञ्प्रत्ययस्तुचैरमैथुनिकादिसुञ् इत्यं प्रागुदाहृत तथापिथुनस्यभाव कर्मवामैथुनिका मैथुनकुन्न मनोज्ञादित्वात् वुञ् ३९

षष्ठ्यन्तमाक्पदाः सेनादय तत्पुरुषेस्त्रीनपुंसकयो स्यु षष्ठ्यंत षष्ठीविभक्त्यन्तमाक्पदं यासांताः यथा नृणांसेना नृसेनंत्वेतिविकल्पान्नृसेनापिश्वनांनिशाश्वनिशं गवां शालागोशाल वृक्षस्यछायावृक्षछाय यवानांस्कुरायवस्कुरं विभाषासेनास्कुराछायाशालानिशानांक्लीबलबोध्यतदभावेस्त्रीत्व इतरदति एवमन्यत्राप्युदाहर्तव्यमि त्यर्थः दिकृउदाहरणभिद ५० आबंतोत्तरपदोनंतोत्तरपदश्चद्विगुसमासः अपुंसिस्त्रीनपुंसकयो स्यात् निषिद्धलिंगशेषार्थमितिपरिभाषणात् अन्नंतोत्तरपदस्ययोअ त्य नकारस्तस्यलुप् लोपश्चस्यात् आबंतात्यपदमुदाहरति त्रिखट्वमिति तिस्त्रःखट्वा समाहृताः त्रिखट्वंत्रिखट्वी अन्नंतोत्तरपदोयथा त्रयाणांतक्ष्णांसमाहार त्रित क्ष त्रितक्षीन ततक्षन् शब्दस्यान्त्यनकारोलुप आबंतोवा अनोनलोपश्चवाद्विगुस्त्रियामित्यनुशासनात् इमेसाधव ५१ इतिस्त्रीनपुंसकलिंगसंग्रह ॥त्रिष्विति

**षष्ठ्यन्तमाक्पदा सेनाछायाशालास्कुरानिशा स्याद्वानृसेनंश्वनिशंगोशालमितरेचदिक् ५० आबन्नंतोत्तरपदोद्विगुश्चापुंसि नश्चलुप् त्रिखट्वंचत्रिखट्वीचत्रितक्षंचत्रितक्ष्यपि ५१ इतिस्त्रीनपुंसकशेष ॥त्रिषुपात्रीपुटीवाटीपेटीकुवलदाडिमौ ॥इति त्रिलिंगशेषसंग्रह ॥**

अयमधिकारः पात्र्यादिदाडिमावाषट्शब्दा त्रिषुलिंगेषुज्ञेया. यथा पात्री पात्रं पात्र पाति पारक्षणे तदुक्तमेदिन्यो पात्रमात्रेत्रिषुक्लीबं वस्तुवादोराजमंत्रिणीति पात्रतुकूलयोर्मध्येपर्णेनृपतिमंत्रिणि योग्यभाजनयोर्यज्ञभांडेनाट्यानुकर्तरीतिहेम इत्यादि एवऊत्य पुटी पुटति पुटसंश्लेषणे इगुपधात्क गौरादि वाटी वास्थले वटवेष्टने ण्यंतात् कर्मणिघञ् तदुक्तंहैमे वाट पथिदृतोवाटवरंडे गात्रभेदयो वाटीवास्तौगृहोद्यानकस्योरिति पेटी पिट्यते पिटशब्दसं-घातयो घञ् कुवल बदरीफल कौवलति वलविस्तरौ पचाद्यच् तदुक्तमेदिन्या कुवलनोत्पलेमुक्ताफलेपिबदरीफले कुम्भलेमुकुरेपुंसिनद्योनिरक्तांवरद्विव दाडिमः दलनदाल दलविदारणे भावेघञ् दालेननिर्वृत्त भावमस्त्यातादिमप् डलयोरैकत्व ॥इतित्रिलिंगशेष ॥

द्वंद्वैकत्वस्याव्ययीभावस्यचलिंगंप्रागुक्तं स्वप्रधाने उभयपदप्रधानेइतरेतराख्ये द्वंदसमासे तत्पुरुषेच तदेवपरलिंगंस्यात् परपदस्यलिंगंतत्परलिंग यत्परस्मिन्नपद-
स्यलिंगतदेवलिंगमित्यर्थ द्वंद्वेयथा कुक्कुटमयूर्यौ मयूरीकुक्कुटौ तत्पुरुषेयथा धान्येनार्थोधान्यार्थः सर्पाद्भीतिः सर्पभीतिः सर्पभयं अत्रप्रमाणपरवल्लिंगं तत्पुरुषयो
रिति ४२ उक्तस्यतत्पुरुषलिंगस्यापवादमाह अर्थेति अर्थांताः अर्थोंतेयेषांते परोपगाः परगामिनः वाच्यलिंगाइत्यर्थः यथाद्विजायार्थेद्विजार्थः सूपः द्विजा-
र्थायवागूः द्विजार्थं पयः अर्थेननित्यसमासोविशेष्यलिंगताचेतिवक्तव्यमितिवार्तिके प्रेति प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः परंविशेष्यमुपगच्छंतीत्यर्थः तत्रप्रादिपूर्वो
यथा अतिक्रांतोमालामतिमालोहार अतिक्रांतामालामतिमालेयंअतिमालमिदं अवक्रुष्टःकोकिलयाअवकोकिलः अलंपूर्वोयथा अलंकुमार्यै इत्यलंकुमारिर

परंलिंगंस्वप्रधानेद्वंद्वेतत्पुरुषेऽपितत् ४२ अर्थांताःप्राद्यलंप्राप्तापन्नपूर्वाःपरोपगाः तद्धितार्थोद्विगुःसंख्यासर्वनामतदंत

का॰ ४३ य अलंकुमारिरिय परपदलिंगनिषेधवार्तिके अलंग्रहणात् समासः प्रामजीविकोद्विज ग्रामजीविकास्त्री ग्राम जीविकमिदं एवमापन्नजी
विकः तद्धितार्थोद्विगुर्वाच्यलिंगः पंचकपालः पुरोडाशः पंचकपालंहविः इदंसर्वंद्विगुप्राप्तापन्नालंपूर्वगतीतिवार्तिकमूलकं संख्याशब्दाःसर्वनामसंज्ञकास्तदंत
काश्चपरलिंगभाजः संख्यायथा एकःपुमान् एकंकुलं द्वौपुमांसौ द्वेस्त्रियौ कुलेच त्रयःपुरुषाः तिस्रः स्त्रियः त्रीणिकुलानि एवंचत्वारः चतस्रः चत्वारि षट्स
ंज्ञकान्वक्ष्यति विंशत्यादीनांलिंगं द्वितीयकांडेउक्तं शतादिकानांतु नपुंसकसंग्रहे सर्वनामयथा सर्वोदेवः सर्वानदी सर्वंकुलं एवंपरःपुमान् संख्यांतकोयथा
ऊनत्रयः ऊनतिस्रः ऊनत्रीणि सर्वनामांतकोयथा परमसर्वः परमसर्वा परमसर्वं ४३

अदिङ्नाम्नाबहुव्रीहिः अन्यलिंगभाक् तदुदाहरणं स्वयमुन्नेयं यथा चन्द्रा भार्या यस्य स चन्द्रभार्यः बहुधनः बहुधना बहुधनं अदिङ्नाम्नामिति किं दक्षिणस्याः पूर्वस्याश्चदि- त
शोरन्तरालदक्षिणपूर्वा दिगन्नमितिबहुव्रीहिः गुणयोगेन द्रव्ययोगेनक्रियायोगेनच यउपाधिर्विशेषणं तेनधर्मिणिप्रवृत्तास्तेधर्मलिंगभाजः गुणयोगेनयथा गन्धवती पृथ्वी
गन्धवानश्मा गन्धवत्कुसुमं शङ्कु फइत्यादीन्युदाहरणयोग्यं द्रव्ययोगेनयथा दण्डिनीस्त्री क्रियायोगेनयथा पाचिकास्त्री ४४ असंज्ञायां कर्तरिकृत्प्रत्ययः परोपगाय यथा
करोतीतिकर्त्री कर्तापुमान् कर्तृकलत्रं कर्तृलिंगं भवति असंज्ञायामिति किं भर्ता हरिः कर्तरीति किं कृतिः कर्मणि कर्तरिचवर्तमाना कृत्यप्रत्ययाः परगामिनः कर्मणियथा कर्तव्या
भक्तिः कर्तव्योधर्मस्त्वया कर्तरियथा वसतीतिवास्तव्योयं वसेस्तव्यत् कर्तरिणिच्चेकर्तरिप्रत्ययः वास्तव्यासावास्तव्यं तत् कर्तरिकर्मणीति किं भावेतु एधितव्यं त्व-

**बहुव्रीहिरदिङ्नाम्नामुन्नेयं तदुदाहृतं गुणद्रव्यक्रियायोगोपाधिभिःपरगामिनः ४४ कृतःकर्तर्यसंज्ञायांकृत्याः कर्तरिकर्मणि॥अ णाद्यन्तास्तेनरक्ताद्यर्थेनानार्थभेदकाः ४५ षट्संज्ञकास्त्रिषुसमायुष्मदस्मत्तिङव्ययं**

याऔत्सर्गिकं एकवचनं क्लीबत्वंच तेनरक्तरागात् इत्या
द्यर्थेविहितायेअणादयस्तदन्ताः शब्दानानार्थानांभेदकाः अनेकार्थविशेषणभूताः विशिष्टलिंगाइत्यर्थः यथाकौसुम्भंवस्त्रं कौसुम्भीशाटी कौसुम्भःपटः कौसु
म्भवासः रक्ताद्यर्थइत्यादिशब्दान्मथुरायाआगतोमाथुरोयं इयमाथुरी अणाद्यन्ताइत्यादिशब्दाद्ग्रामेभवाग्राम्यास्त्री ग्राम्यःपुमान् अत्र यःप्रत्ययः ४५ षट्संज्ञकाः
पञ्चनान्तसंख्याकतिशब्दश्चत्रिलिंग्यासमःसरूपाणिस्युर्बहुषुवर्तमानाअनोबहुवचनान्ताश्चेत्यर्थः यथा षडिमे षडिमाः षडिमानि पञ्चभिरेताभिः कतिपुमांसः कति
स्त्रियः कतिकुलानि किमःसंख्यापरिमाणेडतिश्चेतिडतिप्रत्ययोलिंगसामान्येइतिभावः युष्मदस्मच्छब्दौ तिङन्तपदान्यव्ययानिचत्रिषुसमानि युष्मच्छब्दोयथा
त्वंस्त्री त्वंपुमान् त्वंकलत्रं अस्मच्छब्दोयथा अवांपुमांसौ आवांस्त्रियौ आवांकलत्रे ङेप्रथमयोरम् त्वमावेकवचनेइतिसूत्रस्यभाष्यात् युष्मदस्मदोर्लिंगसत्ता

बोधनेपिलिंगबोधकप्रत्ययानुत्पत्तेर्नरूपभेदइति साम आकमित्यत्रअलिगे युष्मदस्मादीत्यस्यसलिगभेदकंविनाकेवलेलिंगंनप्रतीयतेइत्यविरोधः निङ् यथा स्थालीभवति घटोभवति पात्रभवति एवदाराभवंतीत्यादि आख्यातस्यकारकबोधकत्वेपिलिगकार्ययोग्यत्वंसत्वाभावाच्चक्रियायाः अव्ययं यथा उच्चैः दाराः उच्चै स्त्री उच्चैःकलत्र उच्चैः गृह परमिति विरोधेविप्रतिषेधेसतिपरंलिंगानुशासनंप्रवर्त्तते यथागानुपशब्दस्यकपणभमरोगानाइति प्रागुक्तविधिनापुंस्त्वेएव प्राप्तेसतिक्लीबतु षट्पदेत्यनेनोत्तरप्रोक्तेनस्त्रीपुंसविधिर्निश्चय यथागानुषीयगानुषोयमिति शेषमिति शेषमात्रानुक्त अभिधानादिक शिष्टानामहाकवीनां भाष्यकारादीनाप्रयोगतोज्ञेयं यह्रा अनुक्तश-

पशेषविरोधेशेषंतुज्ञेयंशिष्टप्रयोगतः ४६ इतिलिंगादिसंग्रहवर्गः ॥इत्यमरसिंहकृतौनामलिंगानुशासने कांडस्तृतीयः सांगोपसामान्येनसमर्थितः ४७ इत्यकृत्व्यपहारार्थनामलिंगानुशासन शब्दानानगतावततावपीद्धृत्य्हस्पती ४८ ॥ ॥

ब्दलिंगंशिष्टप्रयोगतोबोद्धव्यंलिंगमशिष्य लोकाश्रयत्वाल्लिंगस्येतिभाष्योक्तेरित्यर्थ ४६ उक्त उपसहरति इत्यमरकोशेतृतीयकाडसमाप्त ॥ अनल्पाध्वरसंपत्तिभरव्यातयशासःकृत श्रीसखारामनाम्नोग्निहोत्रिणःसुमहायशा. १ विठ्ठलाभिधयाख्यातोदत्ताज्ञःकोशविग्रहे विनायकस्यपुत्रेणबालव्युत्पत्तिसिद्धये २ पंडितेत्युपनाम्नावैहरिणाकृतविग्रहः स्वकोशइवकोशोयशब्दजातप्रवर्तक. ३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

हा ग्रंथ विठ्ठलसखाराम अग्निहोत्री यांचे वारसाचे परवानगीने विनायकविठ्ठल रानडे यांणीं विद्वानाकडून शुद्ध करवून पुणे पेठ बुधवार येथें आपल्या दत्तप्रसारक छापखान्यांत छापिला. तारीख २८ माहे अगष्ट सन १८८१ इसवी.  किंमत ५ रुपये.

